SARASVATĪ BHAVANA GRANTHAMĀLĀ

( *Vol. 105* )

Chief Editor

DR BHĀGĪRATHA PRASĀDA TRIPĀTHĪ 'VAGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

Varanasi



# NĀNAKACANDRODAYA MAHĀKĀVYAM

*by*

**SHRĪ DEVARĀJA SARMĀ**

Edited by

**Pt. VRAJANĀTHA JHĀ**

VARANASI

1977


Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available at—
Publication Section
*Sampurnanand Sanskrit Vishvavidyalaya,*
Varanasi-221002.

Printed : 500 Copies
Price : 74-60 p.

Printed by—
G. S. Upadhyaya
Manager
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi

सरस्वतीभवन-ग्रन्थमाला

( १०५ )

मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



देवराजशर्मप्रणीतं

# नानकचन्द्रोदयमहाकाव्यम्

सम्पादकः

पं० व्रजनाथझाः

शिक्षकचर, अन्ताराष्ट्रियशिक्षणविभागे

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य

वाराणस्याम्

२०३४ तमे वैक्रमाब्दे    १८९९ तमे शकाब्दे    १९७७ तमे ख्रैस्ताब्दे

प्रकाशकः,
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी।

प्राप्तिस्थानम्—
प्रकाशनविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी-२२१००२.

मुद्रितानि : ५०० प्रतिरूपाणि
मूल्यम् : ७४.६० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
मुद्रणालयव्यवस्थापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी।

# प्रास्ताविकम्

द्वादशख्रीस्तशताब्दादारभ्य मौहम्मदशासनाद् भारतीयसंस्कृतिः संक्रमण-भूमिमध्यास्ते स्म। भारतीया संक्रमणमिदमसहमाना प्रतीपमाचरन्ति स्मेति प्राप्तेऽपि भूभागाधिकारे भारतीयजनहृदयशासनं कर्तुं न प्राभवन् मौहम्मदाः। तदर्थं कापि सुदृढा दर्शनभूमिरपेक्ष्यते, यत्र स्थित्वा दर्शनान्तरीयप्रभावप्रभावितान् जनान् स्वकीयदर्शनं प्रति समाकृष्टुं शक्नुयुः प्रतिपक्षिणः। मौहम्मदैः स्वकीयं सूफीदर्शनं प्रचारयितुं प्रक्रान्तम्, प्रादेशिकभाषया भारतीयकथाधारेण ग्रन्थोऽपि लिखितः सूफीदर्शनप्रचारधिया। केचन सूफीदर्शनसमाकृष्टचेतसो भारतीया जना धावितुमारब्धास्तस्यामेव दिशि। केचन विङ्कर्तव्यविमूढा अवस्थिताः। इत्थं शताब्दद्वयावधौ भारतीयजनताया दिङ्मूढता जाता।

अस्यामेव संक्रमणवेलायां ख्रीस्तचतुर्दशशताब्दे वाराणस्यां स्थितेन मौहम्मदभारतीयसंस्कृतिसेतुभूतेन रामानन्देन समन्वयस्थापनाय महान् प्रयत्नः समास्थितः। प्रतिप्रदेशं महात्मभिर्देशकालस्थित्यनुसारेण समन्वयात्मकस्य भारतीयदर्शनस्य प्रचारः समारब्धः। पञ्चदशख्रीस्तशताब्दस्य तृतीये चरणे पाञ्चालप्रदेशीयशलातुरमण्डलान्तर्गतरावीनदतटवर्तिनि तलवण्डीनामके ग्रामे भारतीयजनाब्धिसुखदो नानकचन्द्रो जनिं लेभे। बहुदेवोपासनापरतया भारतीयानां जीवनैक्यं देशैक्यं च विघ्नाय कल्पेते स्म। मौहम्मदानाम् एकेश्वरवादस्तेषा-मैक्याय विनयाय च संपद्यते स्म। तदीयेन तेन विजयेन प्रथमतः सिन्धुपाञ्चाल-प्रदेशौ प्रभावितौ। परतश्च निखिलो भारतभूमिभागः।

रामानन्दशिष्यकबीरवत् कस्मिंश्चिदपि शिक्षासंस्थाने शिक्षणमनाप्यापि बाल्यत एवात्मदर्शनयोग्यतासम्पन्नतया नानकचन्द्रेण विशुद्धस्य औपनिषदस्यै-केश्वरवादसिद्धान्तस्य जागरणाय बहुदेवपूजा निन्दिता। भारतीयजना इव मौहम्मदा अपि तदीयकर्मकाण्डाय पर्यालोचिताः। विभिन्नधर्मसंघर्षोन्मूलनं तदीयं लक्ष्यमासीत्। नानकचन्द्रेण जातिकुलबन्धनानां नैरर्थक्यं प्रत्यपादि। परिणामतो मौहम्मदा अपि तदीयशिष्यतां प्रपन्नाः। ब्राह्मणा अपि तदनुयायिनः सवृत्ताः। गुरुनानकस्यान्यतमशिष्यो द्वारकादासो दीर्घजीवी भूत्वा केशकोशकङ्कतिकाः समर्पितवान् गुरुगोविन्दसिंहाय। द्वारकादासस्यैवान्यतमः शिष्यो वाराणसी-वास्तव्यः शाण्डिल्यगोत्रत्रिपाठिरघुपतिशर्मात्मजो देवराजशर्मा नानकचन्द्रोदय-महाकाव्यमरीरचत् सप्तदशे ख्रीस्तशताब्दे।

तदानीन्तनलोकभाषाग्रथितस्य गुरुनानकोपदेशस्यामरत्वाप्त्यै देवराज-शर्मणा संस्कृतगिरा सुगुम्फितं महाकाव्यमिदम्। इह गुरुनानकस्य सम्पूर्णं जीवन

चित्रितम्, तदीयाश्च सर्वे सिद्धान्ताः काव्यभाषायां वर्णिताश्चेतांसि चमत्कुर्वते विचक्षणानाम्। गुरुनानकजीवनमधिकृत्य कस्याञ्चिदपि भाषायां रचितं महाकाव्यं न दृष्टिपथमुपगतम। दृश्यन्तामिह महाकाव्ये देववाण्या कृताः शृङ्गाराः नानककालिक्याः संस्कृतेः। ललनीयं काव्यलालित्यम्, स्वाद्यन्तां सुभाषितानि, मननीयानि च प्रतिप्रस्तावं दार्शनिकतत्त्वानि।

नानकचन्द्रोदयनामकमिदं महाकाव्यं शतत्रयात्मकत्रपर्णां भारतीयसंस्कृतेरैतिह्यस्य भूगोलस्य च परिचायकमनघं रत्नम्। इह कविना संस्कृतगिरा शास्त्रलोकव्यवहारेतिहासादिज्ञानगुम्फाः प्रतिपदं संनिवेशिताः। न केवलं संस्कृतजगत्, अपि तु सम्पूर्णभारतीयसंस्कृतिर्निद्योतिता महाकाव्यशशिकिरणैः।

नानकचन्द्रोदये प्रतिप्रस्तावमादौ मङ्गलमाचरितं कविना। प्रथमप्रस्तावमन्तरा प्रतिप्रस्तावं वाग्देवता संस्तुता तेन। नानकशब्दस्य व्युत्पत्तिर्द्रष्टव्या ( २, ५३ )—

नास्त्यकं दुःखमेतस्येत्यनको नापरः पुमान्।
इति बुद्ध्वा हि विप्रेण तत्त्वेवन तदीरितम्॥ इति।

प्रथमे प्रस्तावे कविस्तपस्विचित्रणं साफल्येन समुपस्थापयति ( १, २८ )—

कृशैः शरीरैरकृशैस्तपोभिः
केशैः पिशङ्गैर्विशदैर्यशोभिः।
शुद्धैर्मनोभिर्मलिनैर्विभूत्या
गात्रैश्च यत्रावसना वसन्ति॥ इति।

केचन तपस्विनो धूमपाः, अन्ये खल्वम्पाः, इतरेऽश्मकुट्टाः, अपरे दन्तोलूखलाः, एके शिलाजीविनः, वायुतोयाशनाः, काष्ठमौनाश्रयाश्च सन्तीत्येतादृशं वर्णनं कृतं कविना ( १,२९—३८ )। बालसिन्धुस्वरूपवर्णनं मनोमुग्धकारि ( १, १०४—१०७ )।

महाकाव्येऽस्मिन् पदे पदे भारतीयसंस्कृतेर्गभीरसारः प्रकटीकरोति कवेरतुलं लब्धवर्णत्वम्, तथापि तात्कालिकानां धर्मध्वजिनामाडम्बरालोचनेन न मनागपि संकोचमञ्चितवान् कविः ( ३, २०; १६, ९४ )—

हिण्डिमो निःस्पृहत्वस्य ज्ञानवैराग्ययोश्छटाः।
धर्माधर्मपरिष्कारः कुक्षिपूर्तेर्विजृम्भितम्॥

पुण्ड्रं तव स्वच्छतरं ललाटे
माला विशाला हृदि काष्ठमय्यः।
ते तूर्ण्यवस्त्राण्यतिनिर्मलानि
मलीमसं कर्म करोषि किं भोः॥ इति।

सन्तप्रशंसा त्वित्थं दर्शनीया ( ६, १३९ )—

सन्तः स्वयं स्वस्य समाचरन्ति
यं भाग्यवन्तं जननी प्रसूते।
गङ्गाम्बु सन्तो मऽयोद्भवश्च
वितन्वते स्वाश्रयमात्मतुल्यम् ॥ इति।

नानकमतेन महात्मलक्षणमिदम् ( १०,३६ )—

द्विजोऽन्त्यजो वा यवनो विजित्य मनो जगन्नश्वरमेव बुद्ध्वा।
जानाति यः प्रेमपदं तमीशं स वै महात्मा स च वन्दनीयः॥

गर्भावस्थामारभ्य नानकस्य सम्पूर्णं चरितमाधारीकृत्य महाकाव्यमिदं प्रवृत्तम्। २, ३५-४१ श्लोकान् यावत् सप्तसु श्लोकेषु गर्भावस्थावर्णनं रघुवंश-काव्यवर्णनेन तुलामर्हति। जन्मसमनन्तरमेव बालकस्य हासदर्शनेन तस्य महा-पुरुषत्वं वैराग्यं च व्यज्येते। पुत्रोत्पत्तिहर्षेण भृत्या नानकजनकस्य परिहितानि वसनाभरणानि जह्रुर्यथेच्छम्। इयं क्रिया कादम्बर्यादिग्रन्थेषु पुण्यवस्त्रार्थकेन पूर्णपात्रशब्देन स्मर्यते। इहाग्रे ( ८ १५१, १५२ ) स्पष्टं पूर्णपात्रशब्दः समुदलेखि कविना। नानकजन्मोत्सवानन्दे नानकजनकेन कालेन ब्राह्मणेभ्यो हेमवसनधेनवः समर्पिताः ( २, ४८ ), षष्ठ्युत्सवश्च कृतः ( २ ५० )। बालकस्य मुखचुम्बन-परम्परा भारतेऽर्वाचीनेह समुल्लिख्यते—'जननी चुचुम्ब तनयस्य मुखम्' ( २, ९८ ) इति। प्राचीनभारते तु शिरस आघ्राणमेव मतं बालकानाम्। अतः परतो भारते परवर्तिभाषासु कर्मेदं शपथार्थकं संवृत्तं शब्दान्तरेण। नानकस्य बालसौन्दर्यवर्णनम् ( २, ९५ ) अतीव मनोरमम्। महाकाव्यनायकस्य बाललीला सुरुचिरा ( २ १०२-१०४ )—

भवनादपनीय पञ्चवर्षो वसुवस्त्राभरणान्यसज्ञमन्यत्।
विससर्ज स भिक्षुकेभ्य ईषत् पितरि क्रोधपरे परं रुरोद॥

स्वभार्यामवदत् कालो गृहवस्तु न रक्षसि।
तयोक्तं जनितश्चोरो मामुपालभसे कथम्॥

दैवज्ञमासाद्य जगाद कालो
विपर्ययो ज्यौतिषकोदितेषु।
यश्छत्रधारी तनयस्त्वयोक्तः
स चौर्यमभ्यस्यति बाल्य एव॥ इति।

ततश्च नानककृतगोचारणलीला ( २, १०७ ), नानकस्योपरि फणीन्द्रच्छत्र-च्छायाकथा, नववर्षदेशीयस्य नानकस्य राजसम्मानः ( २, ११७-१२८ ), क्षेत्र-सस्याऽऽरक्षणवेलायां जीवदया ( ३, २ )। भाण्डक्रयाय पितुः सकाशाद् गृहीतस्य

धनस्य वितरणं निर्वाणिषु कृतवान् नानकः ( ३, १६ )। मणिमयोमिकया सह कांस्यमयीं कर्करीं नानको भिक्षवे दत्तवान् इति प्रकुपितो जनकस्तस्य ज्योतिर्वेत्तार ययौ —किमिति विपरीतलक्षणो नानक इति ( ३, ८० )। जयरामो नानकस्य सर्वज्ञतायां विश्वसिति स्म ( ३, १०७ )—

जयरामस्तत स्मेरः श्यालमालपदुन्मना ।
न सास्ति भुवने विद्या विद्यास्त्व यां न नानक ॥ इति ।

यद्यपि वृत्तान्तरापेक्षया नानको नासीत् तथा वेदादिविद्याप्रवीणः, तथापि महाकाव्यस्यास्य वर्णनेन ज्ञायते तदीय निगमागमज्ञातृत्वम् ( ३, ३ )—

उपनीय गुरूनुपनीय सुत
निगमाध्ययने नियुयोज पिता ।
चतुरो निगमान् स्वयमेव पठन्न-
भवद् बहुवैदिकविस्मयकृत् ॥ इति ।

भाषाप्रबन्धेन भगवद्यशोगानपूर्वकं मन्दमतीनामशक्तानां मोक्षमार्गप्राप्तिरुक्ता नानकेन ( ७,८३ )—

अस्मिन् कलौ मन्दमतीनशक्तान् शास्त्रोक्तचर्यासु किलानुकम्प्य ।
भाषाप्रबन्धैर्भगवद्यशांसि त्व ग्राहयिष्यस्यथ मोक्षमार्गम् ॥

युगपुरुषो मतो नानकः स्वोपज्ञसम्प्रदायप्रवर्तकः। 'सुकृतिना कलिकल्मषहानये क्षितितले किल नानकसम्भव' ( ८, ११७ ), 'अहन्निराकारनामा' (९,९७), 'नानकोऽयं निराकार इति प्रादुरभूद् ध्वनि' ( ७,८५ ), श्रीनानकनिराकारो गिर श्रोत्रमनोहराम् ( ८, ७८ ), मायामये हि ससारे प्रीत्यप्रीतिविवर्जित, उदासी नानको नाम वेदितव्यस्त्वयाधुना' ( ८ ११५ ), 'नानकाख्ये निराकारो मयेति समुदीरितम्' ( ८, १६० ) कर्ता परिस्फुरतु ते हृदये त्रिलोक्या' ( ९ १०२ ), 'कर्ता कर्तेत्यालपद् धर्मसिंह सत्य कर्तेत्याह योगीश्वर स्म' ( ९,१३९ ), 'कर्ता कर्तेति राजाऽकथयदकथयत् सत्यकर्तेति योगी' ( ९,१४३ ) इति नानकमतव्यञ्जका बहवः शब्दाः प्रयुक्ता सन्ति। उदासिना मत वक्ष्यमाणयोः श्लोकयोः सुस्फुटम् ( १७, ८२–८३ )—

वर्णाश्रमाभिमानेन शून्याः सन्त उदासिनः।
ज्ञानान्तरापकर्तृभ्य कर्मभ्यश्च बहि स्थिताः॥
अनुद्भुतत्व वैराग्य ज्ञानसम्पादनश्रम ।
व्यवहार उदासित्व मतमेतदुदासिनाम् ॥ इति ।

पुनर्जन्मनि विश्वसिति स्म नानकः ( ९, ३१ )—

आस्थाय पार्श्वे जनकस्य राज्ञ-
स्त्रयो वयं तेषु बभूव मत्स्य ।

एकः परौ द्वौ त्वमहं च तस्य
वहाम्यभिज्ञानमिदं गृहाण ॥ इति ।

नानकेन सिद्धानां योगिनामिव चमत्कारा अपि दर्शिता इति तदीया कीर्ति-विष्वक् प्रसृताऽभूत् । कस्यचन म्लेच्छाधिपस्य रुग्णः पुत्रो नानकेन नीरुक्त्व-मापादितः ( ७,१५४ )—

सूनोस्तस्यारोग्यमासीदकस्मा-
ज्जाता कीर्तिर्योगिनोऽस्यावदाता ॥ इति ।

एवमेव तैलपकस्य मर्दनस्य पुनर्जीवनम् ( ८ १२८–१३१ ), राक्षसस्य मुक्तिः ( ८, १३४ ), वालुकातः पद्मरागस्य प्रादुर्भावनम् ( ८, १३७ ), मत्स्योद्धारः ( ९, ११–१३ ), ब्रह्मणा सार्द्धं संभाषणम् ( ९, १६–१९ ), जले स्थलवद् गमनम् ( ९, २० ) इत्यादयो योगसिद्धयो वर्णिता नानकस्य। योगसिद्धिप्रभावितो देवगान्धारदेशीयो भूपो नानकस्य शिष्यतामङ्गीकृतवान् ( ९, १०४ ) । सिद्धः सिंहलराजोऽपि पराभूतो नानकं शरणं गत उवाच—'अयं यतिः कश्चिदपूर्व एव' ( ८, १०५–१०८ ) इति । दिनानां सप्तविंशतिं नानकः समाधिस्थितो बभूव ( ८, ११० ) । सिंहलराजो नानकमपृच्छत् ( ८, १११ )—

अपृच्छन्नृपो नानकं त्वं नु योगी
द्विजः क्षत्रियः सार्थवाहोऽथवाऽसि ।
उताहो भवान् सौम्य गोरक्षनाथो
धरामण्डपे भ्राम्यसि च्छन्नरूपः ॥ इति ।

कासाञ्चिदन्यासां सिद्धीनामित्थं निदर्शनम्—'अद्धा दधानोऽपि च योग-सिद्धीः' ( ७, १४० ), 'योगसिद्धीर्दधानः' ( ८, ९८ ), 'रुद्धद्वारे तदुद्याने दैवादागत्य नानकः, प्राविशत् तदभूत तूर्णं नन्दनस्पर्द्धि नूतनम्' ( ८, ९९ ), 'कामकेलिकला-भिज्ञाः पुरस्तात् तस्य योगिनः, स्तम्भा इव जडीभूता रम्भासम्भाविताः स्त्रियः' ( ८, १०४ ) इति ।

योगिशब्दप्रयोगो नानकं प्रति शतशो व्यवहृतो दृश्यते । ब्रह्मणा 'नानक-योगिन्' इति संबोधितो नानकः । एवमेव यतिः ( ८ १०५; ९, २८; ९, ८२; ९२ ), यतीन्द्रः ( ८, १४६ ), यतीश्वरः ( ८, ११८ ), योगीन्द्रः ( ९, ७२ ), योगिराजः ( ९, ९७ ), योगिवर्यः ( ७, ८९; ८, १४९; ९, १२ ) इत्यादिविशेषणैर्नानकस्य महिमा प्रकटीभवति ।

सम्पूर्णे महाकाव्ये बहुत्र योगवर्णनानि कृतानि । शास्त्रोक्तैर्योगसिद्धान्तैः सह तेषां तुलनात्मकमनुशीलनम् अभिनवलाभाय सम्पत्स्यते । योगदर्शनस्य कतिचित् सूत्राणीह श्लोके संदृब्धानि समालोच्यन्ताम् ( ७, ११९ )—

अभ्यासवैराग्यमहोद्यमेन महेश्वरस्य प्रणिधानतो वा।
द्रष्टुः स्वरूपे स्थितिरेव तस्य मुख्यं फलं सिद्धिगणास्तु गौणम् ॥ इति।

नानकप्रोक्ता महार्हा योगसाधनोपदेशा येचन निदर्शनार्थं मननीया— 'अक्लेशाज्जायते योगी' ( ८, १२४ ), योगश्चिदाभासचितोर्हि योग' ( १०, ७९ ), 'य सिद्धयोगो बहुविष्णुरेव योगी स लीलाकल्पितेष्टदेह, मुञ्चन् शरीरं समये न किञ्चित् फणीव निर्मोकमुपैति दु खम्' ( ७, १२० ), 'सिद्धो कथकार गुदीरयेयम्' ( ७, १२१ ), 'यो न शोके न विपदि न हर्षे न च सपदि, युक्त स योगी जगति लीलाकल्पितविग्रह' ( ७, १२५ ), 'अभ्यासेन विरागतश्च शनकै शक्य हि जेतु मन' ( १६, १३२ ) इति।

प्रायो नानकस्य समाधिर्भवति स्म ( ९, १०७-८ ), 'भूमौ चतुर्थ्यामवतिष्ठमानोऽतिक्रान्तभाव्यो वशवायुचित्त, स एकदा स्वासनमाश्रित सन्नवाप निर्बीजसमाधिनिद्राम्' ( ७, ९१ ), 'सुषुम्णया प्राणसमीरमुच्चैर्निरुध्य नष्टत्रिपुटीविभाग, स तीव्रसवेग इहैतमेक पश्यन् पर ज्योतिरहो ननन्द' ( ७, ९२ ) इति।

दशमे प्रस्तावे मत्स्येन्द्रनाथगोरक्षनाथप्रश्नानामुत्तरव्याजेन योगवर्णन सजातम् ( १०, ८०-१२६ )। भर्तृहरिगोपीचन्द्राभ्यां सहापि जाताया योगविषयिण्या वार्ताया प्रसङ्ग एकादशो द्वादशश्च प्रस्तावौ योगदर्शनविषयकौ ग्रन्थस्य हृदयस्थानीयौ।

भक्तजनाज्ञानान्धकारापसारकत्वान्नानको गुरुरेव। इह ग्रन्थेऽष्टमप्रस्तावतो नानको गुरुत्वेन स्मृत — यतो गुरुर्नानक इत्युदीय' ( ८, १५ ), 'चलन्नित्यवदद् गुरु' ( ८, १६ ), 'प्रससाद नानकगुरु' ( ८ १६२ ), उपदिदेश गुरुर्भव वारिधि' ( ८, १६३ ), 'तावत्काल गुरुस्तस्थौ' ( ८, १६८ ), 'मामपृच्छद् गुरुस्तत' ( ९ ७ ), 'गुरुर्निराकारकनानकोऽसि' ( ९ ९ ), 'श्रुत्युक्तिशास्त्र गहनाद् गुरुणाऽनुकम्प्य' ( ९, ३७ ), 'स्नातो गुरुस्त स्नपयाम्बभूव' ( ९, ३८ ), 'प्रदयां गुरो' ( ९, ४२ ), 'अवदद् गुरु' ( ९, ४८ ) गुरोर्गिरमग्रहीरुच' ( ९, ७९ ), गुरु ( ९, ८० ), 'गुरो करुणया सिद्धिम्' ( ९, ८७ ) इति।

गुरुनानकदेवस्य कुले कृष्णभक्तिरासीत् प्रचलितेति ज्ञायते मातर प्रति तस्यानेन वचनेन—'तस्मात् स्वपुत्रस्य विहाय सङ्गं त्व देवकीपुत्रमुपाश्रयस्व' ( ८, ३८ ) इति। गुरुनानकस्य भक्तियोगे महान् विश्वासो विद्यते ( १६, १३५, १७, २९ )—

यज्ञास्तपांसि तीर्थानि श्रम एव हि केवलम्।
मुकुन्दचरणाम्भोजे नाविच्छिन्ना यतो रति ॥

संहृत्य नानाविषयाभिषेभ्यो
मनो मुकुन्दस्य पदारविन्दे।
निवेशितं प्रेम रसालसं चे-
ज्जीवः कृतार्थो न च शोचनीयः ॥ इति।

इह स्पष्टं श्रीमद्भागवतप्रभावः परिलक्ष्यते। हरिभक्तिरतेषु निःस्पृहेषु तापसेषु फलैर्यलं न भवतीति नानकमतम् ( ९, १८ )। मन्त्रजपनमपि तदनुमतम्—'तं मन्त्रं जप येन मुञ्चति भवो भूतोऽनुभूतव्ययः' (९, ७८) इति। ईशितुर्गुणगाने यद्वादरो नानकः—'मर्दनेनैवमुक्तस्तु नानको व्याजहार तम्, वीणामानय भोः सौम्य गुणान् गायत ईशितुः' ( ७ १८ ) इति। एवमेव 'इंशनाम मणिमेतदनर्घम्' ( ८, १५९ ), 'प्रवहणं हरिनाम समाश्रयंस्तर वितीर्णमकिञ्चनधीवरैः' इत्यादौ नानकमतं 'कलौ तद्धरिकीर्तनात्' इति सिद्धान्तवद् हरिनामसंकीर्तनं विधते। अतो यवन उवाच मर्दनं वीणां वादयन्तम्—'यच्छब्दतस्तवस्य तवात्र सिद्धिः' ( ७, ३३ ) इति। मर्दनः स्वस्य द्वन्द्वसहत्वं याचितवान् नानकम्—'तन्मां द्वन्द्वसहं विदध्याः' ( ७, ११३ ) इति। नानकेन तु स तदर्थं महेशितृयाचनाय समादिष्टः (७, ११४)—

नानकोऽभ्रूत याचस्व मर्दनेदं महेशितुः।
स मेरुमणुतां नेतुमणुं शक्तश्च मेरुताम् ॥

भेदभक्तिरपि कृष्णस्य समुपदिष्टा नानकेन—'यदा मनस्ते सगुणेऽनुरक्तं तदा मयोक्तं हृदि भावयस्व, विहारशय्यासनभोजनेषु पुरः स्फुरन्तं हृदयाम्बुजे वा' ( ८, ५५ ) इति। इह श्रीमद्भगवद्गीताप्रभावः स्पष्टः। श्रीकृष्णभक्तिविषयकाः श्रीमद्भागवतसदृशाः केचन श्लोका विभाव्यन्ताम् ( ८, ५७-५८ )—

वहीवतंसमरविन्ददलायताक्षं पूर्णेन्दुसुन्दरमुखं तनुतुङ्गनासम्।
विस्तीर्णवक्षसमुदारसुवृत्तबाहुं फल्गूदरं कनकगौरवराम्बरं च ॥
आकुञ्चितेषु चिकुरेषु गवां रजोभिर्वन्यस्रजा मधुरवेणुरवेण सायम्।
गोपीमनांसि मदयन्तमनुव्रजन्तं धेनूर्व्रजस्य विशिखासु च वेत्रपाणिम् ॥ इति।

उपासनादौ 'चैलाजिनादिरचिते स्थिर आसने सन्' ( ८, ६४ ), पार्ष्णिप्रपीडितगुदः पवनं निरुद्धम्' ( ८, ६५ ) इत्यादिक्रियाः कृत्वा वक्ष्यमाणाः शब्दाः स्मरणीयाः ( ८, ६६ )—

श्रीचन्द्रशेखर सदाशिव पार्वतीश
सीतापते दशरथात्मज राम कृष्ण।
गोवर्द्धनोद्धरण कंसहरेति शब्दः
कश्चित् स्मृतो भवति योगशताधिकान्ते ॥ इति।

जागतिकानि नश्वराणि सुखानि हित्वा नानकेन चीरधारणं कृतं जगदीशितुर्भक्तिसाधकमिति नानकी नाश्रुप्रवाहमवरोद्धुमपारयत ( ७, ४४ )—

चीरधारिणमुदीक्ष्य नानकं
नीरनिर्झरमुवाह नेत्रयोः ॥ इति ।

नानकस्य सम्पूर्णं स्वरूपमित्थमवाप्यते ( ८, २१ )—

न युज्यते नानक ते शरीरे
प्राचीनचीरस्य विधारणेयम् ।
निरामरूक्षैर्भसितैश्च लेपः
खेदावहः श्मश्रुजटाग्रहश्च ॥ इति ।

काञ्चनगर्भगौरस्य शरीरस्य यान्यङ्गानि स्निग्धसुगन्धशीतैरुद्वर्तनैः पोषितानि, विरूक्षैः क्षारैर्लेप्यन्ते स्म नानकेन ( ८, २८ ), तादृशं वपुश्च श्वापदमण्डलीषु स्थाप्यते स्मेत्यहो तदीयं जागतिकपदार्थवैराग्यम् ! लोकनिन्दा विगणिता तेन। लोकनिन्दां श्रुत्वा त्वं कुतो न बिभ्यसीति मत्वा नानकेनोक्तम्—'लोकस्तु मत्सरी, स कमपि सर्वथा भद्रं नाह' ( ७, २१–२२ )—

निन्दन्ति लोका नितरां भवन्तं
हसन्ति मां वैणिकदुर्दुरूढाः ।
वदन्ति विक्षिप्तमनुप्रवृत्त-
स्त्वं किन्न विक्षिप्तवरोऽसि मन्द ॥
निशम्य नानकोऽब्रूत व्रज वीणां समानय ।
लोकस्तु सर्वथा भद्रं न कमप्याह मत्सरी ॥ इति ।

गुरुनानकः सनातनधर्मस्य प्रामाण्यं व्याजहार—'स्वामी सर्वास्ववस्थासु पत्न्या परिजनेन च, सम्माननीयः सततमेष धर्मः सनातनः' ( ७, १४ ) इति । तस्य दार्शनिकः पक्षः सनातनधर्मानुमोदित एव— मूर्खो वा पण्डितो वापि पापो वा धार्मिकोऽपि वा, अभिद्धोऽप्यथवा सिद्धः कालः कश्चिन्न मुञ्चति' (६,४१), 'एको जातो मृतश्चैकः सम्बन्धः केन कस्य वः' ( ६ ११७ ), 'क्षणे क्षणे भज्यमानां नावमेतां समाश्रिताः, मग्नाः सर्वेऽपि नियतमात्मानं नोद्धरन्ति चेन्' ( ६, १३१ ), 'संसाराम्बुनिधौ निमज्जति महामोहात् कुटुम्बैर्वृतः' ( ६, १४३ ) इति ।

अविद्यया समावृतो जीव एव ब्रह्मेति शाङ्करसिद्धान्तवत् सिद्धान्तो नानकस्य ( १०, ४६ ) । अन्येऽपि तदीया दार्शनिकाः सिद्धान्ता इह भवद्भिर्मननीयाः—'साम्यं गुणानां प्रकृतिः प्रकीर्तिता' ( १०, ४७ ), 'अनाद्यविद्याकृतजीवभावः' (१०, ४८), 'अमात्यवश्यो राजेव स्त्रीवश्यश्च पुमानिव, अन्तःकरणतादात्म्याज्जीवो याति विडम्बनाम्' ( १, ८७ ), 'न देहेन्द्रियप्राणबुद्ध्यादिरूपः, सदानन्दचैतन्य-

बोधोऽहमात्मा' ( १, ८८ ), 'अहं निरंकारविदेव साधो' ( १, ८९ ), नानकपरिव्राजकसंवादे वेदान्तदर्शनं समुज्जृम्भितम् ( ३, ३५-३७ )। भेदधियं विहाय यथा भक्ता भगवन्तमीशं भजन्ति, तथा तथा सन्निधिमीयमानस्तेषां स आत्मैव भवत्यखण्डः (८, ५४), रूपेऽस्मिन् धारणादार्ढ्यात् सूक्ष्मग्राहिणि मानसे, विलाप्य सकलं विश्वं ब्रह्मात्मानं विभावयेत्' ( ८, ६० ) इति। वेदान्तसिद्धान्तनवनीतमिहाऽऽस्वाद्यताम् ( ८, ६१-६३; ७९ )—

जगत्परब्रह्मविवर्त एतत् पृथङ् न तस्मात् पृथगीक्षमाणम्।
स्वापस्य विश्वस्य यथैव निद्रा माया तथास्य प्रतिभासहेतुः॥
न बन्धमोक्षौ मयि निर्विकारे सत्ता सदानन्दचिदात्मरूपे।
अभ्यासदार्ढ्यादिति पक्वबोधः कृतात्मृते शोचति नैष साधुः॥
यदस्ति भाति प्रियनामरूपस्वरूपमेतत् सततं प्रतीतम्।
मायात्र मिथ्या किल नामरूपे ब्रह्मास्मि भाति प्रियमत्र सत्यम्॥
विक्रीयेदं शरीरं मलमयमदृढं लभ्यते ब्रह्म येन
वाणिज्यं तन्मतं मे कृपिरपि निहिते तत्त्वमस्यादिबीजे।
चेतःक्षेत्रे समुत्थामलमननजलैर्ज्ञानदिव्याम्रराशि-
र्यस्यां लभ्येत सैवोत्तमकृपिकजनैस्तन्यते नाम नान्या॥ इति।

ऐतिहासिकेऽस्मिन् महाकाव्ये निबद्धानि सर्वाणि चरितानि खल्वैतिहासिकानि सन्ति। अष्टादशे प्रस्तावे मौहम्मदैः शासकैः सत्रा सज्ञानस्य सम्भाषणस्य वर्णनम्, विंशे प्रस्तावे जहाँगीरस्य, एकविंशे च दारासकूहस्य, औरंगजेबस्य च वर्णनमैतिहासिकं वैशिष्ट्यं बिभर्ति। इतिहासे तुलनात्मकस्यानुशीलनस्योपक्रमे गाढमुपकारकं सेत्स्यति काव्यमिदम्। अष्टादशसंख्यकानां शासकानां नामानि ९, ६५-७१ श्लोकेषु द्रष्टव्यानि। यद्यपीहेतिहासक्रमादपसृत्य कतिपयानि वर्णनानि सन्ति, तथापि चतुर्दशख्रीस्तशताब्दाद् अष्टादशख्रीस्तशताब्दं यावद् व्यापिन्याः संस्कृतेरितिहासस्य च प्रामाणिको निधिरयं ग्रन्थः।

भौगोलिक्या दृशा भूयांसि महत्त्वानि सन्ति ग्रन्थस्यास्य। पदातिना नानकेन भारतस्य प्रदेशानां भारताद् बहिर्वर्तिनां देशानां च भूभागः पर्यटितः 'जम्बूदेशस्य विविधान् प्रदेशान् अभ्रमद् यतिः' ( ९; ८२ ) इति। तत्रत्यानां जनानां स्वभावस्य संस्कृतेश्च भूयान् परिचय इह लभ्यते। यद्यपि तस्मिन्नपि काले विदेशगमनं निषिद्धमभूत्, तथापि नानकेन ब्रह्मस्वरूपेण सर्वाः सीमाः समतिक्रान्ताः ( १०,४ )—

क्रोशाः सहस्रद्वयमस्ति सार्द्धमितस्तदार्या न दिशन्ति गन्तुम्।
इत्थं यतीन्द्रऽभिहितः स ऊचे सदागतिं शस्यति को निरोद्धुम्॥ इति।

ततो नानक 'सुमेरयात्रामुल्लङ्घ्य मक्कायात्रत यथौ' (१०,५५)। तत्रत्या जना मूर्तिश्लेथ निरूपिता नानकेन (१०, ७, ११)—

जपमालाकरा वृद्धा श्मश्रुला हरिताम्बरा।
स्वशास्त्रपारदृश्वानो म्लेच्छाचार्या विलोकिता॥
मूर्तिर्मया ग्रावमयी व्यलोकि।
शिवस्य सा मर्दन मूर्तिरस्ति॥ इति।

मदीना नगरी गङ्गावत् पवित्रा मता नानकेन— मदीनां नय मा वन्द्या नदीनां जाह्नवीमिव' (१०, १९,) इति। वङ्गदेशीयजनविषयक सूक्ष्म पर्यालोचन तदीयमधीयताम् (८, ८५)—

नृणा मनांसि रूक्षाणि देहा एवेह चिक्कणा।
शिलेव वृहती साधोर्दशा तुच्छेव लक्ष्यते॥ इति।

तत्रत्या ग्रामास्तु (८,८३)—

ताम्बूलवल्लिपरिवेष्टितपूगरन्ध्रा
रम्भादलैरुपचितै परिवीज्यमाना॥
एलाफलै सुरभया वहुनारिकेरा
ग्रामा मुद विदधिरे यतिनोऽस्य रम्या॥ इति।

सिंहलदेशस्येद वर्णन तत्र वर्णन परीक्षणीयं सुधीभि (८,९६)—

मुक्ताफलानि विपुलानि महोज्ज्वलानि
दिग्दन्तिवशजनुष करिणो विशाला।
अम्भोजसौरभजुष प्रमदा सुरूपा
द्वीपे महर्द्धिमति तत्र सुरो विशाख॥ इति।

हिमालयवर्णनम् (१०,७३-७६), कामरूपस्य महिलाना च प्रवृत्तिनिरूपणम् (८ ९२) इह कृतम्। अन्येषां प्रदेशानां नामानीत्थम्—'उत्कलाश्च कलिङ्गाश्च सान्ध्रकर्णाटकेरलान्' उल्लङ्घ्य द्रविडान् योगी सिंहलद्वीपमागमत्' (८,९५) इति। आम्राम्रातक पनस-लकुच-कदम्ब-धव-साल-तमाल-ताल-प्लक्षाम्लिकाऽऽमलक-पिप्पल-जम्बु वट विल्व-कुन्द चम्पक-मल्लिका वृन्दा-जपा-बकुल-देवदारुप्रभृतीनां पाञ्चालदेशजानां लतावृक्षाणां च वर्णन मनोहरम्। पञ्चाम्बुप्रदेशनामधरण यासां नदीनां स्थित्या सवृत्तम्, तासां नामान्येकेनैव श्लोकेन प्रस्तौति कवि (९, ६०)—

इरावत्यथो चन्द्रभागा प्रसिद्धा
विपाशा वितस्ता शतद्रुश्च नद्य।
तदन्तर्गतो भाति वाह्लीकदेश
समस्मद्गतेविन्ध्यपादानभूतम्॥ इति।

इह काव्ये कविना कला विविधानि ज्ञानानि च निबद्धानि सन्ति। ज्योतिष-विषयकं तदीय ज्ञानम् ( २ ५८-७८ ) स्फुटम्। जानकीयजन्मपत्रिकारचना प्रकार ( २, ८० ), 'प्रायो ग्रहाणां युवयोर्न मैत्री' ( ३, ८९ ) इत्यादीनामनुशीलन ज्ञानवर्द्धनाय सम्पत्स्यते।

अस्य महाकाव्यत्वविषये नाधिक वक्तव्यम्। ऐतिहासिको नानको नायक., ऐतिहासिकी कथा, प्रस्तावानामेकविंशति विविधानिच्छन्दांसि, नीति, प्रात-सन्ध्यानदनदीपर्वततरङ्गादिनिसर्गचित्रणानि रसालङ्कारादिक यथायथ सुगुम्फितम्। नायिकाविषयको निर्णयो लब्धवर्णानामधीनीक्रियते। बहुत्रोपमा ऐतिहासिक्यो मनोज्ञा कवेर्विस्तृत ज्ञान सूचयन्ति हनुमानिवोर्मिकाम्' ( ७, ५६ ), 'सीतामिवान्वेष्टुमगाद् वनाद् वनम' ( ७ ५६ ) सुदर्शन कृष्णमिव प्रपेदे' ( ७, ७९ ), 'दोषाय विष्णोरिव सूकरत्वम् ( ७ ८० ) 'हरेरिवाभीरवधूविलास ' ( ७, ८० ) फणीव निर्मोकमुपैति दु खम्' ( ७, १२० , 'जैगीषव्य इव स्मरन्' ( ७ १३० ), 'श्रीदाम्न पृथुकमिवेश्वर ' ( ७, १३२ ), उदयाद्रेरिव रविर्निरीक्ष्य ' ( ७, १३८ ) ग्राहेण हस्तीव' ( ८ १२ ) 'नदीनां जाह्नवीमिव' इति।

'स्वस्ति श्रीजयरामवर्मणि शुभा काल्पणीताशिष ' ( ३, ९२ ) इत्यादि-पत्रलेखनप्रकार', नूतननूतनानि हृदयावर्जकानि च सुभाषितानि ग्रन्थस्यास्यापरमन्यतम वैशिष्ट्यम्। सत्स्वपि बहुषु सुभाषितेषु नूतनमेकमाभाणक ग्रन्थस्यास्येह प्रस्तूयते पाठकानां विनोदाय—'न दासेरको यावदीक्षेत शैल स्ववस्तुन्नमन्य न मन्येत तावत्' ( ८, ११९ ) इति।

कविना पूर्ववर्तिनां कवीनां काव्येभ्य पुष्कलान्यनुहरणानि समाहृतानीह— अथ किमपि प्रकटोऽग्निहोत्रिणाम्' ( १ ३३ ) 'अमु स दृष्ट्वा बहुधा व्यकल्पयत्' ( १ ३१, तुल० शिशु० ), 'चित्रार्पिताश्चित्रमिद विलोक्य' ( २, ४४ तुल० रघु०, ), 'विभावसुर्वा किमु चित्रसेन किं तुम्बुरुर्नानर एव चायम्' ( ७,८६ ) इत्यादीनि। महाभारतानुकृत्या 'ब्रह्मक्षत्रियसार्थवाहशूपल। यस्योदन साम्प्रतम्, मृत्युर्व्यञ्जनमद्रयश्च वटका प्रध्वंसिपृथु सपुर्ली' ( ९ ७७ ) इत्यादिश्लोक प्रस्तावानुरूप। तुलसीदासस्य 'स्वान्त सुखाय' इत्यनुकरणमपीह ( ४,९७ ) दृश्यते— 'स्वान्त सुखाय खलु तत्त्वमिद विचेयम्' इति।

केचन प्रयोगा इह व्याकरणदृशा चिन्त्या विद्वद्भिर्विमर्शनीया —'यात्रिभि' ( १, १७ ), 'स्वयात्रिप्रवरै' ( १, १९ ), वरयात्रिणाम ( ५, १३२ ) इत्यत्र च 'यात्रिक' इत्यनेन भाव्यम्। 'वासराणि हृदय प्रसादयन्' ( ७, ४८ ), 'विगद्दते ( ७, ६७ ), इत्यत्र च मनीषिप्रवरैश्चिन्ता प्रवर्तनीया।

प्रसङ्गानुसारेण नूतननूतनाः शब्दा अपि यथास्थानं प्रयुक्ता ग्रन्थस्यास्य गौरववर्धनाः—'द्राक्षा-वादाम' ( ५, १४० ), 'उपानयत् सर्षपशाकयुक्ताः सा वाजरीपिष्टकरोटिकास्ताः' ( ७ १३२ ), पन्था यथा रात्रिषु धर्मशालाम्' ( ८, ३६ ), संयावमोदकमहोत्तमकुण्डलिन्यः, सत्पूपपायससुशष्कुलिकारसालाः' ( ८, ७४ ) इति। 'मसजिद' इत्यर्थे 'चलत्रम्' इति शब्दप्रयोगो मननीयः। 'सुलतानपुर' इत्यर्थे सुरत्राणपुर-शब्दः ( ३ ९१ ) ध्वनिप्रकृत्यनुरूपः। विंशति-संख्याय, 'नखसंख्या' शब्दोऽप्येवमेव ( ७, १०१ ) नूतनः।

यद्यपि संस्कृतगिरा निबद्धो नायमेकलः प्रयासो नानकसिद्धान्तसंबद्धः, अन्येऽपि द्वित्रा ग्रन्था देवभाषया प्रकाशिताः सन्ति—१. 'निराकारमीमांसा' स्वामिकेशवानन्दप्रणीता, २. 'वाहगुरुमन्त्रसिद्धिः' ईश्वरसिंहेन कलियुगोपाह्वेन रचिता, ३. पण्डितहरसिंहकृतं 'नानकपारिजातम्' चेति, तथापि महाकाव्यमिदं प्रशस्यं महनीयं कमनीयं च विराजते।

एतादृशस्य सुचिरात् प्रतीक्ष्यमाणस्य नानकजीवनचरितप्रकाशकस्यास्य ग्रन्थस्य सम्पादनमस्य विश्वविद्यालयस्याध्यापकेन पण्डितव्रजनाथझामहोदयेन सायासं कृतम्। हिन्दी-संस्कृताङ्गलभाषामयी विस्तृता भूमिका इह संयोजिता-स्तेन। किन्तु हन्त, स्वसम्पादितं ग्रन्थमिमं प्रकाशितं नाक्षिसाक्षात्कर्तुं सोऽवतिष्ठ-दिह धरणीतले। शान्तिश्चिराय भूयात् तदात्मनः।

सरस्वतीभवनग्रन्थमालायां पञ्चोत्तरशतपुष्पतया ग्रन्थोऽयं प्रकाश्यते विश्वविद्यालयादस्माद् एतावच्चिरं क्वचिदप्यप्रकाशितः। इतः पूर्वं द्वादशकाव्य-ग्रन्थाः सरस्वतीभवनग्रन्थमालायां प्रकाशितचराः। ग्रन्थरत्नस्यास्य प्रकाशनेन समुद्भासितं स्यात् संस्कृतजगदिति दृढं विश्वसिति।

नवरात्रारम्भे
२०३४ विक्रमाब्दे गुरौ
( १३-१०-७७ खिस्ताब्दे )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# INTRODUCTION

The famous epic 'Nanaka Chandrodayam' edited here is based on two rare manuscripts namely the one from Saraswati Bhawan Library of the Varanaseya Sanskrit Vishwavidyalaya, Varanasi and the other from India Office Library, London In order to indicate the different readings I have symbolized then as 'Ka' and 'Kha' respectively Thus 'Ka' bears the catelogue No 42913 ( Sahitya Section ) of the Saraswati Bhaw n Library and 'Kha bears the catelogue No E 3965 R. R 8 I of the India Office Library London

The Mss 'Ka consists of 21 cantos less the first seven shlokas that are missing so also it falls short of the usual benidictory verse Similarly in Mss 'Kha' the first nineteen cantos are intact but the 20th and the 21st cantos are missing The frontispiece of Kha' is as follows:—
"देवरानकृत नानकच धस्य काव्य पत्र २६ का १७२—East India Company" Below in the frontispiece is written presented by H T Colebrook Every leaf bears the marks Na 1 and Na- 2 etc 'Heramb' is written in every counter leaf on the right hand side below

It may be relevant here to state that every portion taken from 'Ka' has been compared with that of Kha and vice versa In cases of doubtful versions in both of these I had no other course left than to make a feasible inference of my own as may be yielded by the context of the total text but at the same time I have given the 'Ka' and 'Kha' originals in foot notes In both of these manuscripts a duplication of alphabets aud syllables are also found As for Example —अचच था, अन्योन्यो and अथ अथ, पर परे etc For each duplication the editor has placed the adequate reading

The epic is a work of an old Scholar Pandit DewaRaj [1] Sharma He was the son of Pandit Raghupati [2] Sharma Tripathi and was of Udasi *faith of Sikhism* He used to live in Kashi as one of the Vishishta Acharyas of the faith This epic of Pt Dewaraj Sharma was latter [1] revised and rearranged by his nephew Pandit

---

१ अथ देवराजा विना 4/20 ( Nanak-cdandrodayam )

२ इति श्री शाण्डिल्यगोत्र त्रिपाठिरघुपतिशर्मतनूज Nan —21 canto at the and

१. तदनु तदनुजात्मजेन बुध्या
परित शोधितखण्डिता व्यधायि Nan 21 canto.

Dewaraj and Pt Gangaram enjoyed among the disciples of Guru Dwarkadas who is said to be a diciple of Guru Nanaka The age of Guru Dwarka Das[2] whiles he was teaching Dewaraj has been assessed approximately at 250 years He gave a recital of the Katha of Guru Nanaka to Gangaram and Dewaraj In the time of Auranzeb s son Bahadurshah Dwarka Das used to live in Nagpur Guru Govind Singh and Bahadurshah are known as friends The period of *Guru Govind Singh is calculated to be from 1666 A D to 1708 A D*

Once Raja Bhagmalla is said to have requested Pandit Gangaram to give a recital of Nanaka's Katha to which he acceded Latter on Pandit Dewaraj Sharma made his own contribution to the Katha rendered it into verse form and gave it the form of the epic Thus the Katha was put forward by Gangaram which was rendered into poetic form by Pt Dewaraj Sharma

The present epic is greatly significant especially in as much as it puts forward the Sikh thought propounded by Guru Nanak in the [3]Punjabi dialect and gives a clear and detailed [4]picture of Guru-Nanaka's life teachings and philosophy Alongwith a thoughtful and lively discussion on Udasi faith in Sanskrit it presents an Uniform description of the Sikha religion etc to the scholars of Sanskrit Also it abounds in the conversations between Guru Nanak and Guru Gorakh Nath and his disciples and the other Acharyas Its descriptions cover a detailed account of all places inside and outsitde of the country which Guru Nanaka had travelled

The epic on the whole is in twenty one contos of which one to ninteen deal with Guru Nanaka s life and philosophy The two i e, twentieth and twentyfirst present a brief life sketch of the nine Guru Each of the first nine cantos are captioned seperately and from this point of view it resembles the Uttara Ramcharitam.

The title of the first conto is 'Balsindhu Angad Samvaad' It consists of one hundred and sixteen verses and marks the beginning of the Katha which was presented before Raja Bhagmalla by Gangaram The gist runs like this--

---

2 Nan -206/21

३ देश्ये' सुबोधमुद्रे Nan -9/1

४ प्राङ्मांसा Nan -2/1

Angad descended from Bahuj family He used to ponder over the transitariness of life right from his childhood. Oneday he went to pay a visit to Jwala Devi in forest There he heard about Nanaka He met him Nanaka preached him on suth sudjects as life, illusion & world. One day Nanaka stood up and des rted the place Angad started *searching* While searching Nanaka, Angad reached in a village named 'Shadura" There he met Chanhrabhanu's son Balsindhu when he heard the virtues and praises of Nanaka from him, he asked him to narrate the story of Nanaka to him

The second canto named as Raj Vahuman' consists of 228 verses It starts with the story of Nanaka The Siva Ram Varma was the grand father of Nanaka & Kalverma his father He was bleesed with a son and a daughter Who were named respectevely Nanaka and Nanaki From his very boyhood Nanaka exhibited a philanthropic temperament & began to give alms to the needy & the poor This made his father angry In order to divert his attention & to keep l fe busy his father placed him in charge of cows to graze & rear Once it so happened that while Nanaka was sleeping a cobra was *seen to protect him against sun* Raja Bolar Rai was an eye witness of this event The third canto consists 124 verses and is named as Adhikar Grahan It gives further details of his life history The anoyed father now sent him to the market to sell some earthen wares There Nanaka happened to meet a saint. He gave all his money to the saint and came back empty handed His father now being further enraged threatened him and turned him out of his house when Raja Bolar Rai came to know of this fact he invited Nanaka and made him stay with him. In this same canto we see that Nanaki was married to Jai Ram Verma We also see that Jaja Bolar Rai's applauding for his (Nanaka's) charitable *disposition*

The fourth canto named as "Nrpa Samprasad" consisting of 112 verses reveals how Raja Dhankhan ( Nawab of sultanpur ) employed him as an incharge of a stone house There Nanaka donated to his full satisfaction on complaint when the Raja made enquiries he found that he himself owed money to Nanaka Now Jai Ram Verma busied himself in arranging Nanaka's marriage

The fifth canto named as "Parinaya" & containing 174 verses describes seasons as well as Nanaka's marriage ceremoncy Nanaka did not appear happy on marrying sulakshani daughter of *Moolchandra.*

The sixth canto named as Vangamana consists of 148 verses and describes the birth of two sons of Nanaka e Shri Chand and Lakshmi Chand, A saint came to his house one day & asked Nanaka to take bath Nanak went to the Veya river but he did not come out of the river Every body searched for him who was believed to have drowned in the river The Raja geting this news checked the account maintained by Nanaka but found that the Raja himself owed money while Nanaka had appeared before Raja Then Nanaka went to forest To bring him back Mool ( Nanak s father inlaw ) personally went to him but he did not return Moola declared him as insane and intended to give all his wealth to his daughter But at last Nanaka enlightened & convinced everybody that early rides have no value that doing good to others is the only duty of man

The seventh canto Sidhi Vimochan consists of 154 verses & describes in detail the attempt of his father kalverma to bring back Nanaka from the forest for which Mardana was deputed But he also did not succeed to pursuade Nanak. Nanaka rather asked him to purchase seens by taking money from Nanaki Mardana took money from Nanaki and purchased it from a seller namad Feru a merchant of Asikpur There is also an anecdote relating to Feru & Nanaka's previous life He then came to Raja Mulhek who had always insulted the saints in his life & also insulted him presumably as a result of this insult hurted on Nanak. The Raja's son fell ill Ultimately Nanak asked him to release a member of saints from prision. So the Raja did and then his son soon recovered from his illness

In the eight canto Bolar Raj is seen so much spell bound by Nanak s teachings that he became a devotee. After this he went to Bang and Gaur Ther from he went to Jyotisha Pura ( now known as kamakhya ) There he defeated the young girl magicians who used to transform a young man to a sheep by their magic and they also accepted the discipleship of Guru Nanak Later Nanak al so converted Raja Siddhi manya kshitipal to his creed After that travelling through 'Asparshnath island he come to Saisaraya who also became his disciple Then he started for Vishhar Nagar

The ninth canto desribes his journey to Vishhara Desa It is named "suwarnapur gamam" consisting of 149 verses While going in the ocean he was honored and worshiped by Shuddhasen and Indrasen.

Then he went to Shilmila Island Thereafter he preached the Raja Kamal Nayana the rular of The Vahika Des Spending nine teen months and teavelling in various places of Jamboodweepa Nanak went to Gandhar Ther he preached the Daitya Raja named Devaloot Then he went to Praswa Nagar This was followed by his visit to suvarnapur where Dharma Singh also became his disciple

The tenth canto is captioned as "Sumeru Gaman" and consists of 126 verees Though desiring to go to sumeru Nanaka changed his mind & went to Mekka & Maddina It gives a description of Mlechhacharyas ( Muslims saints ) there of Nanaka explained the teachings of the Koran to Mardan He came back home consoling his sister, the Guru went to Himalayas Here he had an exchange of ideas with Goraksha & *his disciples At last Gorakha* was so much impressd with *him that* he declared him a "Yukta Yogi"

The eleventh canto is named as 'Bhartrihri Adi-vijaya" It consists of 139 verses It throws light on the discourse between Nanaka and Gorakha's disciple particulrly, Bhartrihari Bhartrihari ultimately admited his defeat from Nanaka

The twelfth canto is "siddha samvada' and consists of 213 verses This relates to the defeat of all of the Goaksha's disciples It discuseed Hatha-Yoga In the end comes the Goraksha Nanaka discourse in which Gorakh comits the great stature of Nanak Here is found a discription of chashaka ( wine ) & ' Bhairavi-Chrkra ' and the names of 9 Nathas 5 yatis and 84 Siddhas

The thirteenth canto abounds in 157 verses & is named as "Bhagwat stuti". It gives the Nanaka's preachings to Duttatreys at Mount Byar and his descriptions and the utility & importance of the ' Ajapa Japa" Also it describes Navadhā Bhakti & Vishnustotra It relates the talks between him and Prahlad at Mount Analachit Therefrom Nanaka goes to Dhruvalok At this point Dhruvalok is described And here from the Guru goes to Baikuntha ( Vishnv's dhama ) A description of Vishnudham follows

The fourteenth canto comprises of 342 verses and is named as "Bhoogoladi-varnan" Here Lord Vishnu himself inspires Nanak so propound and propagate the "udasi cult" Then the Guru comes down to earth passing through Dhruvlok & gives a description of the Bhoogol & khagol etc. of the three worlds

The fifteenth canto is Ram Charita" It consists of 168 verses While en route to Lanka the Guru narrated the said Ram Charit to Mardana. First, Nanak came in Sunva m nun and discoursed with Kalyana & Seela sena Then he went to Janaka His coming back from him follows Sukha chapat episode From there the Guru went to Matsya-Nagar and Lahri Nagar His Journey to Lanka follows this There he discoursed with Vibhishana

The sixteenth canto is named as Gandhar Gaman' It consists of 156 Verses It relates to Mardana's death at Kharjoorpur After the death of Mardan Guru came to Talbaudika There he went to Mardan's son named as Sahjada and made him his pupil There from he went to Gandhar he made the king of that city as his pupil and named him as Bali Gandhar

The seventeenth canto is titled as 'Kurukshetra yatra' which consists of 160 verses Nanaka went to kekaya Nagar He met Balgudr ain Thereform he came to Pakshaka his home then he went to kuruksbetra There the Yati was insulted by Sikandar s son The Yati wished him ill and cursed him

The eighteenth canto is named as 'Ajitadi Uddhar" It consists of 192 verses Babar's army came to Sultanpur Dhankhan was skilled Babar became king by defeating Ahan Khan. A discourse between Babar and Nanak follows this. Babar was pleased by the idea of Nank and asked him propagate his cult to all over the world. The Guru came to Pakshak There be stayed with sulakshani and named her as "Ramdasi" and propagated the Udasi cult there

The nineteenth canto bears the title 'Vishwavijaya' It consists of 254 verses The Yati went to Jalal He querried about Gurumuka Jalal came across the charms of Guru's Gurumukha while he was on voyage to Mekka He came back to pay a visit to Nanaka again and was enlightened by Nanaka's idea about Gurumukha, Then the Guru went to "Shekha Fareed Pattan" and preached Varshim He went to Talwandi and consoling Lal ( his uncle ) reached Pakshaka There he thoroughly consoled sulakhaani and told that Angada will succeed him as Guru Thus Balsindhu told Angada. In this way Nanak presented the Adwaita idea in a dialect as Vyas for the Vedas After the death of Nanak his half dead as his body was burnt on a pyre by Aryans and half of it was buried by Mohamdans

The twentieth canto does not bear any particular name It is written as Angadadi Kathayam Vinshah Prastavah It consists of 159 verses Angada became the second Guru of Sikhs He bestowed the Guruship to Amardas Then Amardas s third son Arjundas succeeded his father and became the Guru Jahangeer imprrisoned Arjuna Then Hari Govinda was made Guru of Sikhs JahanGeer and Hari Govinda fought against each other . However Hari defeated Jahageer s army and established himself at Kartarpur Then he entrusted the Guruship to his relative Hari Rai

The twenty first canto is simply titled as Angadadi Kathayam Ekvinshah Prastavah and consists of 240 verses Shahjahan handed over the kingdom to Dara Sakooh who was faitl ful to Hari Ram s teachings But Aurangzeb killed Dara and fought agains Hari Ram Hari Ram bestowed this Gusuship to his discriple Hari Krishna Hari Krishna died This disciples then made Teg Bahadur as their Guru Teg Bahadur went to Pataliputra Via Kashi Here he was blessed with a son and now named him as Govind Singh Govinda worshipped the Goddess Chandika for five years to succeed in taking revange with Aurangzeb Chandika gave him a sword Aurangzeb's son *Bahadur shah became* his friend The Guru went to Nagpur There Dwarkadas a disciple of Guru Nanak gave Kesha shastra and comb to Guru Govind Now Guru attacked on the muslim army while fighting in the battle field one muslim injured the Guru in his stomach The Guru fell ill While breathing his last the Guru bestowed the Guruship to Adigranth So the holy Adigranth or Granth Sahib was named as Guru Granth Sah b

We have acquainted ourselves with the story of the epic spreading through its different cantos The following account will now unfold the philosophy & preaching of Guru Nanaka

The cantowise description of the above is as follows —

| | |
|---|---|
| From Sloka | 65/1 to 96/1 |
| ,, | 76/2 to 89/2, |
| ,, | 64/6 to 69/6 |
| ,, | 130/6 to 144/6 |
| ,, | 118/7 to 128/7 |
| ,, | 35/8 to 38/8 |
| ,, | 50/8 to 66/8 |
| ,, | 71/17 to 104/17 |
| ,, | 60/18 to 68/18 |
| ,, | |

" 107/18 to 123/18
" 126/18 to 132/18

In the above theory he has pointed the one single path i. e. Udasi cult leading to realization of God for the whole humanity While talking with Ekbara ( see 60/18 to 123/18 ) and with Mala ( see 107/19 to 1 3/18 ) Nanaka has said that God is one and without caste or creed The same alpervading God is worshipped by different people under different names This is what has been called as "नामरूपप्रपञ्च" in the theory of incarnations in Puranas

Then in this epic we come accross the स्तोत्र ( songs of prayer ) of Vishnu and Shiva respectively There are four different songs dedicated to Vishnu They are in verses from 20/1 52/1, 134/13 and 157/16 of the Epic.

The songs dedicated to Shiva are from sloka 4 to 10 in canto 10 in canto 10 Then the 14th canto (see 13/4 to 74/14) containing instruction by Lord Vishnu to Nanaka. In these Shlokas Guru Nanak has been asked by Lord Vishnu to spread the religion named Udasa as called by him. This religion is not restricted or limited to any particular caste of creed

In this way Guru Nanaka advised by Lord Vishnu propounded the Sikha Dharma The word Sikh means a pupil Nānaka was a Sikh ( pupil ) of Vishnu Himself Therefore this Dharma is named as sikh Dharma Nanaka called God as Vahu Guru (The seed Mantra of Sikhs) Here the relation between the teacher and taught is significant This relation came up to the 10th Guru The 10th Guru Govind Singh at the time of his death bestowed the Guruship upon the "Adigranth" Thus the ' Adigranth" later on was called as ' Guru Granth Sahib"

To lead life according to the word of Guru Granth Sahib and to keep one self always engaged in learning are the essential things for Sikhs This Sikh Dharma is of six types ( I ) Udasi ( II ) Nirmala ( III ) Namadhari ( IV ) Sutharasahi ( V ) Seva panth and ( VI ) Akali All these types follow the words of ' Guru Granth Sahib "

In all in this holy book, there are 384 sabad ( words ) and 15575 Band Pada's in which —

2949 are by Nānaka
57 are by Angad Deva
2522 are by Amar Das,
1730 are by Ramaj Tas

6204 are by Arjan Deva
196 are by Teg Bahadura

The last pada of Teg Bahadur is supposed to have been composed by Guru Govind Singh The rest three Gurus i e Hargovind Hara Rai and Hari Krishna did not contribute to the Ādigranth Besides this the Ād granth contains the compositions of as many as thirty five prominent Indian saints including Jaydeva Farid Namdeva Kabira and Raidas This bears an ample proof of a religious movement in India culminating in the Panjab with Guru Nanak and his successors This movement is known as Bhakti movement In this holy scripture the following dialects are used The Eastern Apabhransha Santawani, Panjab, Apabhransh Marath, Hind, Lehanda Sindhi and some words from Arabic and Persian

The Sikh religion as enunciated in the Ādigeanth ( Guru Grantha Sahib ) is based on the following concepts —

1 The concept of God —i e the only existent reality is God The fact is corroborated in ' whatever I see is Brahman —Mahla 5

2 Atributes of God is mentioned in the Mula—Mantra which is Ik—Omkr Satnam Karta Purukh Nirbhay Nirvair Akalmurat Ajuni Saibhang Gurparsad'

3 Ths unity of God —i e. God is the only eternal entity that has created purushas ( Brahma, Vishnu Mahesh ) and Prakriti ( Maya ) and three Gunas ( Satya, Rajas and Tamas ) He is distinct trom Jiva

4 The name of God —The name is truth He must be called sat or Truth All other names except Satnam are Kirtam ( Composed names )

5 God as creator —The creator himself pervades his creation He is the primal cause Th creator and the creation though seemingly different, are one

6 The concept of Jiva —Jiva is a sort of miniature of Brahman It is its own individuality Brahman is infinite Jiva is finite Jiva transmigrats from one body to the other in accordance with its merits and demerits.

7 The coacept of Maya —As per the Ādigranth, Maya is that power which takes us away from men

8 The concept of creation —The Karta Purukh creates when ever is His will —Raga Maru ( G G S ) "when it was His will He created the world '

9 Microcosmic theory —Two hymns of the Ādigranth—one by saint Peepa and the other by saint Beni are significant regarding this theory The Universe is the macrocosm and the body is the microcosm. The soul lives in the body and the higher soul lives in the universe Since *the soul and the Higher soul are the same in Essence* and the Higher soul is reflected in the soul, similarly the universe is found in the body—G G S Rag Dhanasari, Rag Ramkali

10 The concept of Karma and Transmigration —Karma means action Every action is like the seed sown in the body which is a field of action The soul ( Purush ) is a farmer The Higher Karma is admired by Guru and the Lower Karma ( Karm-Kanda ) is rejected

11 The concept of Hukm —It means order or Judgement of God In Muslim theology it includes the order of the prophet as well "By the Hukm the Jivas are created' Japuji

12 The concept of Grace —Grace of Lord "My Lord is one. there is none other He is realized by His grace"

13 The concept of Ego —Ahamkara The Gurus declare that the path of ego is adverse to the path of devotion The path of ego is the path of destruction It is said in the Asadivar Mahla—1

14 The concept of mind and intellect ,—The mind and the intellect are the outer covering of the soul. Thus they have closer and deeper relaions with soul

According to ' Nanaks Chandrodayam" the repetition of name of God (Japa ) has got a great significance in Sikh-Dharma JAPA is of two types —Lib-Japa and Ajapa-Japa By Libjapa of God one becomes an affectionate of God and then by Ajapajapa one sees the invisible God visible before him The epic *says that when the Hamsa ( the shambhu* in Susumna ) Ceaselessly repeats the "So-Aham" then it is called "Ajapajapa" see Nanaka Chandrodayam 11/13 and 15/13

---

1 सोऽहमित्यनया स्मरणीयम् ।
विस्मृतस्य भद्दम खलु रूपम् ॥

× × ×

[illegible] हंसो जपत्यविरतामनयामयत्नाद्
ध्येय निरावरणमात्ममहो परीक्षम् ।

In the opinion of Guru Nanaka the Siddhi (fulfilment) is achieved by two ways—one by Jnanamarga and the other by Bhaktimarga This is described in the epic 22/13 to 23/13

It is taking these ideas into consideration that Guru Nanaka propounded the Udasi-Cult. This Mata ( cult ) is accepted by that person who does not follow casteism and is very faithful to the Shastra, Guru and Govind A householder also can follow and accept this way of Dharma To keep matted hairs and to wear only a peice of cloth etc are no requisites of this Dharma ( See the epic 15/14 to 73/14 )

Those who accept the Udasi-Cult are of 4 typees- Kutichaka Bahudaka, Hansa and Parama Hansa Again these followers of four types are divided into three types—Jnanasanyasi, Vedasanyasi and DharmaSanyasi. These latter are again divided into five types—Udasina, Sadhaka, Naisthika, Vanasraya and Virakta Thus they are of 4 × 3 = 12 × 5 = 60 types

From canto tenth to twelvth we see the discussions of Guru Nanaka with Guru Gorakhanatha and his pupils The short summary of this descussion is given below—

Canto 10—sloka 19 to 125 discussion with Matsyendranātha about "Yoga—body".

Canto 11—śloka 2 to 23 and 77 to 89 with Bhartrihari about Yoga and Samādhi

| | | | |
|---|---|---|---|
| ,, | ,, | ,, | 66 to 75 with Gopichadra about 'Kapaladi-Mata' |
| ,, | ,, | ,, | 46 to 56 with Kampha about God's existence |
| ,, | ,, | ,, | 58 to 65 with Hampha about the importance of Guru |
| ,, | ,, | ,, | 90 to 104 with Bhutava about 'Charvaka—Mata' |
| ,, | ,, | ,, | 106 to 120 with Lahuriya about Bauddha—Mata |
| ,, | ,, | ,, | 123 to 136 with Kangar about Bhakti—Mata |
| ,, | 12 | ,, | 2 to 20 with Sangar in miscellenious topics |
| ,, | ,, | ,, | 30 to 40 with Mangalanatha about Vairagya-Mata |
| ,, | ,, | ,, | 43 to 59 with Shambhunatha about 'Prabhakara Mata' |
| ,, | ,, | ,, | 117 to 129 and 156 to 177 with Guru Gorakha Natha |

At last the Siddhas ( Gorakha and his pupils ) beleived Nanaka as "Yukta—Yogi"

Besides this here we come across the description of 9 names of Natha's from 129/12, then 6 names of Yatis from 190/12 and 84 names of Sidhas from 193/12 to 207/12. Then Gorakha describes the drink (Shidhu Ghasaka) and also the Bhairavi Chakra in 14/12 to 18/12. Thus the cantos 10, 11 and 12 present a clear idea of the Yoga, Bhakti, Jnana, Vairagya and Hatha-Yoga

In the 14th canto Guru Nanaka has elaborately described the position of the Earth, Hell and Heaven (a ■ Bhoogola and Khagola) In this way this epic presents a vivid picture of the natural geographical description of jambu-Island This is described from 92/14 to 270/14 Again in the same canto we also find the description of the Hell and the torture of the Hell which a sinner has to meet in the Hell According to this description there are as many as twenty eight Hells ( see the epic 271/14 to 278/14 and from 179 to 319/14 ) Then from 311/14 to 311/14 describes the defferent types of sinners Finally from 322/14 to the and of the canto the Heaven and its bounties are described

Over and above these descriptions the book also comprises of the names of places visited by Guru Nanaka which are as many as fifty three in number The proper names that have occured are hundred in number and the names of the pupils of Guru Nanaka are 25 in number

Among the 25 pupils, Angada was the most obidianth, faithful and affectionate of Guru Nanaka That is why Guru made him the second Guru of Sikhs Nanaka having seen the devotion of Angada examined him in four different ways In all these four examinations Angada surpassed all other pupils ( see canto 19 ) As a result of this Nanaka became very much pleased with him and he named him as Angada ( meaning born from body ) His former name was Lahana but Guru called him Angada because there was no difference between Nanaka and Angada

In reference to the increase of devotion of Angada towords Nanaka the Jwala Dev (A Goddess in the forest) can not be ignored To see this Goddess, who was known to be sympathetic to the gentleman and wild to bad man, (see the epic 17, 18/1 ), Nanaka used to come there every year In search of peace Angada also happened to reach there one day along with pilgrims to see Her There he heard about Nanaka and went to him Nanaka advised him and made him his pupil after the latter had fully stood the test of this severe examination One day Guru left the place voluntarily and went away Angada began to

प्रथमप्रस्तावस्य अष्टमश्लोकात्पञ्चदशप्रस्तावपर्यन्तं श्लोकाः सरस्वतीभवनस्य हस्तलेखा-प्रेसकापिकायां लिखिताः सन्ति येषां शुद्धीकरणं पाठभेदप्रदर्शनं च "ख" इत्यनेन सम्पादितमस्ति। ततः पश्चात्षोडशप्रस्तावादारभ्यैकोनविंशतिप्रस्तावपर्यन्तं श्लोकाः इण्डिया-आफिस-पुस्तकालयस्य हस्तलेखाप्रेसकापिकायां लिखिताः सन्ति येषां शुद्धीकरणं पाठभेदप्रदर्शनं च "क" इत्यनेन विहितमस्ति। तदनु विंशतिप्रस्तावादेकविंशतिप्रस्तावान्तं यावत् सर्वाणि पद्यानि "क" इति लेखेनैव लिखितानि सन्ति। एषां शुद्धीकरणं पाठभेदप्रदर्शनं च स्वयं सम्पादकेन विहितमस्ति।

अनयोः पाठयोर्मध्ये स एव पाठो मया मूलग्रन्थे प्रदत्तो यः श्रेयान्द्वयोरस्ति। कुत्रचित् "ख" इत्यस्य इतरत्र 'क' इत्यस्य अपरत्र नैव 'क' इत्यस्य नापि 'ख' इत्यस्यैव परन्तु सम्पादकज्ञानानुसारं कस्यचिदन्यस्यैव मूलग्रन्थे पाठो विहितोऽस्ति सम्पादकेन। परन्तु टिप्पण्यां यः पाठो न दत्तोऽस्ति मूले स पाठस्तौ वा पाठौ प्रदत्तौ स्तः।

यथा "नास्त्यकः दुःखमेवास्य" इति 'क' इत्यत्रास्ति "नास्त्यको दुःखमेवास्य" इति "ख" इत्यत्रास्ति तत्र सम्पादकेन "नास्त्यकं दुःखमेवास्य" इति पाठो मूले दत्तः तत्परित्यक्तं पाठद्वयं टिप्पण्यां विहितमस्ति।

यथाः—नास्त्यकः—"क०"
नास्त्यको—"ख०" इति।

## प्रस्तावानां नामानि

१. चालसिंहनन्दसंवादः।
२. राजबहुमानः।
३. अधिकारग्रहणम्।
४. नृपसम्प्रसादः।
५. परिणयः।
६. वनगमनम्।
७. सिद्धविमोचनम्।
८. सालसरायविमुक्तिः।
९. सुवर्णपुरगमनम्।
१०. सुमेरुगमनम्।
११. भर्तृहर्य्यादिजयः।
१२. सिद्धसंवादः।
१३. भगवत्स्तुतिः।
१४. भूगोलादिवर्णनम्।
१५. रामचरितम्।

## कथानकस्य माहात्म्यं महाकाव्येऽत्र ।

देश्य सुबोधमधुरै परमात्मतत्त्व
बाहीकवर्गमपि बोधयताञ्जसैव ।
द्वैतान्धकारमपनीयत नानकेन
सन्दर्शितस्तनुभृतामपवर्गमार्ग ॥ १ ॥

प्रादुर्भावावधिमधुरिमोद्गारगुर्व्य कथास्ता
प्रस्तूयन्ते विमलयशसो नानकस्यानवद्या ।
याभि शुद्धि दधति मलिना स्वर्धुनीस्पर्धिनीभि
सन्तोनन्त हृदि शमसुख कर्णकोणङ्गताभि ॥ २ ॥

कलिमलिनमतीना शोधयन्मानसानि
स्वयमुदयमुपेत शास्त्रयोनि स्वयम्भू ।
अकिरदविषमा यो ज्ञानवैराग्यधारा
स जयति करुणाब्धिर्नानको योगिवर्य ॥ ३ ॥

श्रीशब्दाम्बुधिसम्भवद्भमवमो हृद्ध्वानचन्द्रोदयो
विद्वद्वृन्दविवेकवभवभवत्रोत्सर्पदर्पप्रद ॥ ४ ॥

महाकाव्यमिद सस्कृतभाषया देशभाषाया लिखितस्य नानकोपदेशस्य विदुषा मध्ये अपूर्व महत्त्व प्रददाति । सर्वप्रथम तु सस्कृतभाषायामुदासिमतस्य प्रौढा विवेचना पण्डिताना समक्षमायाति तदनु नानकेन तच्छिष्यैश्च प्रचारिताना वेशभूषादीना विवेचनमागच्छति । न केवलमेतदेवापि तु नानकस्य समस्तस्य जीवनस्य वृत्तम्, तस्योपदेशा तस्य चमत्कारा, तस्य नानादेशाटनभ्रमणे नानास्थानानि च विदुषा समक्षमागच्छन्ति । अत पश्चात्तस्य गोरक्षादिशिष्यै सह शास्त्रार्थ, प्रश्नाना समाधान, बाबरादिमुगलराजाना प्रश्नाना समाधानञ्चास्माक पुरत समापतन्ति । महाकाव्यस्यास्याध्ययनेन प्राय सर्वेऽपि सस्कृतानुरागिण शिष्यधर्मस्य विषये समेषा कौतूहलाना समाधान हृदि विधाय तस्य महत्त्व ज्ञापयिष्यन्तीति ।

---

# कथानकम्

## प्रथमः प्रस्तावः

श्री भागमल्लाभिघो नृपतिरुदासिवर्यविदितं काशीनिवासिनं गङ्गारामं नानककथां कथयितुमकथयत्। गङ्गारामश्च राजाज्ञा शिरसि निधाय धर्मदासं, हरिदासं, नानकं, सुरतराम च प्रणम्य कथा कथयितुमारेभे।

क्षात्रकुले एकस्मिन्नङ्गदोऽजायत। स च बाल्यादेव जीवनस्य तत्त्वं चिन्तयति स्म। एकदा स ज्वालादेवता द्रष्टुमगमद्वनम्। तस्मिन्सुन्दरे वने ददर्श स देवदारुतरोरधोपविष्टमेकं तापसम्। तापसोऽपृच्छत्त्वत्र किमिच्छसीति। अङ्गदः स्व परिचयं निगद्य कथं भवबन्धनेन मायया मोहेन च सपृक्तानां जनानामुद्धारः स्यादिति विषये प्रश्नमपृच्छत्तापसम्। स च तापसो नानकएवासीन्नान्य। नानकोऽङ्गदं मायाया ब्रह्मणो जगतश्च स्वरूपं च वर्णयामास। वर्णयित्वा च तमुपदिदेश। उपदिश्य च कथितवान् यद् गुरोर्वचनं सर्वदा परिपालनीयम्। अयमेव भविष्यति मम सद्शस्य गुरोरुपदेश। अङ्गद शिरसोपदेशमुवाह। एकदा नानको यदृच्छयोत्थाय ततोऽन्यत्रागच्छत्। अङ्गदो दुःखितो जात। बभ्राम च तीर्थेषु। तत्रासीत् पत्तुर नामा कश्चिद् ग्रामः। तत्राङ्गदः कश्चिदेवाद्दक्ष जनमन्वेषयति स्म योऽजानत नानकमपश्यत्र वसतीति। अनन्तरं तत्रागत कश्चित्तापस। अङ्गदस्तं समभ्यर्च्य प्राह स्म तस्य परिचयम्। सोऽवदद्यत्स आसीत् चतुर्थवर्णे जातः चन्द्रभानुसुतो बालसिन्धुः। नानकस्तमुपदिश्य कृतार्थमकरोत्तमिति। श्रुत्वाङ्गदः प्रसन्नो जातः। प्रार्थयामास च तं नानकस्य कथा कथयितुम्। ततो बालसिन्धुस्तं नानकस्य कथा कथयितुमारेभे॥

## द्वितीयः प्रस्तावः

आसीत् शिवरामभक्त. शिवरामवर्मा। तस्याभवत् पुत्रः कालो नाम। कालः पुत्रलाभार्थं जपहोमादिकं कारितवान्। नानकोऽस्य पुत्री जाता नानकश्च पुत्रो बभूव। पुत्रजन्म श्रुत्वा हरिदयालुर्ज्योतिर्विद् तत्रागत। स च पुत्रस्य जन्मकुण्डली निर्ममौ। जन्मकुण्डलीवर्णनं श्रुत्वाङ्गद बालसिन्धुं गुरोर्जन्मकुण्डलीमानेतुं प्रार्थयामास। बालसिन्धुस्तदा दिवंगतस्य कालस्य भ्रातुर्लालस्य गृहं गत्वाऽऽनयज्जन्मकुण्डलीम्। प्रदाय चाङ्गदं स पुनर्बाल. कथा कथयितुमारेभे। नानकोऽवर्धत शनैः शनैः। तस्य मनो गृहकार्ये न लग्नमासीत्। भिक्षार्थिने स धनमददात्। पिता दानव्यसनमेतस्य दृष्ट्वाऽरुष्यदस्मै। अतस्तं गाश्चारयितुं वनं प्रैषयत्। तत्रैकदा वने स सुष्वाप।

आतपे पीडितं शयानं बालं फणीन्द्रः स्वफणैराच्छादयामास। तस्मिन्नेव समये नृपतिबोलाररायस्तेनैव पथा गच्छति स्म। राज्ञा फणीन्द्रवारितातपो नानको दृष्टः। राजा काँश्चित्प्रश्नानपृच्छत्तम्। नानकः स्वालौकिकप्रतिभया तेषामुत्तरं ददौ। राजा प्रसन्नः सजातः। अथ च सर्वेभ्यः प्रजाभ्यो नानकस्य प्रतिभा शक्तिश्च न्यवेदयद्राजा।

—०—

## तृतीय प्रस्तावः

कृषिकर्मणि अकुशलः सन् निगमाद्यध्ययने विस्मयकृदभवन्नानकः। स च पण्डितमतं म्लेच्छमतं च निनिन्द। कुपितः पिता नानकं बालसिन्धुना सह भाण्डविक्रयं कर्तुमादिशत्तस्य मनः परिवर्तनं कर्तुम्। भ्रमता नानकेन विपिने साधुरेको दृष्टः। तेन सह सजातः सलापः। साधुः "विश्वम्भरस्य प्रीत्यै तपस्या तनोमि" इति नानकमब्रवीत्। "बहुरूपधारिभिरर्थार्थिभिर्दूरोह सिंहासने साम्राज्यं भुञ्जे" इत्यासीत्तस्य तपस्विनो वाक्यान्तरम्। तत् श्रुत्वा नानको जगन्माता चिन्तयन्नालं बहु निनिन्द। स्वयं भाण्डक्रयणाय यद्धनमासीत्तत्साधवे ददौ। तापसेन पृष्टः स स्वं निराकार इति पदेन सम्बोधयामास तथा च निराकारपदस्य व्याख्यामपि कृतवान्—

द्वापरे निर्द्वापरोहं निराकारमचिन्तयम्,<br>
कलौ जातः कारणेन तामेव प्रथितिं गतः।

ततः स स्वगृहं प्रति समायातः। सरसस्तीरे स्थितः॥ भर्त्संयितुं कालस्तत्र गतः। गत्वा पुनः चपेटामुपम्य 'व्रज' इत्युक्तवान्। बोलारराय कालस्य भर्त्सनां श्रुत्वा दुःखितो जातः। राजा नानकं स्वगृहे आनीतवान्। एकदा जयरामवर्मा राज्ञः करं ग्रहीतुं बोलाररायेण सह नगरं निरीक्षितुं बभ्राम। स च कालस्य गृहमागत्य कालपुत्रीं नानकीं कामस्य कनककार्मुकवल्लीमिव दृष्ट्वा तां परिणेतुं बोलाररायं प्रार्थितवान्। बोलाररायः कालं स्वगृहमाहूय नानक्या जयरामेण सह विवाहायाऽब्रवीत्। कालः स्वीचकार। विवाहः सम्पन्नोऽभूत्। वरयात्रिका सन्तुष्टा सजाता। नानकी पत्युर्गृहे गता। इतः कालः पुनर्नानकस्य दानव्यसनं दृष्ट्वा भर्त्सयामास नानकम्।

—०—

## चतुर्थः प्रस्तावः

क्रुद्धः पिता नानकं जयरामस्य गृहं प्रेषितवान्। नानकी जयरामश्च तस्य स्वागतमकुरुताम्। लेखने नानकमतिनिपुणं ज्ञात्वा धनस्थानस्य स्वलेखकपदे नियुक्तवान्। धनस्थानस्याधिकारिपदे नियुक्तो नानकः स्वातन्त्र्येण धनस्य दानमकरोत्।

तस्यौदार्यं निशम्य ये दानग्रहणार्थं नानकं प्राप्तास्तेषां मनोरथमपूरयन्नानकः। तस्य यशश्चतुर्दिक्षु प्रसृतम्। कश्चिद्यवनो राजानमाह यन्नानको बहुव्ययं करोतीति। नानकीमपि कश्चिदाह यद्वहोरर्थव्ययस्य हेतोरेकदा राजा नानकं दण्डयिष्यतीति। नानकी नानकमाहूतवती। नानको मासमात्रं तत्र स्थित्वा पुनर्गतवान् स्वपदे कार्यं कर्तुमिति। राज्ञो लेखका आयव्ययौ संशोध्य न कामपि तत्राशुद्धिं प्राप्तवन्तः। पुनर्वाजाधिकारं ज्ञात्वा नानको याचकेभ्यो दानं ददौ। बलवानपि मन्मथः लोहपिञ्जरनिवेशित-केशरीव तस्य शरीरे समतिष्ठत। बहोः कालात् पश्चात् कालः समागतः पुत्रं द्रष्टुम्। पुत्रं स धनार्जनमपृच्छत्। धनं दाने गतमिति पुत्रोऽब्रवीत्। पुनर्लेखकैरायव्यय-संशोधने कृते नानकस्यैव राजपार्श्वे धनं निरगात्। कालः स्वगृहमागत्य प्रैषयद् बालसिन्धुं नानकं प्रति कानिचिदुपदेशवचनानि श्रावयितुम्।

नानकं स्वसुहृदं कथयेथाः
न व्ययं परधनस्य स कुर्यात्॥

इतो जयरामो नानकस्य विवाहाय यत्नमकरोत्। नानकः स्वीचकार विवाहम्। सर्वे वरपक्षीयाः कन्यापक्षीयाश्च प्रसन्ना बभूवुः।

राजैकदा नानकेन सह वार्तालापमकरोत्। तस्य वैदुष्यपूर्णां वार्तां श्रुत्वा यवना मत्सरिणो जाताः। ततो यवनानां वचनं श्रुत्वा राजा पुनर्लेखकान् नानकेन कृतस्य व्ययस्य विवरणं ज्ञातुं नियोजितवान्। लेखा संजाता व्ययस्य। परन्त्वन्ते नानकस्यैव धनं राजपार्श्वे समतिष्ठत। इति ज्ञात्वा धनदानतः प्रसादयत्रैरलञ्चकार।

—०—

## पञ्चमः प्रस्तावः

धर्तुरभूत्सुखदः समयः करपीडनस्य नानक-सुलक्षण्योः। वरयात्रा चलिता। वरयात्रावर्णनम्।

"चित्राकारः सकचित्तेक्षणत्वा-
ल्लोकैः लोकोऽलोक्यत॥"

इतो द्वितोरधावो वरमानेतुं गतः। मूलो गृहकार्यं चचार। नानाविधाश्व-हस्तिवेणुवीणाभेरीमृदङ्गादिवर्णनम्। वरो वेदिं गतः। विवाहोऽभूत्। वरो लाजा-नग्नौ प्राददात्। सप्तपदी अभूत्। भोज्यमभूत् "राजन्ययूनामतृपन्मनांसि"। ततः संसदि धारमुख्या अनृत्यन्। सर्वं दृष्ट्वा नानकः सिस्मिये। ततो जयरामो यात्रां ययाचे। चन्दो राज्ञी, मूलोऽजितोरधावादय आशीर्वादं दत्वा विससर्जुर्वरवधूः। इत्थं नानकः स्वगृहमागतः।

—०—

## षष्ठः प्रस्तावः

नानकं सुलक्षणी न रेमे। चन्दो राज्ञी समागता। चन्दोराज्ञी सुलक्षणी-मुपालभ्य नानक्या अङ्के निक्षिप्य गता। नानकी आहैकदाऽनुजम्।

"जानन्ति सन्तो वनिता लतेव
विनावलम्बं कथमेव तिष्ठेत्।

इति नानक्या उपालम्भं श्रुत्वा नानकः सुलक्षणीम् अरीरमत्। सुलक्षणी गर्भवती बभूव। नानकस्य २२मे वर्षे श्रीचन्द्रनामा प्रथमः पुत्रो जातः। पुनर्गर्भं दधौ सुलक्षणी। इत्थं द्वितीयोऽपि पुत्रो जातः। तस्य नाम लक्ष्मीचन्द्र इत्यकारि। एकदा कश्चित्प्रव्रजितो नानकं प्रातःस्नानं कर्तुमकथयत्। सचैत्य श्रुत्वा 'वेआ' नाम्नि ह्रदे स्नानं कर्तुं ययौ। तत्राहर्मुखे वेआं कृतनिमज्जनो नोन्ममज्ज नानकः। सर्वे चिखिदिरे। न प्राप्तो नानकः। अनन्तरं धनखानो राजा दुष्टैः प्रेरितः नानकेन कृतस्य व्ययस्य परीक्षां कर्तुमूचे जयरामम्। सर्वे राजानं निनिन्दुः। सहसा नानको राजानं प्रति गतः। पुनर्नानकस्यैव राजपार्श्वे धनं निरगात्।

इतो नानकः "स्वार्थपूर्णे धनमाहात्म्ययुक्ते जगति कथं कोऽपि रमेत' इति शोचन् वने स्थितिं व्यरच्यत। श्यामेन सह मूलस्तत्र गतः। इतो मूलः प्रत्यावृत्य धनखानं प्रति गत्वा नानकेनार्जितं धनं स्वदुहित्रे दातुं प्रार्थयत। राज्ञा नानक आहूतः।

नानकः प्रव्रजितेभ्यो धनं दातुमकथयत्। नानकं विक्षिप्तं मत्वा तुरुष्कमन्त्रविद आयाताः। नानकस्तानुपदिदेश। नानको म्लेच्छदेवमपि प्रणनाम। लोकास्तं म्लेच्छं मेनिरे। राजाज्ञया नानको यथासुखं विचरितुमादिष्टः।

नानकः स्वगृहमागतः। तत्रत पुनर्वनं यातुमैच्छत्। नानकी तं निवारयितुं न शेके। चन्दोराज्ञी क्रोधमूर्च्छिता जाता। नानकः सर्वान्पाण्डित्यपूर्णवचनैरुपदिश्य सम्बोध्य च प्रवाज।



## सप्तमः प्रस्तावः

वने एकत्रैव न स्थितो नानकः। कालः प्राहिणोन्मर्दनं नानकं पुनरानेतुं वीणावादनं च श्रावयितुम्। नानकस्य यथामति कार्यमाचरिष्यामीति प्रतिज्ञाय मर्दनः प्राप नानकं वरोर्मूलमलंकरिष्णुम्। नानकस्तं वनवासस्य सचिवममन्यत प्राह स्म च तं वीणामानेतुम्। यवनेन केनचित् वीणा प्राप्यऽस्वादयद्वीणाम्। श्रुत्वा च ता वनजन्तवोऽपि मोहं गता। नानको मर्दनं वीणाक्रयणाय नानक्या द्रव्यमानेतुं जगाद। मर्दन आनयद् द्रव्यम्। "तत्र आसिरूपुरे फेरुनामा वैणिको वसति तत्र गत्वा वीणा-

मानये"ति नानकाज्ञां शिरसि निधाय गतो मर्दनः। फेरुः सप्तमुद्रायां प्राददात् वीणाम्। स्वयमप्यागतो नानकं द्रष्टुम्।

फेरुः पूर्वजन्मवृत्तान्तं श्रावयति गुरुं यत्तावुभावपि पूर्वजन्मनि ज्ञानपुरनामके ग्रामे आस्ताम्। तयोः पिता प्राणनाथ आसीत्। तस्य द्वौ सुतौ सुता चैका। नानकस्य नाम सुन्दरः फेरोर्नाम प्रेमासीत्। एकदा पिता मुरारिगुणवर्णने स्वार्थहानिं दृष्ट्वा विवासयामासतावाम्। ततस्तयोर्गीतिः सर्वस्य तोषकरी जाता। तपस्वी च कश्चन प्रसन्नःसन् इमां विपञ्चीं तस्मै प्रादात्। सेयं विपञ्चीति। अत्र फेरुः कथयति यद्गतौ नानको भाषाप्रबन्धैरनुकम्प्य मोक्षमार्गं ग्राहयिष्यति। नानकस्तं वीणां वादयितुं कथयति। वीणायाः "नानकोऽयं निराकार" इति ध्वनिर्निरगात्। ततो नानकः फेरु-माशीर्वादमकथयत् "फेरो तत्त्वज्ञता तेऽस्तु"।

एकदा श्वाससमाश्रितो नानको निर्जीवसमाधिनिन्द्रामवाप। योगसाधने संलग्नः स परज्योतिः पश्यन्ननन्द। विंशतिदिनानि यावत् समाधावतिष्ठत। तदनु तौ लालं गतौ। तत्र सर्षपशाकयुक्ता बाजरी पिष्टरोटिका खादिता। ततस्तल-वण्डिकां गतौ। तत्र भूदेवभोजनदिने मलिको यतिनाजुहाव। राज्ञा प्रदत्ता रोटिका रक्तयुता अवलोकिताः। मलिकस्य पुत्रा रुग्णा अभूवन्। तदा स नानकं प्रार्थया-मास। नानकः सिद्धनिवहं भोजयितुं जगाद। भोजिताः सिद्धाः। मलिकपुत्रः नीरुजो जातः।



## अष्टमः प्रस्तावः

जरापरीतस्य चोलाररायस्य हृदि नानकदर्शनेच्छा जाता। बालो राज्ञो मनोरथं पूरयितुमुवाच। यतिं तत्र गच्छन्तं दृष्ट्वा सर्वे रुरुदुः। मातैकपुत्राऽब्रवीत्

"पुरो बहिर्वत्स कुटीं विधाय
द्रक्ष्याम्यहं त्वामपरे यथैव।"

पुत्रो मातरं जीवनदर्शनमाह—

"समीपसंस्थेऽपि मृते तनूजे
शक्नोति कर्तुं जननी किमस्य ?"

विश्वं धर्मशालां ज्ञात्वा पुत्रस्य सङ्गं विहाय देवक्योपुत्रमुपाश्रयस्व ततः स गतवान् चोलाररायं प्रति। स तत्र तं ( नानकं ) भवपाशमुक्तये विषयैर्बहिः स्थातुम-कथयत्। विभुर्निजसेवकानां छन्दानुवर्ती। उपास्यबुध्याऽऽत्माधियाऽथवा स्मृतो विभुः शर्मकरोत्येव। इत्थं नानकस्तं प्रणम्य स्वकीयकृतकृत्यतां च मन्यमानो वंगान् गौरांश्च गतवान्। तत्र वङ्गीयसाधोर्वर्णनम्—

'शिखैव बृहतो साधो दया तुच्छैव लक्ष्यते'। तत स ज्योतिपपुर जगाम। तत्र प्रमदया मर्दनो मेष कृत । पर गुरुणा मर्दनो मनुज कृत, प्रमदाश्च मेष्य कृता । तत्र सिद्धिमन्य क्षितिपाल यतेश्चरणयो पतित । तत्र द्वौ वर्षौ पञ्च मासाश्च व्यतीत्य असपर्शनायस्य द्वीप जगाम योगी। तत्र कश्चिद्राक्षसो मर्दन कटाहे ऽपचत्। ज्ञात्वा गुरुस्तत्र गत । त क्रोडनामान राक्षस बहुभिर्वचनैरुपदिदेश। क्रोडो भक्तो जात ।

तदनु मार्गे गच्छता तेन पद्मराग प्राप्त । तस्य मूल्य ज्ञातु मर्दन सालसरायपार्श्वे गत । सालसस्त ग्रहीतुम् अघरकेण सह यते समीपमागत । गुरुस्तमुपदिदेश। सोऽपि भक्तो जात । तदा गुरुर्विपहरदेश गत ।

—०—

## नवमः प्रस्तावः

समुद्रोऽपूजयन्नानकम्। ३५×५ क्रोशपरिमितो मीनो नानक नीत्वा चलित । सेतुतुल्यो मीनोऽग्रधीन्नानक यत् स नेताया नानकस्य मित्रमासीत्। दिनान्ते स मीनो मृतो दिव्यगतिं च प्राप। एव पञ्चदशदिनानि यावत् स्थलवज्जले एव जगाम यति । तदागच्छद्विपहरदेशम्। तत्र शुद्धसेनेन्द्रसेनाभ्या पूजित प्रार्थितश्च शिलमिलद्वीपे जगाम योगी। तत्र केचिद् धनुर्धरा आगता । ते आसन् शिलमिल द्वीपे वाहीकदेशस्य राज्ञो कमलनयनस्य गुरू राजानमुपदिशति स्म —

"त मन्त्र जप येन मुञ्चति भवो भूयोऽनुभूतव्यय" ।

इत्थ १६ मासानव्यतीत्य जम्बूद्वीपस्य विविधान् प्रदेशान् दृष्ट्वा समर्दनो गुरुर्गान्धार ययौ । तत्र दैत्यसैन्यो राजा देवलूत आसीत्। स च त्रीन्दैत्यान् यतिमानेतु प्रेषयत्। त उलूका इव अन्धा जाता । तदा दुष्टबुद्धिनामा द्वितो नानकं दुष्टबुद्धया निनाय तदा सर्वेऽपि तेऽन्धा सजाता । तदा स देवलूतो यतिन शिष्योभूत्। गन्धारे नवमासपर्यन्त स्थित्वा प्रसरनामक नगर ययौ गुरु । तत्र फलानि खादन् ४ मासान् १२ दिनानि यापयित्वा सुवर्णपुर जगाम। मर्दनस्तत्र यथेच्छ विना पणेनाकृष्टपच्यमन्न भुक्त्वा, तुला तोलनपाषाण च सुवर्णमय दृष्ट्वाऽपृच्छत्। धर्मसिंह कर्तेति ब्रुवन् जगाद "वसन्ति सन्तो यवना न सन्ति" इति । इत्थं कर्तुर्महत्त्व प्रतिपाद्य सुमेरु ययौ यति ॥

—०—

## दशमः प्रस्तावः

सुमेरु व्रजन् मक्का ययौ यति समर्दन । तत्र जपमालाधरा वृद्धा श्मश्रुला

हरिताम्बरा स्वशास्त्रपारदृश्वानो म्लेच्छाचार्या विलोकिताः। तत्र परैरदृष्टमादमनं शिवलिङ्गं नानको ददर्श। एकदा स्वकारहसेननाम्ना यवनेन मर्तिमपनेतमिच्छताऽन्धत्वं प्राप्तः। तदा पुनः पूजनात्प्रसन्नः शिवो वरं ददौ दद्यो मर्दायां मूर्ति पश्येत्सोऽन्धो भविष्यत्येवेति। परन्तु निर्भेदबोधेन दर्शनान्न भविष्यति कोऽप्यन्धः। तत्र यद्वेक्षणा जना स्नपयन्ति शिवलिङ्गं परं न जानन्ति किं तदिति। मक्कातो मदीनां गतः। तत्रैको यवनाचार्यो यवनदेवस्याभिमुखमङ्घ्री कृत्वा शयानं नानकमाह पादौ निवारयितुम्। नानकोऽब्रूत्-यदि वाञ्छसि निवारयितुं तदा पादौ विकृष्य परतः कुरु। परं तेन तथा कर्तुं नाशक्यत।

तदा नानक ऊपरे वारिवाह इव अमृतसारमकिरत्-

"द्विजोऽन्त्यजो वा यवनो विजित्य
मनो जगन्नश्वरमेव बुद्ध्या।
जानाति यः प्रेमपरं तमीशं
स वै महात्मा स च नन्दनीयः" ॥

तदा गुरुर्मर्दनं कोरानविषयेऽकथयत् यद् महंमदस्य वचनानि 'जवराइल' इति प्रसिद्धिभाजा लिखितानि भूत्वा कोरान इत्यभूत्।

सहसा स्वसारं स्मरन्तीं ज्ञात्वा योगी तत्रतः घटिकैकयैव २७०० क्रोशपरिमितं सुत्राणपुरं समायातः। पुनश्च तामाश्वास्य ततोऽपि दूरं गतः। समागतो हिमालये। तत्रागतं नानकं वीक्ष्य गोरक्षो तं निवर्तयितुं योगीन्द्रान् जगाद। श्रुत्वा मत्स्येन्द्रः समागतः। मत्स्येन्द्रस्य शरीररचना विषये प्रश्नस्योत्तरमददाद् गुरुः। श्रुत्वा मत्स्येन्द्रो गुरुं गत्वा न्यवेदयद्यन्नानको युक्तयोगीति।

—०—

## एकादशः प्रस्तावः

भर्तृहरिः समागतः उत्तरं प्राप्य गतश्च। गोपीचन्द्रः समागतः सोऽप्युत्तरं श्रुत्वा गतः। ततः कनीफा एवं हणीफाः समागतौ। तावप्युत्तरं गृहीत्वा गतौ। ततो भूतवा आगतः स च चार्वाकमते प्रश्नं करोति। गुरुस्तद् खण्डयति। ततो लहुरीया आगतः। स च बौद्धमतं क्षिपति। गुरुरुत्तरं ददाति। ततः कङ्करः समागतः तं च गुरुर्भक्तेर्महिमानं वर्णयति॥

—०—

## द्वादशःप्रस्तावः

सङ्करः समागतः। प्रथममास्तिकरीत्या तदनु नास्तिकरीत्या प्रश्नानकरोत्।

उत्तरं श्रुत्वा गच्छति तस्मिन् मङ्गलनाथः समागतः । स नानकस्य विचारैः सन्तुष्टः प्राह स्म गोरक्षं यत्स समनोधो न भवितुमर्हति भवच्छिष्यः । शम्भूनाथो हठयोगे प्रश्नं करोति । नानकः प्राह "ज्ञानेन प्रयोजनं न कर्मणेति" । गोरक्षस्य सर्वे शिष्या नानकं वर्णितवन्तः । नानको गोरक्षं प्रति गतः । संजातः परस्परं सुखदः संलापः । "विवादस्तत्त्वबोधाय न विरोधाय योगिनाम्" । गोरक्षो नानकं चषक पातु ददाति । यो भैरवदेवशेषसुरां पिवति स पीत्वा पतित्वा च भैरवीचक्रे न विभ्यति कालतोऽपि । तत्र प्राचलन् विचाराः घुन्धुनाथ-घरिनाथ-उर्मनाथ-धर्मनाथ-धगरनाथै-र्नानकस्य । अन्ते सर्वे नानकमहत्त्व प्राख्यापितवन्तः । नानको मर्दनं ८४ सिद्धानां नामानि कथयति ।

—o—

## त्रयोदशः प्रस्तावः

व्यारगिरौ जगाम योगी । तत्र अजगरोपमो दत्तात्रेयः श्यान आसीत् । दत्त-नानकसंवादः । अजपाजपस्य महिमा । विष्णुरूपवर्णनम् । नवधाभक्तिवर्णनम् । विष्णुस्तोत्रम् । तदनु विरोचनवातः पक्षिणां प्रभुः अनलाचितनाग्नि पर्वते मानुषी गिरमवोचत् । नानक आह "ईशितारं द्रष्टुमागतः" । तत्र शिखरे प्रह्लाद आसीत् । तेन संलप्य ध्रुवलोक ययौ समर्दनो यतिः । ध्रुववर्णनम् । तदा मर्दन तत्रैव त्यक्त्वा वैकुण्ठ ययौ गुरुः । ३२ कोटिक्रोशपरिमितविस्तृतं १६ कोटिक्रोश-परिमित उन्नतं विष्णोर्धामवर्णनम् । भागवतस्तुतिः ।

—o—

## चतुर्दशः प्रस्तावः

स्तुतिं श्रुत्वा त्रिलोकीयतिरुपदिशति नानकमुदासं नाम संन्यासम् । पुरुषो-त्तमस्योपदेशं श्रुत्वा तं च शिरसि निधायाजगाम पुनर्ध्रुवलोकं यतिः । ध्रुवस्तत्रत्यं वस्तुवर्णनं कर्तुं विष्णोः स्वरूपं च निरूपयितुं कथयति । यतिः सर्वं वर्णयित्वा क्षितिलोकमागमत् । मर्दनस्तदा गुरुं भूगोलस्य खगोलस्य च स्थितिं प्रपच्छ । नानकः सर्वं भूगोलं खगोलं नरकं, नरकयातनां, स्वर्गलाभोपायं च वर्णयामास ।

—o—

## पञ्चदशः प्रस्तावः

यतिः शिवस्तुतिं कुर्वन्नवततार पृथिव्याम् । ततो यतिः सैन्यशैलमागच्छत् । यत्र मुनयो निलीय तपश्चरन्ति स्म । तत्र शोलसेनस्य शिष्यः कल्याणः प्रतिवसति स्म ।

यः त्रेतायां यतेर्धर्मश्चासीत्। शीलसेनः कर्ता कर्तेति जपन्नासीत्। नानकोऽब्रवीच्छीलसेनं यत्तस्य गुरुर्वरुणो विद्यादाता च जनकः। ततो यतिरीक्षणशैली जपतो जनकस्य समीपं गतवान्। शुकश्चासीत्तस्य शिष्यः। जनकादाज्ञां गृहीत्वा गच्छतो नानकस्य समक्षमागतः स्नातः कश्चित् स चासीत्पुरा तस्य भृत्यः सुखचपवनामा। तदा गुरुर्मत्स्यनगरं लहरीनगरं सुरतास्यं च नगरं ययौ। ततो लङ्कां ययौ गुरुः। विभीषणस्तस्योपचर्यां कृतवान्। ततो रामचरितवर्णनम्।

—०—

## षोडशः प्रस्तावः

गुरुर्मर्दनमाहात्म्य लङ्कातो मार्गे यस्त पञ्चमे दिने मरिष्यति। खर्जूरपुरे बालः दिनस्य शेषे मर्दनस्य श्वासं गणयितुमारभे। नवमे श्वासे विरते मर्दनो ममार। योगीशं ववन्दे। ततः सेतुबन्धं रामेशं दृष्ट्वा गुरुर्मर्दनस्य पुत्रं ग्रहीतुं तलवण्डिकामागतः। तत्र तेन श्रुतं यद् बोलाररायो मृतवान्। तदा मर्दनस्य पुत्रः सदजादः सद्योगी जातो योगिनः। पुनर्लमस्य देशं गत्वा यतिः सदजादमब्रवीद् मार्गं गन्तुमिति। स तत्र लुण्ठकेन धृतो ताडितश्च। सस्मार नानकं सदजादः। नानकस्तत्र गत्वा सज्जनवामकं दुर्जनचौरमुपदिदेश। स च चौरः शिष्यो जातः। पुनः स खर्जूरपुरमागतः। सदजादं तत्रैव त्यक्त्वा गुरुर्गान्धारं जगाम। तत्र विष्णुमित्रनामा मुद्गलस्तस्य शिष्यो जातः। तस्य नाम बलीगान्धार इत्यकरोद् गुरुः। तत्र समागतः सफरो नाम यवनो विदरनगरात्। स नानकस्य परीक्षां विदधदपृच्छत्प्रश्नान्। उत्तरं श्रुत्वा सोऽपि शिष्यो जातः। यतिः बलिगान्धारं तत्रैव स्थातुं लोकोपकारं च कर्तुं समाज्ञापयत्।

"तत्रैव तिष्ठ मनुजोद्धरणाय धीरं !"।

—•—

## सप्तदशः प्रस्तावः

यतिः कैकयनगरेऽगमत्। तत्रैको यवनः सयालं यतिं मानचन्द्रखानचन्द्रौ प्रति निनाय। मानचन्द्रस्य सत्कारं प्राप्य तं बहुभिर्वचनैरुपदिदेश। तदा महापुरुषत्वं गते मानचन्द्रे योगी बौद्धक्षपणमेकमुपदिदेश। तदा स पर्वते समागतः। अत्र बालगुद्रायोनामा धर्मात्मा पथिकान् सेवते स्म। नानकश्च तत्र नीतः। बालगुद्रायिमते विभवस्त्वतिथिसत्कारायैव प्रदत्तोऽस्ति।

तदा तत्रतो योगी लालस्य गृहमागतः। लालः उदासिमतस्य विषये प्रश्नं पप्रच्छ। नानकस्तन्मतं तस्य भेदान् कथं केन वा गृह्यत इति सर्वमवर्णयत्। ततो लालगृहात्

पक्षकं ययौ यतिः। तत्र श्वसुरेण प्रदत्तं वस्त्वगृहीत्वैव तं बहुभिर्वचनैरुपदिदेश। ततो गुरुः कुरुक्षेत्रं जगाम। एकदा गुरुरजस्य मांसमपचन्निशि। पृष्टश्च स विश्वामित्रस्योदाहरणं जगाद। इत्थं धर्षिता अन्ये संन्यासिनोऽसूयां वहन्त अहंखानं राजानं समाययुः। श्रीकन्दरस्य पुत्रोऽहंखानः कुरुक्षेत्रस्य राजाऽसीत्। विवृद्धमन्युरहंखानः सर्वान् प्रव्रजितान् खारीमितं गोधूमं पेष्टुमाज्ञापयामास। परं नानकशक्त्या गोधूमा स्वयं भ्रमता घरट्टेन पिष्टाऽभूवन्। तदा सर्वे नानकं मोक्तुं प्रार्थयामासुः। स मुमोच यतीन्द्रम्। यतीन्द्रस्तस्मै शापं ददौ। यद्यवनराजोऽयं सप्तमासैर्दिनैः सप्तभिरेव दैवात् स्मरणशेषां हि दशामासादयिष्यति इति। ये जनार्दनं न स्मरन्ति तानापदः परिभवन्ति।

—•—

## अष्टादशः प्रस्तावः

शापात्पञ्चमे मासि बाबरस्य सेना सुरत्राणपुरमागता। तत्र धनखानं हत्वा सप्तमे मासे इन्द्रप्रस्थमागता। बाबरो राजा बभूव। एकदा बाबरस्य भोजने क्रमयो दृष्टाः। स सूदान् भर्त्सयामास। तेषु मीरविलावाख्यः कश्चिदाह यत्तन्नानकस्य बन्धनस्य फलम्। नानको बाबरस्य समीपमानीतः। स बाबरस्य प्रश्नस्योत्तरं ददौ। बाबरो नानकं चषकं पातुमकथयत्। नानको बाबरं ज्ञानचषकपानं प्रत्यपादयत्। ततो यतिरब्रवीयत् यः कश्चित्कोरानं वेदं वा भजेत स तस्य वल्लभः। आर्यैर्यो हरिः सेव्यते स एव विभिन्ननाम्ना तुरुष्कैरपि। अरागेण हरेर्भक्तिः न सर्वमुक्तिप्रदा। न कश्चिज्जन्मनाऽपराध्यति, इति श्रुत्वा बाबरस्तस्मै दिग्विजयाय न्यवेदयत्। ततो नानकः पक्षकमागतवान्। तत्राजितोरधावस्य भोजनं योगी स्वीचकार। मूलचन्द्रगृहादागतं भोजनं न स्वीचकार। मूलो निनिन्द यतिम्। चन्दीरानी निनिन्द यतिम्। सुलक्षणी विललाप। यतिः सुलक्षणीं 'रामदासि' इति पदेन संबोध्य स्वेनैव सार्धं कञ्चित्कालं यावत्स्थातुमकथयत्। व्यूढोरधावो ध्वस्तसमस्तमोहो जातो गुरुवचनं श्रुत्वा। तदा मालनामा म्लेच्छोऽपि यतेर्भक्तो जातः। तदा उबारे खानः समागतः। स चाप्युपदेशं श्रुत्वा भक्तः संजातः। तदा आदरमानः चुक्रोश। तमपि गुरुरुपदिदेशामृतवचनैः। अहन्ताममते विहाय यथा यथा देवं वेत्ति कश्चित्तथातथा स क्षीणमलो जायते।

न विस्मरन्ति ये विष्णुं<br>
क्षणमप्यनुरागिणः ।<br>
क्षणार्धमपि तान्देवो<br>
वशीभूतो न विस्मरेत्॥

—•—

## एकोनविंशः प्रस्तावः

यतिर्जलाल द्रष्टुमैच्छत् । तत्र जगाम । मार्गे जलालस्य शिष्य सरसि स्नान्त दृष्ट्वा त गुरोर्गुरमुखस्य च महिमानमवर्णयत् । स च शिष्यो जलालमब्रवीत् । जलाल-नानक वार्ता । जलालो गुरुमुखविषये किमपि कथितुमशक्तो तव्झातु मक्का-मगात् । जलालो जलधे पार गत । तत्र चाक्तोऽभूद् दिव्यपुरुषदर्शनेन । नभस्तो भोज्यानि समागतानि । पर तेन न लब्धम् । प्रातरुत्थाय जलालो पोतमेक सागरे निमज्जन्तमपश्यत् । तत्र तेनेश्वरो निन्दित । तस्यार्तनाद श्रुत्वा पोतो रक्षित ' तदा-ब्रवीत्तत्रत्यो गुरुर्जलाल यत्केन महत्वापराधेन भोजन न लब्धम् । स आह ' निमज्जति पोते मया महेश अनिन्दि इति" ।

स आह ईशस्याज्ञा विना तृणमपि न स्पन्दते । यदा गुरु प्रसन्नो जातस्तदा तस्य निकटे भोजनमागतम् । गुरुमुखविषये च तेनोत्तर श्रुतम् । तदा जलालो नानक प्रत्यागतवान् । जलालमुखात्तत्रत्य वृत्तान्त श्रुत्वा नानकस्तत्र गन्तुमैच्छत् । यतो हि तत्र नारदस्य शिष्या काञ्चन पुण्यभाज कदाचित्स्वतनु प्रदर्शयन्ति । ततो नानको बालेन सह शेषफरादपत्तन ययौ । तत्र वराहिमो नानाविध प्रश्नमकरोत् । नानकस्त बहुभिरुपदेशैरुपदिदेश । तदा भगवत्स्तुति कृत्वा सबालो नानकस्तलवडीं गत । तत्र पितृव्यमाऽस्य समागतः पक्षकम् । तत्र सेवापरा सुलक्षणीमब्रवीद्योगी यत् लहनान्यनामा अङ्गदो मम पदेस्थास्यतीति इमामेव कथा श्रावयितु बालाऽब्रवीद-ङ्गद यत् गत्वा स्वीकुरु गुरुपदम् । तस्य कथ सजातो गुरुणा सत्सङ्ग इति प्रश्नस्योत्तर प्रादादङ्गदो यत् ज्वाला विलोकयितुमागतेन तेन गुरु प्राप्त । स नानक गत ।

एकदा नानको वस्त्राच्छादिता लघिका भक्षयितुमादिदेश । तस्य अपरे शिष्या सुतौ च न जघसु । अङ्गदो जघास । तदा स सुलक्षणीमकथयदङ्गद एव मम पदे स्थास्यति ।

इत्थ यथा व्यासो वेद विभक्तवान् तथैव नानको द्वैध्यै पदैरद्वैततत्त्व विदधे । अश्वत्थपत्रेषु कराकृतिरिव क्षितौ नानककृति । नानक स्वमतमविरोधेन प्रचलत् दृष्ट्वा तुष्ट सन् प्राणानुत्ससर्ज । श्रीचन्द्रस्य विलाप श्रुत्वोपदिश्य त पुनर्मृत । तदौर्ध्वदैहिककार्ये आर्य-यवनयोर्विवादो जात इति श्रुत्वा पुनरागतो नानक । "अर्धम् आर्या दहन्तु अर्धं यवना निखनन्तु" इत्यब्रवीत् । एकदा ज्यायान् भ्राता-ऽनुजमाह न खाद मासमिति । श्रुत्वेद लक्ष्मीचन्द्र ' शासने नस्थास्यामी" त्युक्त्वा पुत्र भार्यां च रथमारोप्य गगन गत । पर श्रीचन्द्रस्तद्धस्तात्पौत्रमानिनाय । स एवाभूद् धर्मचन्द्रो नानकस्य पौत्र ।

— ० —

## विंशः प्रस्तावः

अङ्गदो यदा द्वितीयो गुरुरभवत्तदा कश्चित्तस्य द्रोहमकरोत् परन्तु तथानाभूत्। अङ्गदोऽब्रवीद् यद् यद्यत्र स मम विरोधी संन्यासी कुप्यते तदाऽवश्यमेव वृष्टिर्भविष्यतीति। इत्थमङ्गदस्तत्रामरदासनामकं कुविन्दं त स्थापयित्वा स्वयं गतवान्। अमरदासस्य पुत्री भानी बभूव। तस्या विवाह- रामदासेन सहोजातः। रामोऽमृतसरसि तीर्थे वसन् हरेः शरण गतः।

तस्य त्रयः पुत्रा बभूवुः। पृथिवीचन्द्रो महादेवोऽर्जुनश्च। पितुर्वचनानुसारमर्जुनो गुरुत्व प्राप्तवान्। स लाहोरं गतः। तत्र चन्द्रलालः कश्चिदद् ह्यताऽर्जुनाय। जहाँगिरस्तं बबन्ध। अर्जुनानुसारं शिष्याः हरिगोविन्दं गुरुत्वेभिषिञ्चन्त। अर्जुनस्येच्छामृत्युर्जाता। हरिगोविन्दो जहाँगिरं गत्वा तस्मै च धनानि प्रदायाप्रयीचन्द्रलालं बद्धम्। हरिगोविन्दश्च लालं महति इक्षुयन्त्रे प्रपीडयामास। जहाँगिरः पुनर्द्रव्यमयाचत। न ददौ हरिः। हरिं बबन्ध। युद्धमभूत्। यवनसेनां निपात्य गुरु कर्तृपुरे न्यवसितुमारभत। तत्रासीत् कश्चिद्विधिचन्द्र-। स च यवनकारागाराद्धयमानीय गुरवे प्राददात्। एकदा हरिगोविन्दस्य पुत्रो गुरुदत्तो मृगभ्रमाद्गामवधीत्। पिता कुपितोऽब्रवीत्।

"त्यजाम्यहं त्वामहमेव वा त्वया विसर्जितः" इति श्रुत्वा गुरुदत्तो दिवं गत'। पिता विलप्य गुरुदत्तपुत्राय हरिरायाय स्वपदं ददौ। कदाचिच्छाहजहाँ वारणकुम्भमुक्ता, मासप्रमितं लवङ्गं हरीतकीया चेतरी इति वास्तुत्रयं ग्रहीतुं हरिरायपार्श्वे दूतं प्रैषयत्। सच तद्वस्तुत्रयं तस्मै ददौ। नृपो बहु प्रशशंस हरिरायम्।

—०—

## एकविंशः प्रस्तावः

मीरशाहः अवरङ्गजेव-सोदरं दारासकूहं हरिरायं वर्णितवान्। शाहजहाँ दारासकूहाय राज्यं ददौ। दारासकूहो हरिरायमामन्त्र्य तस्मादुपदेशं प्राप। अवरङ्गजेवो दारासकूहमवधीत्। निहत्य च पत्रमलिखद् हरिरायम्। स तत्र न गतवान्। ततोवरङ्गजेवसैन्यानि हरिरायमानेतुमागतानि। परं नाशक्नुवन्। पुनश्छलेनामन्त्रयामास। हरिरायः स्वपुत्रं रामरायं प्रेषितवान्। अवरङ्गजेवः सविषं वस्त्रं रामरायाय प्राददात्। परं तस्य न किञ्चिदभवत्। अन्येद्यु रामरायं वसनेन संछादिते कूपे न्यवेशयत्। परं तस्य न किञ्चिदभवत्। ततो राजा तस्मै म्लेच्छभोजनं प्रदत्तवान्। तदन्नं पुष्पं संजातम्। इत्थमवरङ्गजेवो रामरायस्य महद् वैशिष्ट्यं ज्ञात्वा तं प्रशशंस।

एकदा हरिरायो रामरायं पत्रमलिखत् यत् कथमसौ सिद्धिं प्रदर्शयति यवनसभायाम्। इत्थं रामरायं पिता तत्याज। ततो हरिकृष्णनामकं शिष्यमभिषिषेच। ततो हरिकृष्णो गुरुः संजातः। रामरायो हरिकृष्णं स्वगृहं निनाय। हरिकृष्णः शीतलाप्रकोपेन मृतः। ततः शिष्यैः तेगबहादुरो गुरुर्ज्ञातः। परं तेगबहादुरस्य द्रव्यागमनं सेहे अवरङ्गजेबः। तेगबहादुरः काशीं समागतः। तत्रतः पाटलिपुत्रं गतः तत्र सुलग्ने सुदिने तस्य गोविन्दसिंहनामा पुत्रो जातः। गुरुगोविन्दो गुरुर्जातः शिष्याणाम्। इतो बद्धस्तेगबहादुरः कारागारे कमपि राजानमाहूय तं च ज्ञानमुपदिश्य स्वशिरः छेत्तुमकथयत्। राजा तथाऽकरोत्।

गोविन्दो विष्टन्नानन्दपुरे पितुर्निर्यातनं कर्तुं पञ्चवर्षाणि देव्याः पुरस्ताद्धोमं कृतवान्। चण्डिका प्रकटीभूय तस्मै खड्गं ददौ। ये च कुण्डजलमपिबन् ते सिंहदर्पाः सञ्जाताः। ततोऽवरङ्गजेबसैन्यैर्जातं युद्धम्। गोविन्दः सहासः शरान् विष्टन् सामन्तानां शिरांसि चिच्छेद। बहादुरशाहो गुरोर्भक्तिमाचरत्। गुरुर्नागपुरे द्वारकादाससन्निधे गतः। द्वारकादासो गुरवे केशान् शस्त्राणि च ददौ। पुनर्गुरुः सिंहसैन्येन सह योद्धुं गतः। तत्र केनचित् म्लेच्छेण यस्य पितुर्वधं कृतमासीद्गुरुणा, युद्धं संजातम्। स च म्लेच्छो गुरोः कुक्षिमसिधेनुकयाऽभ्यहन्। तेन गुरोः शरीरे व्रणः संजातः। तदा व्रणदोषात्स दिवं गतः। गुरुर्मृत्युकाले नन्दलालमभाषत भवतां ग्रन्थ एव गुरुः नान्यः इति।

—:०:—

# तत्तत्स्थानानां नामानि विवरणं च यत्र नानको गतवानासीत्

( अत्र प्रस्तावक्रमेण नामानि लिख्यन्ते न तु अक्षरक्रमेण )

स्थाननामानि—काव्याद्युद्धरणानि विवरणानि च ।

१. जयतिवार —' सौभाग्ययुग् जयतिवार इति प्रसिद्ध '– ना० च० २।३
इद ग्रामनाम । "जैसवार इति प्रसिद्ध ।

२ तलवण्डी — "तलवण्डीति नगरी विख्याता भुवि विश्रुता"—ना० च० १।१०७
नानकस्य जन्मस्थानम् ।

३ सुरत्राणपुरम्—ना०च० ३।६४
नानक्या पत्युर्ग्राम ।

४ पक्षक — पक्षके पुरवरे कृतवासो"—ना० च० ४।६६
नानकस्य श्वसुरालय ।

५ आसिकपुरम्—ना० च० ७।५३
यत्र वैणिक फेरुरासीत् ।

६ भारते (जम्बूद्वीपे)— 'जम्बूद्वीपस्य विविधान्प्रदेशानभ्रमयति"
—ना० च० ९।=२
तत्र वङ्ग , उत्कल , कलिङ्ग , आन्ध्र , कर्णाट , केरल , द्रविड ,
सिंहलश्च योगिना दृष्टा ।

७ ज्योतिपपुरम्—सम्प्रति आसामप्रान्ते "कामरूपा" इति प्रसिद्ध । प्राग्ज्योतिप
पुरमगात्"—८।९१

८ अस्पर्शनायाय द्वीप —यत्र कोडनामा राक्षसो मर्दनमपचत् । गुरुश्च त ररक्ष ।
ना० च० १२०।८

९. विश्वम्भरपुरम्—अत्रासीद्रत्नपरीक्षक । "मर्दनस्तु तदादाय विश्वम्भरपुराभिधे"
ना० च० ८।१३९

१० विपद्दरदेश —शुद्धसेनस्य राष्ट्र । 'विपद्दर देश स्वैरगतिर्ययौ" ना० च० ८।१६८

११ शिलमिल्द्वीप —"द्वीप शिलमिलाभिधम्"—ना० च० ६।४८

१२. ब्रह्मपुरम्—"पुरं ब्रह्मपुरं धर्मवचनो भूपतिर्द्विज "—ना० च० ६।४८
१३. वाहीकदेश—पञ्जावस्य पञ्चनदानां मध्ये।—ना० च० ९।६०
१४. देवगन्धारः—"योगी देवगान्धारसंज्ञकम्" —ना० च० ६।८६
१५. अमरनगरम्—"निर्विण्णानां नगरमटवीत्यालपद्योगिवर्य."—६।६६
१६. प्रसरनगरम्—"प्रसराख्य नगरं ययौ यतीन्द्रः।"—ना० च० ६।११०
१७ सुवर्णपुरम्—सुवर्णपुरमित्यभिधेयम्"—ना० च० ६।१२३
१८. सुमेरु —"प्रत्यर्प्य तस्मै स ययौ सुमेरुम्।" ना० च० ६।८४९
१६. मक्का—"मक्केति यद् यवनजातिषु सुप्रसिद्धम्"—ना० च० १०।३
२०. मदीना—"मदीना नय मा धन्या नदीनां जाह्नवीमिव"—ना० च० १०।१६
२१. मेरुगिरिः—मेरौ नव पुराणि। मनोवती, अमरावती, तेजोवती, सयमनी, कृशाङ्गना, श्रद्धावती, गन्धवती, महोदया, यशोवती च। "उदीरितो मे स गिरिं जगाम "—ना० च० १०।६४
२२. हिमाद्रि—"गन्धर्वसिद्धाध्युषितो हिमाद्रि "—ना० च० १०।७४
२३. व्यारगिरि —"ततो व्यारगिरिं प्राप्त"—ना० च० १३।२
२४. लङ्का—ना०च० १५।५१
२५. दरवेलापुरम्—"दरवलाभिध पुरम्"—ना० च० १६।६
२६. सर्जूरपुरम्—"स्वः सर्जूरपुरे खलु"—ना० च० १६।१०
२७. सेतुध धरामेश्वरम्—ना० च० १६।१८
२८. पवनचालित नाम पर्वत —ना० च० १३।५४
२६. ध्रुवलोक—"ध्रुवमगमदसौ योगतो योगिराज " ना० च० १३।१०४
३०. वैकुण्ठम्—"वैकुण्ठमावासमकुण्ठशक्तिः" —ना० च० १३।११३
३१. कैलास.—"कैलासमिन्दुधवल यतिमाससाद"—ना० च० १५।२
३१. उदारगिरि —ना० च० १५।१२
३२. शैल्यसन्यम्—ना० च० १५।१६
३३ मत्स्यनगरम्–ना० च० १५।४९
३४. लहरीनगरम्–ना० च० १५।४९
३५ सुरतीनगरम्–ना० च० १५।४६
३६. अचलवटाल.–ना० च० १६।४०
३७ लुभदेश –ना० च० १६।६७
३८. गान्धारः–ना० च० १६।१०५
३६. बालनाथपर्वत –ना० च० १७।४९
४०. कुरुक्षेत्रम्–ना० च० १६।११७

४१. द्वीपेषु प्लक्षद्वीपः, शाल्मलीद्वीपः, क्रौञ्चद्वीपः, शाकद्वीपः, दधिद्वीपः, पुष्कर-
द्वीपश्च ।

४२. मद्रदेशः—"गतो मद्रदेशं विशेषेण शिष्यैः" – ना० च० २०।२६ अत्र रामदासो
गतवानासीत् ।

४३. लाहौरः–ना० च० २०।३९

४४. कर्तूपुरम्—ना० च० २०।७६
"सार्धं गुरुः कर्तूपुरं ससार" २०।७५

४५. आगरा—२०।६१

४६. कलहूरः–"शतद्रुतीरे कलहूरदेशः"–ना० च० २०।८६

४७. धकालः–ना० च० २१।८६

४८ काशी-"तीर्थान्यटित्वाथ जगाम काशी" – २१।११०

४९. पाटलिपुत्रम्–२१।१११

५० इन्द्रप्रस्थम्–ना० च० २१।२०३

५१. मथुरा–ना० च० २१।२०३

५२. नागपुरम्—ना० च० २१।२०५

५३ वेभा–नदीनाम यस्यामहर्मुखे कृतमज्जनो नानको मोन्ममज्ज । गतश्च तत्रतो
वनम् ॥ "वेभां कृतनिमज्जनः"–ना० च०६।३४

—:०:—

# महाकाव्ये समागतानां नाम्नां परिचयः

१. अङ्गदः-नानकस्य सर्वप्रियः शिष्यः शिष्याणां द्वितीयो गुरुः।
२. अधरकः-सालसरायस्य भृत्यः।
३. अहंदानः-थावरस्य भृत्यः।
४. अहंसेनः— ,,
५. अमरदासः—शिष्याणां तृतीयो गुरुः।
६ अर्जुनः- ,, पञ्चमो गुरुः।
७. अवरङ्गजीबः-मुगलराजः।
८. अजितोरधावः-मूलचन्द्रस्य ( नानकश्वसुरस्य ) पुत्रः।
९. आदरमानः-नानकस्यान्यतम शिष्यः।
१०. उवारे खानः-नानकायान्तिमः शिष्यः।
११. कालवर्मा ( प्र० कालूचन्द्र वर्मा )-नानकस्य पिता।
१२. कमलनयनः—सुवर्णपुरस्य राजा।
१३. कृष्णः—नानकमातुलः।
१४. क्रोडः—तन्नामा राक्षसः।
१५. कनीफाः—गोरक्षशिष्यः।
१६. कङ्करः— ,,
१७. कल्याण—शीलसेनस्य शिष्यः।
१८. खेलः-केयकनगरस्य युवराजः।
१९. गङ्गारामः-उदासिवर्यविदितः, काशिकपण्डितः।
२०. गुरुदत्तः-हरिगोविन्दस्य पुत्रः।
२१. गोविन्दसिंहः-दशमो गुरुः शिष्याणाम्।
२२. गोरक्षनाथः-मणिशैले नाथानां गुरुः।
२३. गोपीचन्द्रः-गोरक्षशिष्यः।
२४. घुघ्घुनाथः-गोरक्षशिष्यः।
२५. चन्द्रलालः-म्लेच्छसखो योऽर्जुनं वद्धमासीदुद्यतः।
२६. जहाँगिरः-मुगलराजः।
२७. जलालः-म्लेच्छाचार्यः।
२८. जयरामवर्मा-नानक्याः पतिः।
२९. जुझावरसिंहः-गुरुगोविन्दस्य सेनानी।

३० तेगबहादुर –नवमोगुरु शिष्याणाम् ।
३१ तृप्तादेवी–नानकमाता ।
३२ दत्तात्रेय –व्यारगिरौ अजगरोपमो मुनि ।
३३. दारासकूह –शाहजहाँपुत्र ।
३४ द्वारकादास –नानकशिष्य । सार्धशतद्वयीसमवया गोविन्द केशान् शास्त्राणि च ददौ । अस्यैव शिष्यो देवराजो महाकाव्यस्यास्य रचयिता ।
३५ दुष्टबुद्धि –देवलूतस्य दूतो योऽन्धोजात ।
३६ देवलूत –गन्धारे दैत्यसैन्यराज ।
३७. धनखान –राजा यो नानकाय द्रुह्यति स्म ।
३८ धर्मवचन –शिलमिलद्वीपे राजा ।
३९ धर्मनाथ –गोरक्षशिष्य ।
४० नानक –गुरुनानक ।
४१ नानकी–नानकभगिनी ।
४२ परशुनाम क्षितिपालस्य मन्त्री ।
४३. प्रह्लाद –व्यारगिरावेवापरो ऋषि ।
४४. प्राणनाथ –गोरक्षशिष्य ।
४५. पृथिवीचन्द्र –गुरु अर्जुनस्य भ्राता ।
४६ फेरु –आसिफपुरवासी वणिक ।
४७ बालसिन्धु –नानकस्य सखा, भक्त सहवासी, ग्रामीणदर्च ।
४८ बाबर –मुद्गलराज ।
४९ बालवराहिम – बिराहिमस्य शिष्य ।
५०. बहादुरशाह –औरङ्गजेबस्य पुत्र ।
५१. बालगुग्राया–गिरौ पथिक सेवक ।
५२. भागमल्ल –राजा, उदासिमतावलम्बी ।
५३ भूतया –गोरक्षशिष्य ।
५४ मर्दन –वैणिको नानकसखा, सहयोगी च ।
५५. मूलचन्द्र –नानकश्वसुर ।
५६ मलिक –म्लेच्छराज ।
५७. मत्स्येन्द्र –गोरक्षशिष्य ।
५८. मङ्गल – ,,
५९ मानचन्द्र – ऐकयनगरराज ।
६०. माल –शिष्यो नानकस्य ।
६१ मीरगदासेन –बाबरस्य भृत्य ।

६२. मीरमदः—जहाँगिरस्य सेनापतिः ।
६३. मीरशाहः—औरङ्गजेबभृत्यः ।
६४. रामदासः—चतुर्थो गुरुः शिष्याणाम् ।
६५. रामरायः—हरिरामस्य पुत्रः ।
६६. लालवर्मा—नानकपितृव्यः ।
६७ लक्ष्मीचन्द्रः—नानकपुत्रः ।
६८. लहुरायाः—गोरक्षशिष्यः ।
६९. विरोचनतातः—पक्षिणां प्रभुः यो मानुषीं गिरमवोचत् ।
७०. विष्णुमित्रः—गन्धारे मुद्गलः ।
७१. विमलज्योतिः—नानक-सहयोगी त्रेतायामासीत् नानकस्य भृत्यः ।
७२. व्यूढोरधावः—शिष्यो नानकस्य ।
७३. विराहिमः—शेखफरीदपत्तने योगी ।
७४ विधिचन्द्रः—चौरो यः शिष्यत्वं गतः ।
७५. शिवरामवर्मा—नानकपितामहः ।
७६. श्रीचन्द्रः—नानकस्य प्रथमः पुत्रः ।
७७. श्यामः—मूलचन्द्रस्यानुचरः ।
७८. शुद्धसेनः—विषहरदेशस्य राजा ।
७९. शम्भुनाथः—गोरक्षशिष्यः ।
८०. शीलसेनः—तपः कर्ता सैन्यशैले ।
८१. सिद्धंमन्यः—क्षितिपालः ज्योतिषपुरे । सम्प्रति कामाख्येति प्रसिद्धः ।
८२. सुलक्षणी—नानकपत्नी ।
८३. सालभरायः—मणिज्ञाता ।
८४. स्वनकारहुसेनः—यो मक्कातः शिवमूर्तिमपनेतुगतस्ततोऽन्यो जातः ।
८५. सुखचपतः—पूर्वजन्मनि नानकभृत्यः ।
८६. सहजादः—मर्दनपुत्रः ।
८७ सज्जनः—सहलादस्य यः सर्वलुण्ठ पश्चाज्जातः शिष्यो नानकस्य ।
८८. सफरः—विदरनगरेयवनः ।
८९. सैन्धवः—जलालस्य शिष्यः ।
९०. हरिदयालुः—ज्योतिर्विद् । नानककुण्डलीनिर्माता ।
९१. हिलोरधावः—मूलचन्द्रपुत्रः ।
९२. हरिगोविन्दः—षष्ठो गुरुः शिष्याणाम् ।
९३. हरिरायः—सप्तमो गुरुः शिष्याणाम् ।
९४. हरिकृष्णः—अष्टमो गुरुः शिष्याणाम् ।

—०—

## नानकस्य शिष्याः

१. अङ्गदः—शिष्येषु श्रेष्ठः शिष्याणां द्वितीयो गुरुः।
२. अधरक—सालसरायस्य पारिपार्श्वकः।
३. आदरमान—शास्त्रार्थे पराजितः शिष्यतां गतः।
४. इन्द्रसेनः—शुद्धसेन-भ्राता।
५. इवारेखानः—शास्त्रार्थे पराजितः शिष्यत्वमवाप।
६. कोड—असपर्शनाथद्वीपे तन्नामा राक्षसः।
७. खानचन्द्र—केकयनगरवासी।
८. देवलूत—गान्धारे दैत्यराज।
९. धर्मधवन—शिलमिलद्वीपस्य राजा।
१०. फेरुः—वैणिको यवनः। पूर्वजन्मनः सखा नानकस्य।
११. बालसिन्धु—नानकस्य ग्रामीणः सहयोगी च।
१२. माल.—ध्वस्तसमस्तमोहो गतः शिष्यत्वम्।
१३. मर्दन.—वैणिकः सहयोगी च गुरोः।
१४. मानचन्द्र—केकयनगरवासी।
१५. वराहिम—शेलकरीदपत्तनस्य योगी।
१६. विमलज्योति—त्रेतायामासाञ्जनकस्य भृत्य।
१७. विष्णुमित्र—गान्धारवासी मुद्गल।
१८. व्यूढोरधाव—ध्वस्तसमस्तमोहो गतः शिष्यतां नानकस्य।
१९. सहजादः—मर्दनस्य पुत्रः।
२०. सज्जन—एतन्नामा चौर।
२१. सफर एतन्नामयवनः विश्वरनगरस्य।
२२. सुखचपत—पूर्वजन्मनि नानकस्य भृत्यः।
२३. सालसराय—मणियोद्धा।
२४. सिद्धिमन्यः—वगे, ज्योतिषपुरे क्षितिपालः।
२५. शुद्धसेन—विपहरदेशस्य राजा।

—.०—

# शिष्यस्याङ्गदस्य परीक्षाः

## परीक्षा—१

एकदाङ्गदो गुरो सेवार्थं ( लङ्गरदानाय ) लवणमानीतवान्। गुरु गृहे न दृष्ट्वा स क्षेत्रं गतवान् यत्र गुरु कर्दमैजलैश्च पूरितानि तृणानि कर्तयित्वा तानि गृहमानेतु शिष्यान् प्राह स्म। अन्ये शिष्यास्तस्याज्ञा न मेनिरे। परन्त्वङ्गदस्तथा कृतवान्। कर्दमपूर्णतृणानयनेनाङ्गदस्य वस्त्रं मलिनं जातम्। सुलक्षण्या पृष्टो नानक प्राह यदङ्गद एवास्य योग्य आसीत्। गुरुर्नितरां प्रसन्नो जात। ना० च० १६ प्रस्तावे।

## परीक्षा—२

शीतकाले गुरुरितावत्या अविधे प्रातरेव स्नानं कर्तुं गच्छति स्म तत्रतस्य साहाय्यं कर्तुमङ्गदादयश्च शिष्या अपि गच्छन्ति स्म। एकदा नानकस्य तत्रागमनात्पूर्वमेवाङ्गदादयस्तत्रागच्छन्। तदानामत्यधिकं शीतपातं भवति स्म। करकापातोऽपि प्रारब्ध। अङ्गदं त्यक्त्वाऽन्ये ततः समायाता परन्त्वङ्गदो भयानकं कष्टं सेहे। गुरो सेवां च चक्रे। एतेन गुरुरतितरां प्रसन्नो जात।—ना०च० १९ प्र०

## परीक्षा—३

एकदा शीतकाले नानकस्य गृहस्य भित्तिः पतिता नानकः शिष्यान् तन्निर्मातुमादिदेश। परन्तु तस्य पुत्रास्तथा न चक्रु। अङ्गदो गुरोराज्ञां शिरसि निधाय कार्यं प्रारब्धवान्। भित्तेरर्धनिर्माणं यदा जातं तदा गुरु पुनरपि तां पातयित्वा पुनर्निर्माणायादिदेश। परमङ्गद पुनरपि प्रारेभे निर्माणम्। इत्थमनेकधा तथा करणेऽङ्गदस्योत्साहं कार्यकौशलं च ज्ञात्वा गुरुर्नितरां तं प्रशशंस।

ना० च० १९ प्रस्तावे।

## परीक्षा—४

एकदा नानक पुत्रानाह रात्रौ वस्त्रं स्वच्छं कर्तुम्। पुत्रास्तथा न चक्रुः। अथ च ते रजकस्य वस्त्रं दातुमकथयन्। परन्त्वङ्गदो गुरोराज्ञां सद्य एव पूरितवान्। एतेन गुरु प्रसन्नो जात। अथ च ये केऽपि यात्रिका नानकं द्रष्टुं तत्रा गच्छन्ति स्म तेषामपि वस्त्राणि अङ्गद एव रञ्जयति स्म। इदमप्यासीद् गुरो प्रसन्नतायाः कारणम्।

ना० च० १९ प्रस्तावे

## अङ्गदस्य नामकरणम्

अङ्गदस्य पितु प्रदत्त नाम "लहना" इत्यासीत्। परन्तु गुरुणा तन्नामपरिवर्तन कृतम्। एकदा नानक प्राह स्म अङ्गद यत् मयि तवासीमभक्ति त्वमेव मम सर्वप्रिय। तव मम च स्वरूप तावदधुनैक जातम्। तव शरीररचना ममाङ्गादेव जातास्ति। अतस्त्व ममाङ्गद।

—ना० च० १९ प्रस्तावे



# नानकस्य पूर्वजन्मवृत्तान्ताः

(१)

## फेरुनानकवृत्तान्तः

आसिकपुरे फेरुनामा कश्चिद्वैणिक आसीत्। नानकाज्ञया मर्दनस्तत्रागच्छत्। फेरुः प्रह्लादाद् वीणां सप्तमुद्रां गृहीत्वा यस्या नाम "त्रिपञ्ची" इत्यासीत्। स्वयं चागतो नानकदर्शनाय फेरुः प्रणम्य नानकं पूर्वजन्मवृत्तान्तं स्मारयति। पुरा ज्ञानपुरनामके ग्रामे प्राणनाथ-नामा कश्चिदासीत्। तस्य आस्ताम् द्वौ सुतौ सुतात्रिका। तयोरेकः सुन्दर-नामा नानक एवासीत् प्रेमनामा च फेरुः। एकदा पिता मुरारिगुणवर्णने स्वार्थहानिं दृष्ट्वा निष्कासयामास पुत्रौ। ततस्तयोर्गीति सर्वस्य तोषकरी जाता। तपस्वी चैकस्त-स्मिन्वने प्रसन्नो भूत्वा विपञ्चीमिमां प्रेमनाम्ने फेरवे प्राददात्। सेयमासीद्विपञ्ची। पुनश्च स तपस्वी सुन्दरनामानं वैणिकं प्राह स्म यत् सोऽस्मिन् जन्मनि भावप्रबन्धैरनु-कम्प्य मोक्षमार्गं ग्राहयिष्यति। इत्थं तयोरभूत्पूर्वजन्मवृत्तान्तस्मरणम्।

(२)

## मीन-नानकवृत्तान्तः

विषहरदेशं गच्छन्नानकः समुद्रं प्राप्तः। तत्र ३५×५ क्रोशपरिमितो मीनो नानकं नीत्वा चलितः। तदानीं नानकं प्राह मीनो यत् त्रेतायां स आसीन्नानकस्य मित्रम्। केनचित्कारणेन नानकः कुपितो जातः स च शापदात् शापं मित्राय येन ■ मीनो बभूव। इति कथां स्मारयन्मीनो जगाद नानकं तस्योद्धारं कर्तुम्। गुरुश्च तस्य प्रसन्नो जातः। दिनान्ते स मीनो मृतो दिव्यगतिं च प्राप।

(३)

## शुद्धसेननानकसम्वादः

पञ्चदशदिनानि यावत्पयस्यवज्जल एव गच्छन् योगी विषहरदेशं ययौ। तत्रासीद्राजा शुद्धसेनः तस्येन्द्रसेनो भ्राता च। नानकं मर्दनं च सत्कृत्य शुद्धसेनो गुरुं पूर्वजन्मवृत्तान्तं स्मारयन्नब्रवीत् यत् जनकस्य पार्श्वे त्रेतायां ते त्रयोऽपि मित्राण्यासन्। इत्थं सामुद्रे विषहरदेशे शुद्धसेनेन्द्रसेनाभ्यां पलितो योगी शिलमिल-द्वीपं जगाम।

( ४ )

## कमलनयन-नानकसम्वादः

सुवर्णपुरनामके नगरे कमलनयनो नामा राजासीत्। तत्र जगाम यतिपति-धर्मसिंहेन सह। तत्र राजानं दृष्ट्वा यतिरवोचत् स यत् कलेः प्रभावाद् रुद्धबुद्धिना भवता न स्मर्यते पूर्वजन्मवृत्तान्तः।

त्रेतायां जनकस्य पार्श्वे नानको गोवर्धननामासीत् कमलनयनश्चासीत् समाचन्द्रनामा। स्मृत्वेमं वृत्तान्तं राजा तस्य शिष्यत्वं गतः। नानकश्च तेनार्पितं राज्यं पुनस्तस्मै प्रादाय सुमेरुं गतवान्।

( ५ )

## कल्याण-शीलसेन-नानकवृत्तान्तः

सैन्यशैले गिरौ शीलसेननाम्नो गुरोः शिष्यः कल्याणनामा यतिः प्रतिवसति स्म। स नानकमागत्येदमब्रवीद्यत् स त्रेतायां राज्ञो जनकस्य पार्श्वे तस्य धर्मभ्रातासीत्। शीलसेनः कर्त्ता कर्त्तेति जपन्नासीत्। शीलसेनो यदापृच्छन्नानकं यत्क आसीत्तस्य गुरुरिति तदा नानकोऽब्रवीद्यद् वरुण एव। विद्यां च स जनकात् प्राप्तवान्।

( ६ )

## सुखचपत-नानकवृत्तान्तः

मत्स्यनगरं गच्छन् योगी ददर्शैकं युवानं सरसि स्नान्तम्। तं जानानो नानकस्तत्र गतः। तं दृष्ट्वाऽकथयद्यत्स पुरा नानकस्य भृत्य आसीत् तस्य च नाम तदानीं सुखचपत इत्यासीत्। स्मरन्नतीतवृत्तान्तं स तस्य शिष्यत्वं गतः। अथ तेन सार्कं समर्दनो नानको मत्स्यनगरीं लहरीनगरीं सुरत्याख्यं च नगरं ययौ॥

( ७ )

## विमलज्योति-नानकवृत्तान्तः

गान्धारं गच्छन् गुरुरेकं षोडशाब्दं कुमारं तडागे सिस्नासुं दृष्ट्वाऽपृच्छत्कोऽसि-त्वमिति। सोऽब्रवीद्यत् चिरवियुक्तं भ्रातरं मृगयामीति। तस्य नाम विमलज्योति-रित्यासीत्। त्रेतायां पुरा स जनकस्य भृत्य आसीत्। नानकोऽकथयद्यत्स एव (नानक एव) तस्य भ्राता गोवर्धनाभिध आसीत्। अस्मिन् जन्मनि स नानकः।

—०:—

# जनको नानकोऽभवदित्यस्य जनवादस्य मूलम्

नानकस्य जन्मान्तरस्य गुरुर्जनक ईक्षणशैले वसन्नाचरति स्म तपस्याम्। शुकश्चासीत् तस्य शिष्य। शीलसेनेन धर्मभ्रात्रा सह वार्तां समाप्य नानकस्तत्र गतवान्। नानकस्तं प्रणनाम जगाद च तस्य पूर्वजन्मवृत्तान्तम्। अथ च नानको जनकं त्रेताया प्रसृतं यश स स्मारयति स्म। तदानीं जनकस्य नानकेन सह प्रीतौ तत्त्वज्ञाने च ऐक्यमासीत्। इयमेव कथा जनको नानको भवदित्यस्य जनवादस्य [1]मूलम्।

ना० च० १५ प्रस्तावे श्लोक २६ तः ४० यावत्।

—:०:—

---

१. इति शीलसेन वचसामवसाने यतिनान्यधायि गुरुरीश्वर एव।
वरणीऽस्य नामवरमन्त्रमबोधजनकाद् गुरो क्वचिदलभ्यत विद्या॥
प्रस्टो बभूव जनक स शुकस्त
प्रणमन्तमादरपरं परिरेभे॥
तत प्रसन्नो जनको जगाद सर्वं स्मरस्यङ्ग ? पुरा चरित्रम्।
यशो मदीयं यदिदं ब्रवीषि तवैव तद् भात्यकृतघ्नताया॥
प्रीत्या तव ममाभेद तत्त्वज्ञानदशापि च।
यन्मूलो जनवादोऽयं जनको नानकोऽभवत्॥
ना० च० १५। २६-४०

# अजपाजपस्तस्य महिमा च

व्यारगिरौ दत्तात्रेयोऽवधूत 'सोऽह' मित्यजपया जपति स्म । गुरुनानकेन पृष्ट सोऽब्रवीत् यत् य जप हस सुषुम्नाया स्थित शम्भु ) अयत्नान् 'सोऽहम् इत्यने नानारत जपति तथा च येन जपेन निरावरण परोक्षम् आत्ममहो ध्यायति हस स एव जप अजपाजप" इति । एतेन परोक्षस्य विष्णोर्जपेन प्रत्यक्षस्य तस्यावलोकन भवति । तथा च विस्मृतस्य महस खलु रूप स्मर्यते । प्रथम परमधामप्रपित्सुर्लिब जपेन जगदीशनाम जपन् प्रथमा सिद्धि प्राप्नोति तदनु तस्य कृपावश सन् 'सोऽहम्' इत्यजपया जपति तथा च स्वात्मन प्रकाशमासादयति ।

— ० —

---

१ नानकचन्द्रोदये— क दत्तोऽवदच्छृणु परेण न कश्चिदय
सम्भापणादिभिरहेरवसुखानुभूति ।
ख हसो जपत्यविरतामजपामयत्ना
द्धयय निरावरणमात्ममहो परोक्षम् ।।७।१२

'Repetion of mantras austereties Set aways of living or deeds of merit leave us dessitute even before our journey ends GauriMala of Arjun

ग अजपयापि विमुक्तजनस्य कि
किमुमनोपितमस्य हि गिप्यते ।
इदमनुग्रहणाय परस्य चेद्
दतिधिस कृतिरप्यपराहता ।।१०।१३

घ सोऽहमित्यजपया स्मरणीय
विस्मृतस्य महस खलु रूपम् ।
घ स्वप्रकाशमहसामपरोक्षे
तत्र तत्र भवता किमु यत्न ।।११।१२

छ पूर्व जपतो जगदीशमेव
सिद्धि प्रजन्यस्य कृपावशेन ।
सस्कारतस्त च जपति भूय
प्रारब्धशेषेण तनु दधाना ।।१२।१२

ज आहूयते हि दूरस्थो न तु सनिधिसस्थित ।
परोक्षस्य जपो विष्णो प्रत्यक्षस्यावलोकनम् ।।१५।१२

# नवधा-भक्तिः

व्यारगिरौ दत्तात्रेयोऽवधूतो नानकमाह "किं जपसि किञ्च स्मरसीति" नानकः प्राह 'प्रणवं जपामि तेनैव तं पश्यामीति'। अवधूतः प्राह 'यदि निराकारो दृष्टस्तदा ब्रूहि स किंरूप इति।" अवधूतं नानकः प्राह 'असुलभोऽपि मुकुन्दः स भक्तिवशंवद' इति। मनसोवचसोऽप्यगोचरः स भजतां मनोनुगं नयनानन्दकरं कलेवरं भजते। अतः परमधाम प्राप्तुं जनैर्भक्त्या सेवनीयो मुकुन्दः। इयं भक्तिर्नवविधा भवति। श्रवण कीर्तनं स्मरणं पादसेवनम्, अर्चनं, वन्दनं, दास्यं, सख्यम् तथा आत्मनिवेदनम्। इत्थं भक्त्या प्रेमाश्रुपुलकितो भक्तः भक्तच्छन्दानुवर्तिनं मुकुन्दं सेवमानः परमपदं प्राप्नोति। 'गुरुर्नानकोऽप्याह यदि कश्चिदीश्वरं भजति तदा स सर्वं प्राप्नोति। इत्थं निर्गुण सगुणश्च ईश्वरो ज्ञानेन भक्त्या च प्राप्यते मानवैः। ज्ञाने साधना राजयोगोऽजपाजपश्च भक्तौ साधना भक्तिरेव॥

—:o—

---

१. क. ज्ञानं मर्म रहस्यं लोकाद्गीता गिरश्चापि।
योगो भक्तौ ज्ञाने प्रयाजवच्चाङ्गता भजति ॥२२।१३

ख. साधनभक्तेर्ज्ञानं ज्ञानात्फलभक्तिरुत्पन्ना।
साक्षादात्मपदस्थितिहेतुर्भक्तं रुदीर्यते स्पष्टम् ॥२३।१३

ग. क्वचित्प्रसन्नस्त्वनुराग एव ज्ञानानपेक्षः प्रददाति मुक्तिम्।
गोप्योऽनुरक्ताः स्मरकोटिकान्ते कृष्णे विमुग्धा अपि मुक्तिमापुः ॥२४।१३

घ. श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥२५।१३

ङ. इयं नवविधा भक्तिः करोति परिशीलता
मनुरक्तिमपरिच्छिन्ना प्रेमाश्रुपुलकाञ्चिताम् ॥२६।१३

छ. मृदुनि मनसि सर्वभाविते सा भवति पुरातनपुण्यबीजरूपा।
अलमलमितरेण साधनेन प्रकटमियं कुरुते परं पुमांसम् ॥२७।१३

ज. भक्तच्छन्दानुवर्तित्वं मुकुन्दस्य परिस्फुटम्।
प्रह्लादवचनात् स्तम्भादाविरासीन्नृकेसरी ॥२८।१३

२. आसादीवार—गु. प्र. सा०।

## नानकेन व्याख्यातं प्रतिपादितं च उदासिमतम्

नानक[1] सर्वप्रथमम् उद्दास नाम सन्यास तस्य भेदाँश्च लाल स्वपितृव्य श्रावयति। एतश्च वर्णित वर्तते ७१।१७ त १०४।१७ पर्यन्तम्। नानकमते ज्ञानस्य सम्पादनमेव मुख्य वर्तते तत्तु ज्ञान येन केनापि पथा सम्पादनीयम्। जनाना फल भक्षणे तात्पर्यं भवतु[1] न तु वृक्षगणनायाम्। तस्य ज्ञानस्य सम्पादनाय साधना कर्तव्या भवति। साधनया मानापमानस्य सर्वथा समुन्मूलन भवति हृदि। मानापमानचकित कोऽपि सिद्धिं न प्राप्नोति साधनाव एव ज्ञानिनो जाता स्त्रीशूद्र-दैत्यराक्षसा पक्षिगश्च। साधना चैपोदासिमतेनैव सम्पादयितव्या यतो हि शैवेषु वैष्णवेषु च परस्पर विरोधो वर्तते। अत औदासीन्यमेव विदधीत सर्वोऽपि। यश्च कृतामहो भवति स्नानादिशुद्धाकरणे योगे गुरौ मन्त्रे च स एवोदासिमतेन साधना कुर्वीत इति। इद तु पुराण मत पुराणे गदितम्। अत इद मत वेदपुराणवाह्या न उपाश्रयेरन्। उदासी स एव भविष्यति यो जगत्युदासीव ब्रह्मणि कृतावधानो भवति। नास्य मतस्य मुण्डत्वे जटिलत्वे नग्नत्वे [1]कौपीनाच्छादनत्वे वाग्रह। उदासिनो-वर्णाश्रमाभिमानेन शून्या भवन्ति। ते ज्ञानान्तरापरस्तेभ्य कर्मभ्यश्च बहि तिष्ठन्ति। उदासिना हृदि सर्वदा [1]क्षमा, दया, सन्तोष मैत्री च स्यु। जातनिर्वेद सन् विश्व च नश्वर भावयन् जन प्रथम सन्यस्येत्। सन्यासी भूत्वा[2] भिक्षुरूपे त्रीणि ऋणानि[3] अपाकृत्य जन परिव्रजेत्। तत्र एकदण्डिना त्रिदण्डिना वेति सता परिभ्रमन कर्तव्यम्। इत्य परिव्राट भूत्वा भिक्षा चरन् यतिर्जायतेऽचिरादेव। सदा शरावसम्पातादौ[4]

---

१. फलाना भक्षणेनार्थो वृक्षाणा गणनेन किम्।

१. मुण्डो जटिलो नग्न कौपीनाच्छादनो वापि
ब्रह्मणि कृतावधानो जगत्युदासीह्युदासी स्यात्।

१ क्षमा दया च सतोष सवत्रश्वरदर्शनम्।
मैत्री च सर्वजीवेषु सन्यासिव्रतमुत्तमम्॥

२ ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रम।

३. मातृपुत्रदारारूपाणि।

४ विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जन।
वृत्ते शरावसम्पाते नित्य भिक्षा यतिश्चरेत्।

नित्यमेव यतिश्चरेत् भिक्षां परमिमां भिक्षां न लिप्सेत "यतिरनुशासनवादादिना। यतिश्चतुर्विधो भवति कुटीचकः, बहूदकः, हंसः, परमहंसश्च। तेषां त्रयो भेदाः ज्ञानसन्यासिनो वेदसन्यासिनो धर्मसंन्यासिनश्च।
ते पञ्चविधाः उदासीनः, साधकः, नैष्ठिकः, वनाश्रयः, विरक्तश्च।

अत्रेदं ज्ञातव्यमस्ति यद् भक्तिर्द्विविधा-विष्णुभक्तिः शिवभक्तिश्च। तत्रैतत्रोदासिनो विष्णुं भजन्ते न शिवम्। एकदा गौतमः कॉश्चिद् ब्राह्मणान् अनभिमतमाचरतो दृष्ट्वा तेभ्यो द्विजेभ्यो वेदविहीनान् भवितुं शापं ददौ। परन्त्विमे ब्राह्मणाः शिवस्योपासनां कुर्वन्तः प्रार्थनया शिवः सन्तुष्टो भूत्वा तेभ्यः कापालादिसप्तमतं प्रदाय तेषामुद्धारं कृतवान्। अतः कापालं, जाङ्गलं, वामं, भैरवं, पञ्चरात्रकम्, शैवम्, पाशुपतश्चेति सप्तमतं शैवमतं शैवमार्गो वा कथ्यते। उदासं नाम सन्यासमतं वैष्णवमतमिति नास्त्यत्र चर्चैव सामञ्जस्यस्य॥ अतः समस्तेषु मतेषु भूत्वोदासीनः उदासं नाम संन्यासं प्रवर्तयेत्। तत्रः—

"न जटासु न मुण्डत्वे न विभूतौ न चन्दने। दिगम्बरत्वे वसने नाग्रहः स्यादुदासिनाम्" इति। आत्मचिन्तका उदासिन प्रियंवदाः सन्तो मान्या भवेयुः। रौद्राक्ष्यां पौत्रजीव्यां वा मालयां ब्रह्मसत्यताप्रतिपादकं मन्त्रं जपन्तो निवृत्तिमार्गैकरताः शिष्याः केशान् श्मश्रूणि च बिभृयुः। इत्थं च ते श्रद्धाविश्वाससम्पन्ना ग्रामे ग्रामे गृहे गृहे भाषया लिखितस्य ग्रन्थस्य प्रचारं कुर्युरिति॥

देश्यैः सुबोधमधुरैः परमात्मतत्त्वं
वाहीकवर्गमपि बोधयताब्जसैव।
द्वैतान्धकारमपनीयत नानकेन
सन्दर्शितस्तनुभृतामपवर्गमार्गः॥

—ना० च०—१५।१.

## उदासी-सम्प्रदायः

उत् अर्थात् विश्वप्रपञ्चाद्बहिर्विरक्तः आसीनः अर्थात् उपविष्टः त्यागी सन्यासी उदासी इति व्युत्पत्तिलभ्योऽर्थः। उदासीसम्प्रदायो नानकशाहीसाधूनामेको भेदः। उदासिनो विश्वसन्ति यत्सम्प्रदायस्यास्योद्गमः "ॐकारेण" जातः। तस्मात् ७३ तमायां वंशपरम्परायां नानकपुत्रः श्रीचन्द्रो व्यवस्थापितवानमुं सम्प्रदायम्। तदनन्तरमुदा-

---

१. नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥

सिन श्रीचन्द्रस्य १६ तमाया वंशपरम्पराया १७६३ १८६३ शताब्द्या वनखण्डीजी जात इति प्रतिपाद्यते। वनखण्डीमहोदयोऽथ सिन्धदेशे सिन्धुनद्या सविधे साधुवेलाया स्थापन कृतवान्। तदनु तस्य ४थंतमाया परम्पराया गणेशदासजी-महोदय १६४९ ई० शताब्द्या सिन्धदेशत साधुवेलामानीय काश्या भदैनीनामके स्थाने स्थापितवान्। अस्य 'अखाढा' पदवाच्या शाखा काश्या वृन्दावने उज्जैने च दृश्यन्ते। सन्ति चास्य चतस्र शाखा।

( १ ) फूलसाहेबमहोदयप्रवर्तिता बहादुरपुरस्य शाखा।
( २ ) बाबाहसनमहोदयकृता आनन्दपुरस्य निकटे चरणकौलस्य शाखा।
( ३ ) अलमस्तसाहेबमहोदयस्य नैनीताले।
( ४ ) गोविन्दसाहेबमहोदयस्य शिकारपुरे।

कुम्भस्य समये एतेषा विशेषा उत्सवा सम्पद्यन्ते। एते 'नमोब्रह्मणे' इति मन्त्रेणाभिवादयन्ति। दीक्षाग्रहणात्पश्चादेतेषा नूतनानि नामानि भवन्ति। यत्र दास इति, शरण इति, परमहस इति आनन्द इति वा शब्द अन्ते दृश्यते। एतेषा धार्मिक-ग्रन्था सस्कृतभाषाया सन्ति। उदासिना बहव सस्कृतविद्यालया सन्ति। महान्त केशपाश धारयन्त उदासिनो गैरिकवस्त्र स्वच्छवस्त्र वा धारयन्ति। तत्र केचित् मुण्डिनो भव त इतरे रुद्राक्षमपि धारयन्ति।

दीक्षा गृहीत्वा स्वप्रियमन्त्रेण "चरणसाधुका धोघो पियो, अरप साधुको अपना जियो इत्यनेन चरणोदक पिबन्ति। एतेषा दार्शनिकविचार' दशनामि-सम्प्रदायस्य विचारैणैक्य रक्षति। परन्तु यत्र दशनामिनो स्मार्ता भवन्ति तत्रो-दासिन श्रौता भवन्ति।

इदमत्रावगन्तव्यमस्ति यत् धर्मस्तु सिखधर्म एव य खलु सम्प्रदायभेदा-त्कस्मिंश्चिदशे कुत्रचित् भिद्यते। यथा व्यवहारे उदासिनो गैरिक वस्त्र, निर्मला श्वेत वस्त्र, अकालिनो नीलवस्त्र धारयन्ति। परन्तु सर्वेषामपि सम्प्रदायाना धर्म सिक्खधर्म एव। सिखधर्म शिष्यपरम्परया न तु वशपरम्परया गुरुगोविन्दसिंह पर्यन्तमागत। तत पश्चात् गुरोराज्ञया गुरुग्रन्थसाहिबनामाऽदिग्रन्थ एव गुरुत्व प्राप्त। तत सर्वे ग्रन्थमेव गुरुममन्यन्ताथ च तस्यानुयायिन सर्वे शिष्या जाता। शिष्यशब्दस्यापभ्रंशे पजाबीभाषाया च सिक्ख इत्यभूत्॥

नानकचन्द्रोदयमहाकाव्यानुसार नानकप्रतिपादितो धर्म एव उदासिमतम्। इद चोदासिमत वैकुण्ठवासिना देवाधिदेवेनोपदिष्टम्। नानकश्च तन्मत स्वीकृत्य स्वशिष्येभ्यस्तन्मत प्राददात्।

—०—

# महाकाव्यमिदमनुसृत्य

## नानकदर्शनवर्णनम् नानकोपदेशाः

सर्वप्रथमं महाकाव्येऽत्र नानको ज्वालां दृष्ट्वागतमङ्गदं प्रथमप्रस्तावस्य ६५ श्लोकतः ९६ श्लोकान्तं बहुभिर्वचनैरुपदिशति । तदित्थम्–अज्ञानरूपामयस्य ज्ञानमेवैकं शरणम् । तच्च ज्ञानं शमादिसेविना गुरुशास्त्रनिष्ठेन विषयेषु विरज्यमानेनैव प्राप्यते । तच्च शमादिसेवनादिकार्यं सतां सङ्गेन भवे विरागप्रदर्शनेनैव भवति । अयमेव सुपन्थाः । इदं च ज्ञानं प्राप्तुं जना विचित्रैर्यानैर्यान्ति गन्तव्यदेशम् ।

अनेन च ज्ञानेन निर्विकल्पकब्रह्मसेवा करणीया । तया सेवया ब्रह्माप्तिर्भवति । तदा बोधोदय । यदा च ब्रह्मास्मीत्यपरोक्षबोधो जायते तदा मोक्षः सम्पद्यते । परन्त्वविद्यया तज्ज्ञानं न जायते । अविद्या तु अनिर्वाच्या अनादिप्रकृतिर्मायैव । अविद्यायाः कारणेन पूर्वपूर्वभवभावनावशादुत्तरोत्तरजनुः प्रपद्यते । जन्म गृहीत्वा च जनः स्वमन्यं मन्यते ।

जनो जनुः प्रपद्य विडम्बनां[1] याति । विडम्बनामिमां दूरीकर्तुं ज्ञानमेव सम्पादनीयम् । तदर्थं स्वात्मनः प्रकाश एव परमो गुरुः । गुरुशिष्यव्यवहारस्तु गड्डलिका-प्रवाह इव ।

वस्तुतो द्विचन्द्रगन्धर्वपुरीसमानं सर्वमिदं जगन्मृषेव । प्रारब्धशेषेण धृतशरीरः शरीरयात्रो जनो यदा प्रबुद्धो भवति तदा जगदिन्द्रजालं पश्यन्नपि न द्वेष्टि नाकांक्षति नैव विभेति कस्माच्चिदपि वस्तुभ्यो जीवेभ्यो वा । अत इदं च ज्ञानं प्राप्तुं स्वात्मानं च प्रकाशयितुं शास्त्रं गुरुः गोविन्दश्च सेवनीयाः । इमे एव त्रिगुणात्मिकां मायां निर्धूय धन्यस्य अद्वयां श्रियं दिशन्ति ।

ततो द्वितीयप्रस्तावस्य ६।१।२ तः ७९/२ यावत् नानकस्य जन्मलग्नानुसारं हरिदयालुवर्णितं नानकस्य भाविनो जीवनस्य वर्णनं नानकदर्शनमभिव्यनक्ति ।

तत पश्चात् षष्ठे प्रस्तावे ६४ श्लोकतः ६६ यावत् नानकेन कृतं भगवच्चरणसेवावर्णनं नानकदर्शनमभिव्यनक्ति । अत्र तावद् वर्तते महिमा भक्तसखस्य भक्तस्य च ।

---

१. मदेन सन्निपातेन भूतावेशेन निद्रया । उन्मादेन च रागेण स्वमन्यं मन्यते जनः ।

२. अमात्यवश्यो राजेव, स्त्रीवश्यश्च पुमानिव
अन्तःकरणतादात्म्याज्जीवो याति विडम्बनाम् ।

यथा धरातले सर्वत्र प्रसृतमपि वारि लभ्यते यत्नेनैव, सर्वत्र व्याप्तोऽपि वह्निर्दारुषु यत्नेनैव लभ्यते तथैवेश्वरः सर्वत्र व्यापकोऽपि यत्नादेव लभ्यते। अतस्तदर्थं यत्न करणीयः। धनदारादिस्नेहे बद्धानां कृते ब्रह्म दुर्गममेव यथा पिञ्जरे बद्धानां पक्षिणां कृते आकाशम्।

पुनस्तत्रैव प्रस्तावे श्लोक १२० तः १४४ यावत् चन्दोराज्ञी जीवनदर्शनमुपदिशति नानकः। तथा प्रयतनीयं जनेन यथा हृदि विकारो न समापतेत्।

लोष्टैर्हतो वा कुसुमैर्वृतो वा
ज्ञानी विकारं न मनागुपैति॥

ज्ञानाय यत्नकणे हेतवा दीयन्ते यतिवरैर्यत् शरीरमिदं क्षणभङ्गुरं नास्त्यजरामरस्य वस्तु। इदं तु वृद्धा भूत्वा विश्रृङ्खलं पालयते। जीवन्तोऽपि जनाः सर्वे निजोदरस्य पोषाय ग्लायन्ति। न कोपि कश्चिद्रक्षत्यत्र संसारे। संसारनौरियं भज्यमानेव प्रतिभाति सततम्। संसारेऽस्मिन्संसारी व्याधजाले पतित इव वर्तते। अतोऽनित्येऽस्मिन्संसारेऽनित्यं शरीरं रक्षन्तो जना यत्किमप्यनित्यं वस्तु कामयन्ते तत्सर्वं महदाश्चर्यकरमेव। अतो न कर्तव्य कस्यापि कृते दुःखमत्र संसारे। न भवति गृहे स्थित्वा ज्ञानलाभः। जनकस्त्वासीदनेकजन्मार्जितपुण्यकर्मा। अतस्तेन गृहे तिष्ठताऽपि ज्ञानवताऽभूयत।

पुनः सप्तमे प्रस्तावे ११८ श्लोकतः १२७ यावत् नानकस्य जीवनदर्शनविषये विचारः समक्षमागच्छति। यत्र वर्तते लोलास्खलितविग्रहस्य योगिनश्चर्चा।

तद्वत् प्रस्तावेऽष्टमे ३५ श्लोकतः ३७ यावत् नानक स्वमातरमगृतवचनं श्रावयति। अनित्यममुं संसारं ज्ञात्वा विलापो न करणीयः। हे मातः यदि सर्वदैव पुत्रं स्वसमीप एव दिदृक्षसि तदा मृते कदाचित्तस्मिन्पुत्रे किं करिष्यसि त्वमिति।

समीपसंस्थेऽपि मृते तनूजे
शक्नोति धर्तुं जननी किमस्य?॥

पान्था इव मनुष्या संसाररूपधर्मशालाया विप्रन्तः स्वां स्वां दिशं यान्ति। नास्त्यन्येश्वरं विहायान्यः कश्चित्सहायः। अतः पुत्रस्य सङ्गं विहाय देवकीपुत्रमुपाश्रयस्व।

जानन्त्यनित्यं तनयादियोगं
ये ते वियोगे न समुद्विजन्ते॥

पुनरत्रैव प्रस्तावे ५० श्लोकतः ६६ यावत् वोलाररायं भगवत्स्वरूपमभिधायोपदिशति गुरुः ।

उपास्य बुध्यात्मधियाऽथवेशो
भक्तैः स्मृतः शर्म करोत्यवश्यम् ।
खण्डोऽन्नमिश्रः किल केवलो वा ।
जुष्टः सृजत्येव जनस्य तुष्टिम् ॥

इत्थं भगवतोपासना कारं कारं जनो जगदिन्द्र जालाद्बहिर्गन्तुमीहते । यथा यथा भगवन्तं भजते तथा तथाऽखण्डो जायते भगवता सह । मायासक्तो जनो मतिचेतोभ्यां विमुक्तो भवति । मतिचेतोभ्यां विमुक्तस्य हृदि अहङ्कार आगच्छति । अहङ्कारेण स्वमन्यं मन्यते जनः । कामलयाकुलमीक्षणं यथा शङ्खं पीतं मन्यते तथैवाहङ्कारः । तेनापतत्यज्ञान येन ब्रह्मणा जीवस्य न सम्भवति तादात्म्यम् । मायैव तत्त्व पिदधाति । मायायुक्तमुपुप्तौ जीवस्य यद्भवति स्वयं भासितं तेन च यज्जायते सुखं तज्जागरितेन न प्राप्यते ।

स्वापस्य विश्वस्य यथैव निद्रा
माया तथास्य प्रतिभासहेतुः ।

ततः पश्चात् आर्यम्लेच्छयोरैक्यप्रतिपादनप्रसङ्ग अष्टादशप्रस्तावे ६० श्लोकतः ६८ यावत् बाबरेण सह ततु १०७ त १२३ यावत् मालनाम्ना म्लेच्छेन सह तत- १२६ तः १३२ यावत्तत्रैव प्रस्तावे ततारेखानेन सह नानकस्य विचाराः समक्षमायान्ति ।

तद् यथा—

स एक एव हरिर्विभिन्ननाम्नाऽर्यै. तुरुष्कैश्च संसेव्यते । शास्त्रे कोराने च सदसन्निरूपणं महेशितुर्वचनैरेव कृतमस्ति ।

न जातिरीशस्य निरूपिता श्रुतौ
न तस्य चार्यो यवनोऽथवा प्रियः ।
तनुं वहन् कामपि कर्मलम्भितां
भजेत यस्तं तु स तस्य वल्लभः ॥

अनादिवासनावेशात्संसारो वर्तते । तत्तत्कर्मणां विपाको जात्यायुर्भोगलक्षणः । अरागेण, अविरोधेन स्वधर्मानुसरणेन हरेर्भक्तिः सर्वमुक्तिप्रदा । "अपराध्यति जन्मना न कश्चित्सकलः प्रेमपरो हरौ कृतार्थः" । नट इव नानावेषं धारयन्हरिः

सर्वेषां धाता। नव, सप्त, चतुर्दशेति सर्वं तस्य लीलाभेदः। अदूरदर्शिनां स हस्तादर्शस्त्वबोधः सात्विकी तु एकदर्शिनी। यथा घटमठपटादौ नभसो न भेदस्तथैव जीवस्यापि। यथा विल्वानां मध्ये नासिकावान् न दृश्यते तथैव ज्ञानी न दृश्यते अज्ञानिमण्डले। बोद्धापि कदाचिद् बुधेन तुल्यं व्यवहरत्यविद्यया। आर्यम्लेच्छयोस्तथैवाभेदो यथा शशमशकादिचैतन्ये। केवलं वातादिकथनात् पुत्रो न भिन्नः पित्रा। पितापुत्रयोर्भेदस्त्वनुकृतो न स्वरसतः। तथैव ब्रह्मा विष्णु. शिव इत्यनुकृतो भेदो न स्वरसतः। मन्ये मुकुन्दपदयोरनुराग एव म्लेच्छस्य चार्यनिवहस्य च महत्वहेतुः। द्विजो भवतु पुक्कसो वा तुरुष्को वा स यदि जगदीशपदारविन्दे चेतः समर्पयति तदा स मान्य एव। सितासिताभ्यां कञ्चुकाभ्यां पुरुषो विभिन्नो न भवति।

पक्षी स्वगत्या च पशु स्वगत्या
नरः स्वगत्या च सरः प्रपद्य
तोयं पिबेत् तृप्तिमपि प्रयायात्
नागन्छतः कस्यचिदस्ति तृप्तिः ॥

मायामयेन वपुषा त्रैवर्णिको वृषलो तुरुष्कः पुक्कसो वा भवति जनः। वर्णभेदस्तु बाह्य एव। स्वस्वेनैव शास्त्रेण आर्यो यवनश्च हरिं भजति। भ्रान्ताः स्वकार्ये कलहायमाना नानामताडम्बरवाग्विडम्बैः शास्त्रार्थं कुर्वन्तो जना वास्तविकं तत्त्वं न परिचिन्वन्ति। कर्ताऽखिलस्य जगतो जगदीश एको विश्वं बभर्त्यथ संहरति च स्वशक्त्या। मायामयं धनादिकं मिथ्या मत्वा नोपेयान्ममताम्।

पश्यन्ति ये नमस्यन्ति सर्वत्र जगदीश्वरम्
ते प्रिया जगदीशस्य जगदीशश्च तत् प्रियः ॥

—:०:—

# वैकुण्ठवासिनो नानकं प्रत्युपदेशः

कलौ विष्णोरंशरूपो नानको यदुपदेशं ग्रहीतुं भवलोकात्तच्छक्त्या वैकुण्ठं गतस्तदा तत्र कृपावेशात्तस्मै देवयैर्जनानुद्धारसिमतमुपदेष्टुमुपदेशं ददौ। अत्र भगवदुक्ति-प्रसङ्गे श्लोकसं० १३।१४ तः ७४।१४ यावद्विष्णोरुपदेशाः सन्ति। तथाहि—विरोधं कदाचिदपि केनचिदपि न कार्यं। रिपौ सुहृदि च सर्वदा सामान्यव्यवहारं प्रदर्शनीयं। धनदारादौ न महता रतिर्विधातव्या। दुःखे सुखे चानश्वरं संसारमवलोक्य मयि प्रपत्तिं विधाय सततं मम स्मरणं कर्तव्यम्। हेतोरतः आत्मना स्वतः प्रकाशेन भाव्यम्। तदानन्दबोधमधिगम्य मम स्वरूपं स्वयेक्षनः। जीवा उपाधि-वशतो भिन्ना भवन्ति। यथा पयसि प्रतिबिम्बितः शशी कदाचिन्मलिनः क्वचिच्च-लश्च जायते तथैव नरोऽपि भिन्नः प्रतिभासते इति वदति शशिना नरस्यैक्यम्। वासनयैवैको जीवो द्वितीयः भिन्नः मन्यते। आत्मनः परमात्मना यदैक्यं भवति तदैव सम्भवति मुक्तिः। अतो मुमुक्षुस्तत्त्वज्ञानं मनोनाशं वासनाक्षयञ्चैतत् त्रयं स्वेन व्यवसायेन व्यवसायात्मिकया बुद्ध्या च सम्पादनीयम्। सोऽहमिति तत्त्वज्ञानं, सर्ववृत्तीनां निरोधो मनोनाश एव क्रोधादीनामनुद्भवो वासनाक्षयः। तत्र श्रवण-मननादिध्यासनं तत्त्वज्ञानसाधनम्। मनोनाशेऽष्टाङ्गयोगः कारणम्। वासनाक्षये च वैराग्यमेव शरणम्। तत्र वासना द्विविधा शुद्धा मलिना च। मलिना बाह्या आभ्यान्तरीति द्विविधा। तत्र बाह्या लोकशास्त्रदेहप्रभेदजा आभ्यन्तरी कामक्रो-धादिरूपिणी मानसी। अतो मलिना त्याज्यैव। तदर्थं वैराग्यं परिशीलयेत्। तदर्थं स्वहितमहितं न कालपक्वमुदीक्ष्य निरहङ्कृतिर्भूत्वा[1] त्रिलोकीपतिं भजेत्। स एव कृतार्थो यो विष्णुप्रेमालसमानसः सन् नारायणकथां शृण्वन् यापयति दिनानि। यदा स्त्रियः शूद्राः पशवो सुराः राक्षसाश्च भक्त्यैव विष्णोरतिमहतीं गतिमापुस्तदा द्विजास्तु प्राप्नुयुरेव।

ततो नानकः मुक्तस्य लक्षणं ब्रवीति विष्णुः। तत्र निम्नलिखितेन पथा मुक्ति-माप्नोति जनः। प्रथमं शुभेच्छा मानवस्य हृदि जायताम् ततो विचारणा ततः सत्त्वापत्तिः, ततः ससक्तिः, ततः पदार्थाभाविनी भावना ततस्तुरीयावस्थायां याति जनो यत्र लोकः स्वप्नवत् दृश्यते, ततः पञ्चम्यां सुषुप्तिः षष्ठ्यां गाढनिद्रा ततः सप्तम्यां मुक्तिर्जायते। इमं च मुक्तिमार्गं मूढमानसान् कथयितुं ममांशरूपस्त्वं नानक कलियुगे।

---

१. समर्प्यं सत्कर्माणि मा भजेर्निरहङ्कृतिः।

इत्थमुपदिश्योदासिमतस्य प्रचारं प्रसारं च कर्तुं तन्मतमुपदिशति। शैवेषु वैष्णवेषु च परस्परविरोधस्य सत्वात् हे नानक त्वमुदासं[1] नाम संन्यासं प्रवर्तयेः इति भगवदुक्तिः। तत्र जटासु, मुण्डत्वे, विभूतौ, चन्दने,दिगम्बरत्वे वसने, उदासिनामाग्रहो न भवेत् यतोहि गलबद्धघंटा· [2]सत्योपि पयोविहीना गावो मूल्यं न लभन्ते। तत्र शिष्याः केशान् बिभृयु, शस्त्राणि धारयेयुः, अन्ये गुरौ च परा भक्तिं कुर्युः। प्रियम्वदा मान्याः शिष्या निवृत्तिमार्गैकरसा भवन्तु स्मार्तन मार्गेण च गच्छन्तु। शिष्याः कालत्रये ब्रह्मसत्यताप्रतिपादकस्य मन्त्रस्य मालाभिर्जपं विदधतु। सा च माला द्विविधा रौद्राक्षी पौत्रजीवी च।

शिष्याणां नामानि त्रिविधानि भवन्तु दासान्तानि रामान्तानि गुरुमन्त्रपदाङ्कितानि वा। मन्दानां प्रतिपत्तये ग्रन्था भाषया सन्तु।

"पात्रेण येन केनापि पयः पानं हि तृप्तिदम्"। जगदुद्धर्तुं गतस्त्वं पृथिव्याम्। त्रिलोकीपतेः कथां गृहे गृहे प्रवर्तयस्व यतस्व च लोकेषु श्रद्धां विश्वासं चोत्पादयितुम्।

"त्वन्मतस्थः परो वापि यस्त्वां नानक पूजयेत।
तस्य सिद्धयन्तु सर्वेषां श्रद्धाविश्वाससम्पदा॥

—०—

१. उदासीनः समस्तेषु मतेषु ब्रह्मवित्तया।
उदास नाम सन्यास तस्मादङ्ग प्रवर्तय॥
२. नेपथ्यमात्रेण भवन्ति नार्या गुर्णविहीनस्य फलानि सौम्य
मूल्य लभन्ते न पयो विहीना गाव. समन्तात्गलबद्धघण्टा

# सिक्खधर्मस्तत आगताः सम्प्रदायाश्च

नानकप्रतिपादिते धर्मे गुरो शिष्यस्य च परस्परं घनिष्ठः सम्बन्धो दृष्टिपथमवतरति। नानक ईश्वरमेव गुरुममन्यत। अतएवेश्वरं स 'वाह गुरु' इति पदेन सम्बोधितवान्। इत्थमत्र धर्मे गुरोरत्यन्तमेव महत्त्वं वर्तते। अत इदं स्पष्टमेवास्ति यदत्र मते शिष्यस्याप्यत्यन्तमेव महत्त्वमस्ति। शिष्याणां कर्म सर्वदा गुरोः शिक्षाग्रहणं शिक्षणं च वर्तते। शिक्षाग्रहणस्य नास्त्यन्तः मनुष्यजीवने। मनुष्यस्य जीवनं स्वल्पं लघुतरं च वर्तते परन्तु ज्ञानन्त्वसीममनन्तं चास्ति। अतएव नानकद्वारा प्रतिपादितस्य मतस्य साधकाः शिष्या एव कथ्यन्ते। [1]अत सिक्खशब्द- शिष्यशब्दात् व्युत्पन्नो न तु सेवकशब्दात्।

[2]कस्यचिद्परस्य विदुषो मतानुसारं हिन्दूमुस्लिमबौद्धविचाराणां परस्पर सम्मिलितरूपमेव नानकमतमस्ति। नानकमते एकेश्वरवादिता स्पष्टं दृष्टिपथमवतरति। सचायमेकेश्वरवाद वेदान्तमतमधिकमनुसरति तथा च कोराने प्रतिपादितेकेश्वरवादादपि यथाकथञ्चिन्मिलति। नानकमते ईश्वरः "निरवैर, निरभव, अकालमूरति" स्पोऽस्ति। एकस्मिन्वाक्ये नानकमतमित्थं समक्षमायाति "ईश्वरस्यैक्यं तथा मानवमात्रस्य परस्परं भ्रातृभावः"॥

एतन्मतानुसारं राजारङ्कौ समानावेवेश्वरस्याग्रे। सर्वे एव जना ईश्वरेण समानरूपेणैव निर्मिताः। भेदस्तु तत्र मानवेनैव कृतः। नानकमते शुद्धेन हृदयेन ईश्वरोपासना कर्त्तव्या तत्र नास्ति बाह्याडम्बरस्यावश्यकता।

शिष्याः निराकारस्योपासनां कुर्वते परन्तु तेषां धर्मे साकारोपासनाया विरोधो नास्ति। गुरुगोविन्दस्तु रामकृष्णयोरपि गुणगानं कृतवान्। गुरुः अमरदासोऽमृतसरसि स्वर्णमन्दिरनिर्माणस्य शुभारम्भमकरोत्। इदं हि शिष्याणां तीर्थस्थानम्। मन्दिरमिदं सौन्दर्ये द्वितीयं स्थानं रक्षति।

## सम्प्रदायाः

उदासीसम्प्रदाय —सम्प्रदायोऽयं नानकपुत्रेण श्रीचन्द्रेण प्रतिष्ठापितः। उदासिनां राजनीतौ नास्ति सम्बन्धः। श्रीचन्द्रः स्वयमपि सन्यासिवेषे एव भ्रमणं

---

१. पाई महोदय स्वपुस्तके "मोनोग्राफस् ऑफ दि रिलिजियस सेक्टस् एमाङ्ग्स् हिन्दूज्" नामके सेवकशब्दात् आह।

१. फ्रेडरिक पिकनाट—रिलिजियस् सिस्टम आफ दि वर्ल्ड।

कृतवान् । उदासिनां वेषभूषा साधूनामिव । ते सन्ति तटस्थाः सांसारिकेषु विषयेषु । उदासिसम्प्रदायस्य पुनरुत्थानं गुरुहरगोविन्दपुत्रेण गुरिस्तामहोदयेन कृतम् । तेऽन्यवसन् कर्तृपुरे । तत्रास्ति तस्य समाधिः । सम्प्रदायस्यास्य चतस्रः शाखाः सन्ति ।

( १ ) बहादुरपुरे फूलसाहबमहोदयस्य शाखा ।
( २ ) आनन्दपुरे निकटस्थरणकोटनामके स्थाने बाबाहसनमहोदयस्य शाखा ।
( ३ ) पुरीनगरे नैनीतालनगरे च अलमस्तसाहबमहोदयस्य शाखा ।
( ४ ) सिंधनगरे गोविन्दसाहबमहोदयस्य शाखा ।

प्रायः सर्वा एव शाखाः शाखाध्यक्षस्याज्ञां शिरसा वहन्ति । उदासिमतानुयायिनो निवसन्त्याधिक्येन मालवाकाशीजालन्धररोहतक फिरोजपुराख्येनगरे ।

एते आदिग्रन्थस्यारार्ति कुर्वन्ति तथा च पूजासमये घंटा वादयन्ति । भस्मस्नानमपि ते कदाचित्कुर्वन्ति । एतेषा प्रियमन्त्रोऽस्ति—

"चरण साधुका धो धो पियो
अरप साधु को अपना जियो ।

उदासिमतानुयायिनः नागा ( नानकशाही ) अपि कथ्यन्ते ।

निर्मलसम्प्रदाय—गुरुगोविन्दसिंहस्य समये वीरसिंहेण सम्प्रदायोऽयं स्थापितः । निर्मलाः शिष्याः अत्यन्तमेव पवित्र सदाचार समाचरन्ति । एते संस्कृतं पठित्वा श्वेताम्बरं धारयन्ति ।

नामधारीसम्प्रदाय—अस्य प्रारम्भो लुधियानानगरस्य रामसिंहेन कृतः । अयमासीद् राज्ञो रणजीतसिंहस्य सेनानी । एते नामधारिण 'कूका' अपि कथ्यन्ते । ईश्वराराधनासमये एते शिरः चालयन्तो 'कूक' कुर्वन्ति । एतेषा 'सत्तश्री अकाल' इति मन्त्रः । एते सरलमुष्णीषं धारयन्ति ।

सुथराशाहीसम्प्रदायः—सुथराशाहेन स्थापितोऽयं सम्प्रदायः । केचित् कथयन्ति यद् गुरुहरगोविन्दसिंह एव सुथरा इति नाम्ना सम्बोधितोऽभूत् । सुथरा शब्दस्य स्वच्छ इत्यर्थो भवति । अपरे कथयन्ति यत् सूचानामा ब्राह्मण कालेन यः सुथराशाह इत्यभूत्, एते लौहदण्डं वादयित्वा भिक्षामाचरन्ति केचित् सुथराशाही सम्प्रदायो गुरुतेजबहादुरेण स्थापित इत्यपि कथयन्ति । एते पञ्जाबे बङ्गाले च निवसन्ति ।

सेवापंथीसम्प्रदायः—सेवाधर्मानुयायिना कन्हैयानाम्ना स्थापितोऽयं सम्प्रदायः । यदा गुरुगोविन्दसिंहो मुगलेनाक्रान्तस्तदा रणक्षेत्रे कन्हैयानामाऽयं शत्रुभ्यो-

मित्रेभ्यश्च समानरूपेण पानीयं प्रांददात् । एतेन कार्येण सन्तुष्टो गुरुरेनं प्रशशंस। असौ च कन्हैया सेवारामनामकं शिष्यमुपदिदेश । अस्य नाम्नः कारणेनैवास्य सम्प्रदायस्येदं नाम प्रख्यातमभूत् ।

अकालीसम्प्रदायः । अकालिसम्प्रदायानुयायिनो विहङ्गा अपि कथ्यन्ते। विहङ्गशब्दस्य निर्भीक इत्यर्थो भवति । एते खालसापथः अनुयायिनो भवन्ति। सं० १७४७ शताब्दयामस्याविर्भावो मानसिंहस्य नायकत्वे जातः । चमकौर्दुर्गे गुरुगोविन्द एकदा सुङ्गलसैन्यमध्यात्सन्यासिवेषं गृहीत्वा निर्गतः । ग्राममागत्य स मानसिंहोऽयं युद्धस्थले परिधत्तं नीलवस्त्रं ददौ तं चाज्ञापयामास च सम्प्रदायमेकं स्थापयितुम् । अकालिनो ईश्वरं अकालपुरुषं मन्यन्ते नीलवस्त्र च परिदधति । एते सामाधिके राजनैतिके च विषये चर्चा कुर्वन्ति । सिक्खेषु एते सर्वश्रेष्ठा मन्यन्ते ।

—०—

# गुरुग्रन्थसाहिबः

'प्रथमं सिखाणां धर्मग्रन्थस्य नाम ग्रन्थसाहिब "आदिग्रन्थः" इत्यासीत्। परन्तु यदा गुरुगोविन्दसिंहो ग्रन्थमेव गुरुममन्यत तदास्य नाम गुरुग्रन्थसाहिब इत्यभूत्।

इदमत्रावगन्तव्यमस्ति यद्गुरुगोविन्दसिंहेन ये श्लोकाः यानि च पद्यानि निर्मितानि तानि तस्यैवाज्ञया ग्रन्थसाहिबे न संगृहीतान्यभुवन्। केवलमेक एव श्लोकः गुरुतेगबहादुरनिर्मितश्लोकस्यान्ते गुरुगोविन्देन प्रणीत इति मन्यते ग्रन्थ-साहिबे। अत एव गुरुग्रन्थसाहिबस्य नाम आदिग्रन्थ इत्यभूत् तथा च गुरुगोविन्द-सिंहेन प्रणीतस्य नाम दशमग्रन्थ इत्यभूत् यतोह्यय सिखाणां दशमो गुरुरासीत्। तत्र गुरुग्रन्थसाहिबे ३३८४ शब्दाः सन्ति १५५७५ छन्दपदभाजः श्लोकाः सन्ति। येषु

'२९४९ छन्दाः गुरुनानकस्य-महला—१
५७ ,, ,, अङ्गददेवस्य- ,, —२
२५२२ ,, ,, अमरदासस्य ,, —३
१७३० ,, ,, रामदासस्य ,, —४
६२०४ ,, ,, अर्जनदेवस्य ,, —५
१६६ ,, ,, तेगबहादुरस्य ,, —६

अत्रैव तेगबहादुरस्यान्तिमः श्लोको गुरुगोविन्देन निर्मित इति मन्यते। गुरुहरगोविन्द', गुरहरराय:, गुरुहरकृष्णाश्च पद्यं न लिखितवन्तः। एतदतिरिक्तानि पद्यानि गुरुग्रन्थसाहिबे निम्नलिखितसन्तकविभिर्लिखितानि सन्ति।

---

१. प्रो० पिकनाट—जर्नल आफ रायल एशियाटिक सोसाइटी भाग १८ तथा ए क्रिटिकल स्टडी आफ आदिग्रन्थ०

लेखक—डा० सुरिन्दरसिंह कोहली प्रो० पञ्जाबी, चण्डीगढ़, मू० पु० दिल्ली वि० वि०

१. प्रो० पिक्नाट J.R.A.S. भाग १८

[2]१ बन्दौ जयदेवस्य
४ बन्दा शेखफरीदस्य
६० ,, नामदेवस्य
४ ,, त्रिलोचनस्य
१ ,, परमानन्दस्य
१ ,, साधनायाः
३ ,, वेनीमहोदयस्य
१ ,, रामानन्दस्य
४ ,, धन्नस्य
१ ,, पीपामहोदयस्य
१ ,, सेत्तस्य
२५२ ,, करोरस्य ( तथा तदतिरिक्तं, पौरिस बावनअखरी, थिहिन, बरसात, तथा २४९ श्लोका )
४ ,, रविदासस्य
२ ,, भीखनस्य
१ ,, सूरदासस्य
१ श्लोका सुन्दरस्य
३ ,, मर्दानामहोदयस्य
४६ सवैया कलस्य
४ ,, कलसहरस्य
१ ,, टलस्य
४ ,, जलपस्य
१ ,, जलस्य
८ ,, किरातस्य
३ ,, सलस्य
१ ,, भलस्य
६ ,, नलस्य
२ ,, मिस्रस्य
१ ,, जननस्य
१२ ,, दासस्य

---

२. डा० सुरिन्दर सिंह, प्रो० पंजाबी, चण्डीगढ़ तत्र Hymn इत्य बन्द इत्यर्थं. ।

५ ,, गयन्दस्य
७ ,, सेवकस्य
१० ,, मथुरा
५ ,, वलस्य
२ ,, हरवशस्य
१ ,, सत्तस्य
१ ,, वलवन्दस्य

गुरुग्रन्थसाहिबे निम्नलिखिता भाषा प्रयुक्ता सन्ति। जयदेवेन–पूर्वी अपभ्रंश गुरुभि सन्तवाणी, पंजाबीयनामदेवेन अपभ्रंश, मराठी, यत्र अरविक इत्यस्य परसियन इत्यस्य च प्रभाव। कबीरेण–हिन्दी, भट्टै–हिन्दी, गुरुणार्जुनेन–लेहन्दा, सिन्धी च।

पद्येष्वेषु छन्दास्यनेकविधानि बहवो रागा रागिन्यश्चोपमया रूपकेणयाद्यलङ्कारेण प्रदत्ता सन्ति।

ग्रन्थे समागताया राजनैतिकसामाजिकधार्मिकदशायाश्चित्रण नानकचरित्रवर्णनप्रसङ्गे विधास्यते॥

— ० —

# नानकप्रतिपादितानि तत्त्वानि

१. परमात्मा
२. मूलमन्त्र
३. सृष्टिः
४. कर्त्ता
५. हउमै ( अहंकारः )
६. माया-प्रकृतिः
७. आत्मा
८. जीवः 'मनुष्यः'
९. मनस्
१०. हरिप्राप्तिपन्थाः
११. सद्गुरुः
१२. सत्सङ्गतिः
१३. गुरुः
१४. शब्द ( शब्दः )
१५. नाम
१६. जपः

i साधारणजपः ii लिवजपः iii अजपाजपः ।

तत्र केषाञ्चित् संक्षेपेण प्रतिपादनं क्रियते ।

परमात्मा = एक एव ईश्वरः। ब्रह्माविष्णुमहेशारूपः एते तस्यैव भेदाः । एते त्रयोऽपि मायया प्रभाविताः ।

सृष्टि-स्थिति-प्रलयकर्तार एते परमात्मन एव भेदाः ।

आदिग्रन्थस्यादितोऽन्तिमं यावत् परमात्मनः चर्चा ब्रह्म (ब्रह्मन्) पदेन कृतास्ति । अयं ग्रन्थप्रारम्भे ओंकारपदेनाप्युक्तः । अस्य वर्तते द्विविधं रूपं निर्गुणं सगुणं च।

---

१. i "इक ओंकार सतनाम कर्ता" .........

—आदि ग्रन्थ ( मूलमन्त्र )

ii "What eve I see is Brahman, whatevere I hear is Brahman."

—Curu ArJan.

A सृष्टिः=परमात्मनः कर्म। अतएव स कर्ता, (करतार, सिरन्दा, खालिक, सिरजनहार, करनकारण, प्राणदाता, प्राणपति, स्वरनहार) इति कथ्यते।

प्रकृतिः सांख्यमतानुसारं महदादिं जनयति। तेन तदनु जायतेऽहंकारः। आदिमन्थेऽपि प्रकृतिः प्रधानपदेन व्यवहृताऽस्ति। "जपुजी" इत्यत्र "सुखमणी" इत्यत्र च महत् इति पदं प्रधान इति पदं च व्यवहृतमस्ति।

---

A 'Praise be to God, The Lord of creatures, The most merciful, The king of the day of Judgedment. Thee do we workship and of thee do be beg assistance. Direct us in the Right way, in the way of those to whom thau hast been graciaus Not of those againest whom there are incensed, nor of those who go astray. —De koran chapter I

II मूलमन्त्रे अयं कर्तापुरुष इति कथ्यते।

"He was in abstract mediation when it was His will, He created the world."

× × ×

He created Brahma Vishnu Shiva and attachment of Maya was increased." —Guru Nanaka in Raga maru.

III 'The creater has created Shiva and Shakti both, And keeps them under his cosmic Law." —Guru Amar Das in Anand.

IV He becomes countless from one and every thing dissoltuet into one."

—Guru Arjan.

—Nath M. V.)

(I) मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।

(II) He created Shakti of three gunas the great Maya is his Shadow.

—(Gaund M. V.)

(III) Jiva is a miniature of Brrhman. It comes of Brahman. The physical bodies decays but it continues for ever.

—Creįlines of Sikh thought.

अहङ्कारश्च त्रिभिरेभिर्गुणैः युक्तोऽस्ति । जीवस्तु ब्रह्मण एव प्रादुर्भवति । शरीरं नश्यति परं जीवः ( आत्मा ) सदैव जीवति ।

यथा जीवनस्य सर्वस्मिन्नेव क्षेत्रे गुरोरावश्यकताऽस्ति तथैवाध्यात्मिकज्ञानार्जनायापि गुरुरुपास्यः । सर्वत्रैवादिग्रन्थे गुरोरथवा सद्गुरोश्चर्चा कृताऽस्ति । गुरोर्महत्त्वस्य वर्णनं प्रागेव भूमिकायां मया कृतमस्ति । इत्थं गुरुवाणी अथवा शब्दः सर्वाधिकं महत्त्वं रक्षति । गुरुस्तु ईश एव परन्तु यः खलु शरीरी गुरुरस्ति स कार्यद्वयं करोति शिष्येभ्यः । स प्रथमं तेभ्यः गुरुमन्त्रं ( शब्दं नाम वा) ददाति । तदनु ब्रह्मज्ञानं प्रतिपादयति । सद्गुरुः शिक्षां दीक्षां च ददाति । शिष्येभ्यः । स च मन्त्रं कथयति । मन्त्रो द्विविधः । मूलमन्त्रः बीजमन्त्रश्च । मूलमन्त्रेणादिग्रन्थः प्रारभ्यते बीजमन्त्रस्तु वा + हु + गुरु = वाहु गुरु इति ।

मूलमन्त्रस्तु "इक ओंकार……" रूपः बीजमन्त्ररूप "वाहुगुरु" इति रूपः । अनेनैवैशो स्मर्यते । ईशनामग्रहणं बीजेन मूलेन च क्रियते । ईशस्यैव नाम सत्यमित्यप्यस्ति । नानकः सत् इत्यपि कथयति । सत्यनामविहाय नामान्तराणि "किरतम" इति कथ्यते । स एव स्रष्टा कर्ता वा । अयं पुरुषः साहिब, इति मालिक इति वा । विश्वासः सर्वाधिकं महत्त्वपूर्णं वस्तु सिखधर्मेऽस्ति । गुरौ ग्रन्थे च विश्वास इति । गुरुविषये तु प्रागेव भूमिकायां चर्चा कृतास्ति ।

नाम ( practice of remembrance ) शब्दस्य महत्त्वं सिखधर्मे स्वयं नानकेन प्रतिपादितमस्ति । "यदाहं नाम स्मरामि तदाहं जीवामि" । सुखमनिनाम्नो ग्रन्थस्य प्रारम्भे नाम्नो महत्वं प्रदर्शितमस्ति । अतएव गुरुणा प्रदर्शितो मार्गो

---

(I) Mantra occurs in two forms. One form is regulur prayer in word. In this respect many hymns of the Adi Granth may be called mantras or is mula mantra or Significant mantra. The other form of mantra is the combination of syllables or bija mantra. word of the Guru or the name of the Lord. The Syllables of bija mantra is a Vahu Guru are the sound bodies of Brahman."

—Ontlines of sikh thought
(Surinder Singh kohli)

नाममार्गः सहजयोगो वा कथ्यते। नामेदं सदैव स्मरणीयम्। तदिदमत्र 'लिवजपेन' क्रियते। यदि कश्चित् बीजमन्त्रस्य[1] "वाहगुरु" इति मन्त्रस्य जपं करोति। एतेन जपेन ध्यानं करोति जनस्तदा [2]अजपाजपेनामृतमश्नाति।

## सृष्टिक्रमस्य विचारः

१. इस्लाममते—ईश्वरः 'कुम्' इत्यब्रवीत् येन सृष्टिः संजाता।
२. 'बाइबिल्' इत्यनुसारं स्रष्टा ईश्वर एव।
३. चार्वाकमते पदार्थाः स्वत एव सृष्टिं निर्मान्ति।
४. बुद्धमते—अनाध्यात्मिका सृष्टिः।
५. जैनमते—दिक्कालादयः सृजन्ति विश्वम्।
६. सांख्यमते—प्रकृतिपुरुषसंयोगेन सृष्टिः।
७. योगमते—अविद्यया ईश्वरेण प्रकृतिपुरुषयोः सम्बन्धः स्थाप्यते।
८. न्यायवैशेषिकमते—आरम्भवादः।
९. पूर्वमीमांसामते—कर्मवादः।
१०. शङ्करमते—ईश्वरो मायाशक्त्याऽसृजत् विश्वम्।
११. आदिग्रन्थानुसारम् ईश्वर एव पुरुषं प्रकृतिं च निर्ममौ। त्रयाणामपि सत्त्वरजस्तमसां गुणानामयमेव कर्ता। पुरुषोऽयं पुरुषेभ्यो (जीवेभ्यो) विभिन्नः। पुरुषश्चायं पुरुषः आदिपुरुषः सत्पुरुषः, कर्तापुरुषः, अकालपुरुषः निरंजनपुरुषो वा यत्र मायायाः प्रभावो न वर्तते।

---

1. "Wah guru" means, Haill the holy light, dispeller of darkness.

2. "Ajapa Japa" means constant repetition of God's name.

—The quint essence of Sikhism.

Zoroastrian theology divides God into parts viz Ahur mazdah and Ahriman.

Crist proclaeins himself as the son of God. Adi Granth recogniess the fatherhood of God like Islam. But God of Islam is personal, Adi Granths sings Impersonl.

—A criticl stdy of Adi Grnth.

—Dr. Surinder Singh Kohli.

आदिग्रन्थानुसारं माया एव प्रकृति न तत्रास्ति भेदः। नानकानुसारं माया जीवं पुरुषात् पृथक्करोति। तदा जीवः संसार नश्वरं मन्यते। मायया प्रभावितः पुरुषः विकारवर्ती भवति सगुणो भवति। मायारहित पुरुषस्त्रिगुणातीतो निर्गुणो भवति। मतमिदमादिग्रन्थे वर्णितमस्ति।

## गुरुनानकः

गुरुनानकस्य जीवनस्य विषये यत्किमपि नानकचन्द्रोदये प्रतिपादितमस्ति तत्तु प्रागेव भूमिकाया लिखितमस्ति। अत्र तु केवलं तदेव लिख्यते यद् ग्रन्थसाहि-बादन्यस्माद्वा ग्रन्थादाकलितमस्ति।

गुरुनानकदेवस्य जन्म सं० १५२६ शताब्द्यां वैशाखशुक्लपक्षस्य तृतीयायां तिथौ तलवंडीनामकग्रामे जातम्। परन्त्वस्य जन्मदिनं कार्तिकपूर्णिमायां मत्वोत्सव कुर्वन्ति शिष्याः। अस्य पिता कालूचन्द्रः तस्मिन्नेव ग्रामे लेखपाल आसीत्। मातु-र्नाम तृप्ता इत्यासीत्। नानकस्य जीवनवृत्त "'जनमसाखी'" नामके ग्रन्थे विस्तारेण लिखितमस्ति। सस्कृत पारसीकं पठित्वा पित्रो कृते बाल्ये विरक्त इव जातः। सुलक्ष-ण्या सह विवाह कृत्वा लक्ष्मीचन्द्रश्रीचन्द्रनामकौ पुत्रौ दृष्ट्वा संसारात् विरक्तो जातः। स्वग्रामे एव एकस्य वृक्षस्याधः उपविश्याध्यात्मिकं चिन्तन कृतवान्। यात्रां कृतवान्। अन्ते करतारपुरे निवसन् लोके भक्तिभावनाया प्रचारं कृतवान्। अस्य रचना —

१. जपुजीसाहब—३८ छन्दांसि=शिष्याः प्रातः पठन्ति।
२. आसादीवार—इदमपि छन्दः प्रातः काले पठ्यते शिष्यैः।
३. गगन में थाल—इत्यनेनारार्ति कुर्वन्ति।
४. सोदरु—संध्या समये पठ्यते।
५. रहिरास—भोजनसमये पठ्यते।
६. सोहिला—शयनसमये पठ्यते।

एतानि छन्दांसि ग्रन्थसाहिबे संगृहीतानि सन्ति।

---

१. जनमसाखिपदवाच्या बहवो ग्रन्था सन्ति ये लिखिता बहुभि पण्डितै रघुवन्।
१. यस्य वृक्षस्याध स उपविष्ट स "थम्बासाहिब" इति कथ्यते। अधुनापि स सुरक्षितोऽस्ति।

अन्ते रावी ( इरावती ) नद्याः तटे जपुजीसाहिबस्य [2]पाठं कुर्वन् 'वाहगुरु' इति कथयन् दिवं गतः। सं० १५९५ ( सन् १५३८ ) करतारपुरे ६९ वर्षस्य १० मास-१० मे दिने आश्विनशुक्लदशम्यां तस्य स्वर्गवासो जातः।

—:०:—

## कानिचित् नानकवचनानि

१. नाँय मानिए पत उपजइ साल हि सच सूत।
दरगे अन्दर पारये तग न टूटस पूत॥
—आसादीवार।

२. साचा साहिबु साचु नाई नारिया नाउ अपारु।

३. नानक निरगुणि गुणकरे गुणवंतिया गुणदे।
तेहा कोई न सुझई जिविसु गुण करै॥

४. हरि बिनु किउर हिये दुख व्यापै।
जिह्वा साहु न फीकी रस बिनु॥
बिनु प्रभु काल सतावै।

५. एको सरवस कमल अनूप।
सदा बिगासे परमल रूप॥
ऊजल मोती चूगहि हंस।
सरव कला जगदीशे अंश॥

६. करमी आपे आपणी के नड़े केदूरि
जिनी नामु धियाइया गए मसक्कति थालि
नानक के मुख ऊजले केति छुटा नलि
—जपुजी सादेव अंतिम (श्लोक),

७. गगन में थालु रविचन्दु दीपक बने
तारिका मंडल जनक मोती
धूप मल आनल लौपवणु चौरा करे
सगल बनराइ फलंत जोती
गु० मु० सा—मदला-१.

—०—

२. यत्र दिवंगतो नानकस्तस्य स्थानस्य नाम "डेरानानक" इति ज्ञानम्।

## मध्यकालीनधर्मसुधारकेषु नानकः

सिखधर्मस्य द्वौ स्तः पक्षौ व्यवहारिकः सैद्धान्तिकश्च व्यवहारिकः धर्मसंस्थापकः धार्मिकसंदेशं देशस्य सामाजको ऐतिहासिकी च परिस्थितिं ज्ञात्वा तद्नुकूलं ददाति शिष्येभ्यः । नानकेनैतदेवाकारि । नानकः स्वमाराध्यं प्रार्थयति—

"खुरासान खसमाना कीआ
हिन्दु सवानु डराइया"

नानकप्रतिपादितो धर्मः प्रवृत्तिमूलकः । अत्राधोलिखितानि तत्त्वानि सन्ति ।

१. पाखण्डमतखण्डनम्
२. सामाजिककुरीतेः खण्डनम्
३. अस्त्येष्टदेवोऽजन्मा स्वयम्भूः
४. बाह्याडम्बरत्यागः ।
५. आशाविश्वासपौरुषाणां वर्धनम् ।
६. आर्यम्लेच्छयोरैक्यम् ।
७. प्रायेण सर्वधर्मसमन्वयः स्थूलरूपेण ।

—:o:—

### सैद्धान्तिकः पक्षः

नानकेन परमात्मनः साक्षात्कारः कृतस्तया प्रत्यक्षानुभवः प्राप्तः महम्मद इव पैगम्बर इव । अनेनावतारवादस्य खण्डनमकारि एकेश्वरवादे विश्वासः । सृष्टिः परमात्मना विहिता । माया परमात्मनोऽधीना । अहङ्कारस्य द्वैतवादस्य च विचित्रं चित्रणं खण्डनं चात्यत्र । अहङ्कारस्य मनसा सम्बन्धः । गुरुणा निरूपितः कर्मणो योगमार्गो ज्ञानमार्गश्च भक्तेरधीनः । भक्तेर्महिमा विशिष्टः । परमात्मा सृष्टिः, अहङ्कारः, माया, जीवो, मनुष्यः, आत्मा गुरुः, जपः, शब्दः, नामस्मरणम् अस्य तत्त्वानि ।

---

i एतीमार पई करलाणें तैं की दरदुन आइया
—महला

ii जो सबना सबते कहू मारे
तामनि रोष न होई
—महला–१

iii जाणहु जोति न पुछहु जाती
आगे जाति न है ॥

## इतरे नवगुरः

गुरुरङ्गददेवः=सं० १५०४ तः १५५२ यावत्। अस्य प्रथमं नाम लहना इत्यासीत्। ज्वालादेव्याः भयमुपासक आसीत्। अयं नानकस्य शिष्यो जातः नानकोऽङ्गदं सं० १५३९ वर्षे करतारपुरेऽभिषिषेच। अङ्गदः गुरुमुखीलिपिं, लंगरनाम्नीं प्रथां च प्रारब्धवान्।

गुरुः अमरदासः—सं० १४७६-१५७४ यावत्। अङ्गदस्य शिष्यः अकबरेणायं बहुमन्यत।

गुरुः रामदासः=सं० १४३४-१५८१ यावत्। अमरदासस्य शिष्यः।

गुरुः अर्जुनदेवः—सं० १५६३-१६०६ यावत्। रामदासस्य तृतीयः पुत्रः। एतेन ग्रन्थसाहिबस्य संकलनमकारि।

गुरुः हरदायः—सं० १६३०-१६६१ यावत्।

गुरुः हरकृष्णः—सं० १६५६-१६४ यावत्।

गुरुः तेगबहादुरः—सं० १६२१-१६०५।

गुरुः गोविन्दसिंहः=सं० १६६६-१७०८ यावत्। एतेन शिष्येभ्यः सामूहिकोपासनायाः विधिः प्रचालितः। अमृतपानस्य महत्त्वं प्रतिपाद्योऽयं बाह्यैक्यार्थं (कंघी, कच्छ, केश, कड़ा, कृपाण) शिष्येभ्यः प्रादात्।

—:०—

## हिमालये मणिशैले नानकेन सह गोरक्षशिष्याणां विचाराः

हिमालये (मणिशैले) महाकाव्येऽत्र दशमे एकादशे द्वादशे च प्रस्तावे गोरक्षेण तच्छिष्यैश्च सह नानकस्य शास्त्रार्थविषये विचाराः समक्षमागच्छन्ति। तथाहि—आगच्छन्तं नानकं दर्शं दर्शं गोरक्षस्तं निवर्तयितुं सिद्धान् जगाद।

अतस्तत्रतः (मणिशैलात्) सर्वप्रथमं मत्स्येन्द्रः समागतः।
१. १० मे प्रस्तावे ७९ श्लोकतः १२५ यावत् मत्स्येन्द्रस्य नानकेन सह योगविषये योगवपुर्निर्माणविषये च विचारः।
२. ११ शे प्रस्तावे:—

क. भर्तृहरिनानकसम्वादः २ श्लोकतः २३ यावत्, २८ तः ४५ तथा ७७ तः ८९ यावत् विविधविषये विचारः।

ख ४६ श्लोकत ५६ यावत् कनीफा सह नानकस्य "कथमीश्वरः ? केन कथं वा लभ्यते" इत्यादिविषये विचार ।

ग ५८ श्लोकत ६५ यावत् हनीफा सह विचार ।
घ ६६ " ७५ " गोपीचन्द्रेण सह विचार ।
ङ. ९० " १०४ " मूतवा सह चार्वाकमते विचार ।
च. १०६ " १२० " लहुरीया सह बौद्धमते विचार ।
छ १२३ " १२६ " कन्थरेण सह भक्तिविषये विचार ।

३ १२ शे प्रस्तावे —

ज २ श्लोकत २० यावत् सङ्गरेण विचार ।
झ ३० " ४० " मङ्गलनाथेन विचार ।
ञ ४३ " ५९ " शम्भुनाथेन प्राभाकरमते विचार ।
ट. १३० " १३८ " कथरिणा सह ।
ठ १२९ " १४६ " धर्मनाथेन विचार ।
ड १५२ " १७० " घगरेण विचार
ढ १८० " १८३ " प्राणनाथेन विचार ।
ण अन्ते ११० त १२९ तथा १५६ त १७७ यावत् गोरक्षेण सह विचार ।

विचारसारस्तु—

विवादस्तत्त्वबोधाय न विरोधाय" ति ।

तदनु द्वादशे प्रस्तावे ९ नाथाना नामानि । तथाहि—गोरक्षनाथ मत्स्येन्द्रनाथ, मङ्गलनाथ चर्पटनाथ, घुग्घुनाथ, प्राणनाथ, गोपीनाथ, चम्बानाथ सुरतिनाथश्च ।

तत्र षड् यतीना नामानि । तथाहि —

गोरक्ष, दत्त आत्रेय हनुमान्, भैरव, लक्ष्मण भीष्मवर्मा च ।

अथ च १९३।१२ त २०७।१२ यावत् ८४ सिद्धाना नामानि सन्ति ।

एतदतिरिक्त प्रस्तावेऽस्मिन् अर्थात् ७४।१२ त ७६।१२ यावत् शीधुचषकस्य निर्माणवर्णनं वैशिष्ट्यवर्णनं च । तथाहि ।

"द्राक्षादि सधाय निधाय यन्त्रे
विधाय ताप कलयेद्र यमर्कम् ।
स एष सद्भिर्विधिना निपीत
सिद्धीरनेका निदधाति पाणौ"

तदनु भैरवीचक्रचर्चा ३८।१२ श्लोके। इत्थं चषकं निपीय भैरवीचक्रे गत्वा ऽखण्डनन्दमातनोति नाथः।

"यत्रास्ति भोगो न च तत्र मोक्षः
यत्रास्ति मोक्षो न च तत्र भोगः।
श्री सुन्दरीसेवनतत्पराणां
भोगश्च मोक्षश्च करस्थ एव॥"

—:o:—

# योगस्य वपुषो वर्णनम्

१. ऋतौः सङ्गमे गर्भाशये रेतः शोणितयोर्व्यतिकरः।
ततः पूर्वमासे क्लेदमात्रं भूतचैतन्ययुक्तम्।
द्वितीये मासे बुद्बुदत्वम्।
ततः शौनकमते पूर्वं मूर्धा
मार्कण्डेयमते पूर्वं पाणिपादौ
पाराशरमते पूर्वं नाभिः
कृतवीर्यमते पूर्वं हृदयम्
गौतममते पूर्वं कोष्ठम्
धन्वन्तरिमते युगपत् सर्वं सूक्ष्ममुदेति।
२. ततः ज्ञानेन्द्रियं जीवयति
ततो वृद्धिं व्रजति
तत आहार योगः
ततो लाघवादिकानाकाशादिगुणानादत्ते।
तृतीये मासे सर्वाणीन्द्रियाणि।
चतुर्थे मासे स्पन्दनम् अङ्गानां स्थैर्यं च।
पञ्चमे मासे लोहित
षष्ठे मासे बलस्य वर्णस्य नखानां लोम्नां च सम्भवः
सप्तमे मासे नाडीस्नयुशिरायुतः।
तत्रैव चैतन्ययोगः।
अष्टमे मासेस्मृतिस्ततस्त्वङ्मांसः।
तत ओजो हृन्निलयं प्रयाति
इत्थं ततः पाट्कौशिकं वपुः॥
लोमलोहितमांसानि इति त्रीणि मातुः

---

१. रागेणातिरजोगुणस्यजनुषा स्त्रीपुंसयोः संगमे
रेतः शोणितयोर्ऋतौ व्यतिकरो गर्भाशये जायते।

२. अग्नीषोमाववनिपवनौ व्योमसत्वादयश्च
गर्भं ज्ञानेन्द्रियगणयुता जीवयन्त्यात्मयुक्ताः
अन्तर्वल्या रसवहशिरा नाभिनाड्या शिरोयंत्
लग्ना वृद्धिं व्रजति तदसौ तावदाहारयोगात्॥

स्नायुअस्थिमज्जानः इति त्रीणि पितुः
इति ३+३=६ पाट्कौशिकं वपुः।
ततो नवमे दशमे वा मासे शिशुरूपे बहिरेति बालः।
यः कश्चित्सप्तमेऽष्टमे वा मासे बहिरेति स स्वकर्मनिन्द्यः।
ततो बहिरागत्य विगतस्मृतिः सन् रोरुयते शिशुः।
तत्र शरीरेः—
सप्त कला आशया धातवस्तन्मला उपधातुत्वचश्च।
त्रयो दोषाः।
नव स्नायवः।
शतानि द्विशत्याद्यः सन्धयः।
३६० अस्थीनि।
७०० शिराः।
दशोर्ध्वं दशार्धश्चतस्रः तिर्यक् रसप्रापिका धमन्यः।
षोडस कण्डराः ( याः प्रसारम् आकुञ्चनं च सृजन्ति )
पञ्चशतं मांसपेश्यः।
३ अंत्राणि स्त्रीणाम्।
३ कोष्ठ्यः।
५०० शिरांसि।
७२००० नाड्यः तासां श्रेष्ठा वायुवहा दश विस्तः।
१० छिद्राणि वपुषि पुरुषाणाम्
१३ छिद्राणि वपुषि स्त्रीणाम्
३ १/२ अंत्राणि पुरुषस्य ॐ
तत्र
अधोमुखं पङ्कजवद्हृदयं मनीषास्थानम्
ततः प्लीहा।
तदधो वामे लोहितवाहिनीनां शिराणां मूलम्।
तदधो वामे शोणितफेनजन्मा फुफ्फुसः।
हृदोध दक्षिणे यकृत्।
ततः पित्तसद्म।
ततः कुक्षिस्थितो वृक्कः।
ततो नाभिः।
नाभौ सोमस्य मण्डलम् तन्मध्यगं रविमण्डलम्।
ततः स्थविष्ठे वपुषि यववदग्निः।

ततो वायव ।

१० वायव प्राणोपानसमानश्चोदानो व्यानाः नाग कूर्म कृकरो देवदत्तो धनञ्जय इति।

ततस्तिसृणा वायुवहाना नाडीना मध्ये कासाचिद्वर्णनम्

वामे इडा ।

दक्षिणे पिङ्गला ।

मध्यदेशे सुषुम्णा ।

वामवक्षसि गान्धारी

दक्षिणेऽक्ष्णि हस्तिजिह्वा ।

दक्षिणकर्णे यशस्विनी ।

वदने अलम्बुषा ।

लिङ्गदेशे कुहू ।

मूलस्थाने शङ्खिनी ।

१. ऋतौ स्त्रीपुंसयो सगमे गर्भाशये रेत शोणितयोर्व्यतिकर ।

ततः पूर्वे मासे क्लेदमात्रं भूतचैतन्ययुक्तम् ।

इडाया तु स्थितश्चन्द्र॰ पिङ्गलाया तु भास्कर ।
सुषुम्णाया स्थित शम्भु शम्भोर्हंसस्वरूपता ॥

तत्र चन्द्रं रात्रौ वारयेत् दिवाकरं दिवा वारयेत् । अत्र नृणा स्वाभाविकी श्वासप्रश्वासयोर्गति इत्य नाडीना वायोश्च स्थितिं व्यवहार कार्य च ज्ञात्वा जनो योगाभ्यासरतो भवेत् । अनेन प्रकारेण योगाभ्यास कुम्भक च कुर्वन् योगी यायात् योगम् । एतेन योगेन आत्मा 'सोऽहं' इत्युदीरयति तत ओंकार आविर्भवति तत षट् चक्राणि भित्वा योगी स्वस्य आत्मप्रकाश लभते । इत्थ जायते आत्मा सफलप्रकाशः । तेन ज्ञानं ज्ञानान्मुक्तिरिति ॥

— ० —

१. कुम्भकेन सुषुम्णाया मध्ये महति मारुते
प्राणोन्मूल समुत्थाय प्राप्येडा पिङ्गला रवि
नासिकाभ्या बहिर्वा लीयते द्वादशाङ्गुले
अष्टाङ्गुलाद् विना न्तर्नाडीभ्या सोमरूपक
मलमूत्रमरुच्छब्दाप्ययान स बहिः क्षिपेत ॥ —ना० चे०

२. ततो नाडी सुषुम्णामाश्रित
अग्नी क्षोभमय उदानः
आब्रह्मरन्ध्र याति तत आत्मा 'सोऽहं' उदीरयति ।
तत ओंकार आविर्भवति
तत षट् चक्राणि भित्वा योगी
आत्मप्रकाशं लभते ॥

# भूगोलखगोलवर्णनं महाकाव्येऽत्र

नानको यदा वैकुण्ठादागतवान्तदा स मर्दन भूगोलस्य वर्णन श्रावयामास इद १४ प्रस्तावस्य १४ श्लोकादारभ्य प्रस्तावान्त यावद् वर्तते। खगोलस्य च वर्णन कृतवानस्ति। सर्वमिद विश्व भगवतो वपुषि स्थिर चित्त सूक्ष्ममपि वस्तु महीतु तथैव सहते यथा स्थूले शरव्ये धन्वापु स्थिरकर सायकेन सूक्ष्ममपि विध्यति। तदिद सकल विश्वमित्थ दृष्टिपथमागत नानकस्य।

सर्वप्रथम लक्षयोजनविस्तारो वर्तुलो जम्बूद्वीपो नयनपथमागत.। तत्र सन्ति नव वर्षाणि। तदन्तरिलावृत धरातलम्। तत्र वर्तते कनकगिरि यो ९६००० यो० महीं प्रविष्ट १२००० यो० उपरि प्रभूत। इलावृतस्योत्तरे नीलपर्वत। स च ८७ यो० बहि स्थित। तदन्त सन्ति श्वेतगिरि, शृङ्गवान्पर्वत, कुरुवर्षश्च। इमे त्रय क्षीरोदा घय १०००० यो० तुगा २००० विस्तृताश्च। ततो वर्तते मेरु ततो मन्दर। तत्र सन्ति वनानि चैत्ररथ, नन्दन वैभ्राज सर्वतोभद्र। माकन्द, चूत जम्बू, कदम्ब, न्यग्रोधश्च फलतरव सन्ति।

इलावृतात्पश्चात् पञ्च मधुनो धारा वहन्ति। मेरौ नव पुराणि सन्ति—मनोवती, अमरावती तेजोवती, सयमनी कृशाङ्गना, श्रद्धावती, गन्धवती, महोदया, यशोवती च। मेरुस्थाया जाह्नव्या गतिश्चतुर्धा। सीता गन्धमादन गच्छति, भद्रा क्षीरसागर गच्छति महानदी माल्यवन्त गच्छति केतुमाला च पश्चिमसागर गच्छति। तत्र सन्ति क्रमेण हयग्रीवो हनूमान् कलिनरसिहश्च देवा। जम्बूद्वीपे अष्टौ उपद्वीपा सन्ति। स्वर्णप्रास्थ, स्वमुकस्थ, आवर्तन, रमण, कौक, पाञ्चजन्यक सिंहल, लङ्का च।

ततो जम्बूद्वीपाद्द्विगुण प्लक्षद्वीप तत्र तनूनपात् सप्तजिह्वो देव। तत्र शिवादयो वर्षाणि, मणिकूटादयो गिरय।

तत शाल्मलीद्वीप, क्रौञ्चद्वीप शाकद्वीप, दधिद्वीप, पुष्करद्वीपश्च। तत्र वर्तते लोकालोको पर्वत। सूर्यकिरण लोकालोक पर्वत नातिक्रमते।

पृथिव्या पश्चिम शतयोजनमुत्तुङ्ग यान्ति, तदूर्ध्वं मेघा, ततोऽनिल, तदूर्ध्वमन्तरिक्षम्। तत्र सन्ति भूतादय। ततोऽयुतयोजनमुत्तुङ्गे सिद्धा सन्ति, ततो राहु तत पिशाच, ततो गुह्यक, ततो गन्धर्व, ततो विद्याधर, ततोऽप्सरस, ततो रविभुवर्लोके। निशाकरोऽस्ति लक्षयोजनमुपरि, लक्षत्रये नक्षत्राणि, द्विलक्षमुपरि उशना

ततो बुधः, ततः कुजः, ततो गुरुः, ततः सूर्यः, तत एकादशलक्षोर्ध्वे सप्तर्षिः, ततस्त्रयोदशलक्ष्यादूर्ध्वं ध्रुवः। आदित्यादाध्रुवः स्वर्लोकः। भूलोकाधः, अतलं, वितलं, सुतलं, तलातलं, धरातलं, महातलं, रसातलं, पातालञ्च। तत्रैव अतले बलेर्मुखात् तिस्रः स्त्रियः समागतवत्यः, कामिनी, स्वैरिणी, पुंश्चली च। वितले हाटकेश्वरः, सुतले बलिः, तलातले मयः, महातले काद्रवेयः, रसातले दैतेयः, पाताले वलिः, ततोधः शेषः। भुवोधस्तात् जलादुपरि नरकाः। ते सन्ति मुख्यतः २८ रूपाः—तामिस्रः, अन्धतामिस्रः, भैरवः, कुम्भीपाकादयः।

ततः पश्चाद् नरकयातनावर्णनयम च तदनु स्वर्गस्य स्वर्गफलस्य च वर्णनमस्ति।

—: ० :—

## महाकाव्ये सुभाषितानि

१. अन्तेवासिन्युपाध्यायः प्रजावत्यां च नन्दिनी।
निसर्गेणैव बहुत्वश्रण्डिमानमकारणम् ॥
—८।६

२. प्रयाति मार्गेण सता सदश्वे
कशानिपातोऽवितरां प्रसह्य ॥
—६।६

३. सन्तः पुराणेन पथाचरन्ति ॥
—६।१७

४. जानन्ति सन्तो वनिता लतेव।
विनावलम्ब कथमेव तिष्ठेत् ॥
—६।१८

५ लतां य आरोपयते सयत्नं
फलावधिप्रौढतरं करोति ॥
—६।२२

६. त्वं गान्धारगतो नियोजितमना
क्रीणासि भो घोटकान् ॥
—६।९९

७. सदागतिं शक्यति को निरोद्धुम् ॥
—१०।४

८. जालस्थमीनास्तरलीभवन्ति ॥
—११।१०३

९ विवादस्तत्त्वबोधाय न विरोधाय योगिनाम् ॥
—१२।६२

१०. सर्वास्ववस्थासु दया न दुष्टा ॥
—१७।६२

११. बालेन निह्नूय हृते पदार्थे।
पित्रोः प्रकोपो भवति प्रभूतः ॥
—१८।९५

१२. समाजे खलु विख्यानां
नासिकाघान्न दृश्यते ॥
—१८।११३

१३ ते भेदभाज उदिता गुणतारतम्यात् ।
योद्धापि तद् व्यवहरत्यबुधेन तुल्यम् ॥

—१८।११४

१४ भवन्ति शास्त्रे स्वत एव विग्रहा ॥

—१८।२०

१५ पात्रेण येन केनापि पय पान हि तृप्तिदम् ॥

—१४।६७

१६ महतामनुकम्पया　　महत्त्व
नितरा फल्गुरपि प्रपद्यते　हि ॥

—१६।१७

१७ विरक्तभाज सम्भावनीया खलु सर्वथैव ॥

—१७।१७

१८. वसुप्रिया विदधति किं न पातकम् ॥

—२०।४

१९. मन्यन्ते　गौरव　कस्य
प्रभुत्वमदमोहिता　　॥

—२०।४४

२०. कियद्दिन किन्तु भुवि प्रभुत्वम् ॥

—११।६

२१ द्विजोऽन्ययनो वा यवनो विजित्य
मनो　जगन्नश्वरमेव　बुध्या ।
जानाति य प्रेमपर　तमीश
स वै महात्मा स च वन्दनीय ॥

—१०।३६

२२ स्वान्ते कठोरे　मदमत्सराद्यै
न रोहति　ज्ञानसुपर्वशाखी ॥

—१०।२५

२३ पक्षी स्वगत्या च पशु स्वगत्या
नर स्वगत्या च सर प्रपद्य ।
तोय पिबेत्तृप्तिमपि प्रयाया-
दागच्छत कस्यचिदस्ति हानि ॥

—१८।१३०

— ० —

# प्रकृतिवर्णनम्

यथा सर्वत्र महाकाव्ये प्रकृतिवर्णनं दृश्यते तथैवात्रापि सरससरसं प्रकृतिवर्णनं समक्षमायाति। प्रकृतिपदस्य सामान्यो विशिष्टश्च चार्थं भवति। सामान्या प्रकृतिस्तु पृथिव्यप्तेजोवाय्वाकाशकादिगात्मरूपा या सर्वमेव दृष्टिपथमवतरति। विशिष्टा प्रकृतिस्तु तस्या भिन्ना। साहित्यशास्त्रे प्रकृति पदेन संसारे दृश्यमानस्य वस्तुनः स्वाभाविकरूपमेव गृह्यते। इत्थमत्र महाकाव्ये वस्तुनः स्वाभाविकरूपस्य वर्णनं तरलतरलं लोचनपथमञ्चति।

प्रथमप्रस्तावस्य २० श्लोकात् २९ श्लोकं यावत् पुनरेकोनविंशतितमे प्रस्तावे चास्माकं नयनपथमञ्चति प्रकृतिः। तत्र कचित् मनोहारिवनं, समुन्नतस्कन्धो वृक्षः, फलोल्लसन्तरुः, आम्रः, आतकाम्रः, पनसः, लकुचः, कदम्बः, अशोकः, तालः, तमालः शालः, निम्बः, प्लक्षः, आमलकः, पिप्पलो, जम्बुः, वट आदयः फलवृक्षाः समक्षमायान्ति, अन्यत्र मल्लिका, चंपकः, कुन्दः, विल्वः, वृन्दा, जपा, नकुलः, सरम्भआदयः पुष्पवृक्षाः, मन्दसगन्धवाताः दृश्यन्ते, इतरत्र कपोतः, खंजनः, कोकिलः, शुकः, बर्हि, नीलकण्ठः, चञ्चरीकः, तमालः स्वस्थक्रीडामग्नाः दृश्यन्ते, अस्यत्र मृगः, खड्गः, गजः, सिंहः, शशः, क्रोडः, मर्कटः, महिषश्च वन्या इतस्ततो भ्रमन्ति।

कर्हिचित् अखिलजीवसुखप्रदैका स्वच्छोल्लसत्सुरभिपुष्पयुता गभीरा ऐरावती विमलवारितरंगतीरा भागीरथी दृष्टिपथमवतरति।

तत्रैव वने कचित् विनिर्धूततमोमलाः प्रबुद्धतत्त्वा मुनयस्तपस्यन्तः समवलोक्यन्ते।

कदाचित्तद्वनं विशिष्टं स्थलमिव निर्द्वन्द्वं निर्वेदं च समक्षमागच्छदवितरामानन्दमाददाति।

यत्र—

> एवं पाययति स्तनं स्वतनयं व्याघ्री कुरङ्गी शिशून्।
> अन्यं बिभ्रति बभ्रुषु प्रतिदिनं प्रीतिं परां मूषिकाः॥
> यस्मिन् नृत्यति बर्हिणोऽहि निवहो निःसंभ्रमं वीक्षते।
> क्रीडन्तः करिणांगणेषु कुतुकं कुर्वन्ति कण्ठीरवाः॥

पुनरेकोनविंशतितमे प्रस्तावे जलाल पारे समुद्रं गत्वा झंझावाते नावं निमज्जन्तं पश्यति। अनायासेन स्वयमागतं भोज्यपदार्थं पश्यति प्रकृतेश्चापूर्वां छटां च पश्यन्नवितरामानन्दमनुभवतीति वर्ततेऽत्र महाकाव्ये प्रकृते सचित्रं सजीवं ललितललितं च वर्णनम्॥

# महाकाव्येऽत्र रसः

महाकाव्येऽत्र कश्च रसोऽङ्गीभूतः के च ते अङ्गभूता इति विचारात्पूर्वं तावदत्र रसस्वरूपं तल्लक्षणोदाहरणानि च प्रस्तूयन्ते। सचासौ रसो मम्मटानुसारं यथा—

कारणान्यथकार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥ इति

भरतेन तु "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इत्युक्तम्"॥ अयमसौ रसोऽत्र चतुर्धा व्याख्यातः। तत्र सर्वप्रथमं —

भट्टलोल्लटस्य निर्गलितोऽर्थः। यथा असत्यपि सर्पे सर्पतयावलोकितात् दाम्नोऽपि भीतिरुदेति तथा सीताविषयिणी अनुरागरूपा रामरतिरविद्यमानापि नर्तके नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्त्येव रसपदवीमधिरोहतीति। श्रीशङ्कुकस्य निष्कर्षः। यथा कुज्झटिकाकुलिते देशेऽसतोऽपि धूमस्याभिमानात् धूमनियतस्य वह्नेरनुमानम्, तथा नटेनैव सुनिपुणं "ममैवैते विभावादयः" इति प्रकाशितैस्तत्रासद्भिरपि विभावादिभिस्तन्नियता रतिरनुमीयमानापि निजसौन्दर्यबलात्सामाजिकानामास्वाद्यमानतया चमत्कारमादधती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिः।

भट्टनायकस्यैष सारः। शब्दस्याभिधारूपव्यापारवत् काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति। काव्यार्थबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्वरामत्व-सम्बन्धांशमपहाय सामान्यकामिनीत्वरतित्वादिनैवोपस्थाप्यते। अन्तेन भोजकत्व व्यापारेण तु, उक्तरीत्या साधारणीकृतविभावादिसहकृतेन सा रतिः सहृदयैरास्वाद्यते इति रतेरास्वाद एव रसनिष्पत्तिः।

अभिनवगुप्तपादस्य मतस्य स्थूलत इदं मर्म। रतिकारणादीनामनुभवादस-कृदनुमिता रतिः संस्काररूपेण सहृदयहृदयमधिरोहति। अथ कियता कालेन सुनिपुणमनुष्ठितयोः,रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादिप्रतिपादकयोरपि काव्यनाट्ययोः पूर्वोक्तभावकत्वव्यापारेण रामसीतादिविशेषांशपरिहारेण रतिकारण-साधारणकामिनीत्वादिना प्रतीतैः विभावादिभिः सहृदयहृदयावस्थिता सा रति-र्व्यञ्जनया, अभिव्यक्ता सामाजिकानामास्वाद्यतामायातीति एतादृशास्वाद एव

रसनिष्पत्तिरिति। पूर्वमते असत्या अपि रतेरेवास्वादः। अत्रमते तु वासनया स्थिताया एवेत्यनयोर्भेदः।

—काव्यप्रकाश वामनटीका

इत्थं रसस्वरूपं निरूप्य सर्वेषां रसानां लक्षणानि नानकचन्द्रोदयनामक-महाकाव्यादुदाहरणानि च प्रस्तूयन्ते।

अत्र भरतः—

## शृङ्गारस्य लक्षणम्

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वसेवाभिः।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति॥

## नानकचन्द्रोदयादुदाहरणम्

मलयजरससेकान्मालतीदामतश्च
वरतनुपरिरम्भस्तेन सम्भावितोऽभूत्।
सुखमपि मदिराक्ष्या वीक्ष्य तस्याः प्रियेण
न किमपि बहु मेने शारदः पूर्णचन्द्रः॥

—३ प्रस्ताव

अथवा

निशम्य कोलाहलमुल्लसन्मना
तडिच्छविः शैशवशेषशोभना
सरोजराजन्नयनाथ नानकी
गवाक्षनिक्षिप्तमुखी निरैक्षत॥

—२ प्रस्ताव

## हासस्य लक्षणम्

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च।
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हासः॥

## नानकचन्द्रोदयादुदाहरणम्

"त्वं गान्धारगतो नियोजितमनाः
क्रीणासि भो घोटकान्"

## करुणस्य लक्षणम्

इष्टजनस्य विनाशात् शापात् क्रोधाच्च बन्धनाद् व्यसनात्।
एतैरर्थविशेषैः करुणाख्यरसः समुद्भवति॥

## नानकचन्द्रोदयादुदाहरणम्

योगीन्द्र नानक पितर्यदि सत्यशक्ति-
स्त्वं मे तदा भव सुहृत्वमुपेतजीवः।
बालं हि तान्यननुशिष्य कुतः प्रयासि
निष्कारणा करुणता तव शोभते किम् ॥

—१९ प्रस्तावे

## रौद्रस्य लक्षणम्

आयुधखड्गाभिभवाद्वैकृतभेदान् विदारणाच्चैव।
संग्रामसम्भवाद्यादिभ्यः संजायते रौद्रः ॥

## नानकचन्द्रोदयादुदाहरणम्

कोणैराहन्यमानाः प्रलयजलधरध्वानघोराश्च भेर्यः
पाणीन् वीरव्रजस्यत्सरुधृतिरभसोल्लासितश्चक्रमान्।
धानुष्कैर्घुर्णितानां शरनिकरकिरां सर्वतः शिञ्जीनीनां
निःश्वासैः सैन्ययोः किं स ततनिवदिशां कोपि शुश्राव किञ्चित् ॥

अथवा

पानीयप्रस्थ एव प्रथितपटुभटध्वाननिर्घूर्णिताद्रि।
प्राग्युद्धकुद्धदन्तावलदलिततरर्वावरं प्रत्यगृह्णात् ॥

## वीररसस्य लक्षणम्

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात्।
विविधादर्थविशेषाद्वीररसो नाम संभवति ॥

## नानकचन्द्रोदयादुदाहरणम्

यवनोर्हर प्रसर धुन्वतीः प्रजा
धनिनश्च दण्डय पुराणि निर्दह।
ललितांश्चकार विषयाननुक्षणं
परिधाविता सपदि मुद्गलावली ॥

अथवा

आयाहि प्रहर प्रतीच्छ जगतीं पश्याधुना नश्यसि
प्रस्यस्यत्र विकत्थनं तव वृथा त्वां रे करोमि द्विधा।
च्छ्रुघूर्णासिकराः करालवदना रक्तारुणश्मश्रवो
जल्पन्तो भुवि भीरुभैरवभिदि छिन्ना निपेतुः क्षणात् ॥

## भयानकस्य लक्षणम्

विकृततरसत्वदर्शनसंग्रामारण्यशून्यगृहगमनात्।
गुरुनृपयोरपराधात्कृतकः स भयानको ज्ञेयः॥

## नानकचन्द्रोदयादुदाहरणम्

ज्वालां द्रष्टुमगादगाधजडता विध्वंसिनी देवताम्
आब्रह्मप्राणियपर्यन्तमखिलक्षितियत्प्रोतमेवेहतेत्र।
श्रौतस्मार्तप्रसिद्धप्रवचनमनसा हर्षमुल्लासयन्ती
कालव्यालालिमाला कुपथगतधियां दृश्यते सा कराला॥

## वीभत्सस्य लक्षणम्

अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च।
उद्वेजकैश्च बहुभिर्वीभत्सरसः समुद्भवति॥

## नानकचन्द्रोदयादुदाहरणम्

भिन्नबाहुचरणाः क्षतो रसो
भिन्नकुक्षिगलितांत्रवल्लयः।
देहिमे जलमिति प्रजल्पिते
वीक्षिता गलचलत्कृशाशवः॥

## अद्भुतस्य लक्षणम्

यत्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्मरूपं च।
तत्सम्बद्धैरर्थे रसोद्भुतो नाम सम्भवति॥

## नानकचद्रोदयादुदाहरणम्

ज्वालां विलोकयितुगम्य व्यपगतोऽहं
श्रुत्वा विरक्तवरमन्वसरं यतीन्द्रम्।
पृष्टोऽभ्यधां यमिनमन्वयनामनी स्वे
शङ्काकलङ्कमयशोधितवान् गुरुर्मे॥

—१ प्रस्ताव

## शान्तरसस्य लक्षणम्

[1]निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

## नानकचन्द्रोदयादुदाहरणम्

त्रिसंध्यस्नानार्द्रास्तनुकनकतन्तुप्रतिभटो
जटाः शुभ्रां भूतिं धवलमुपवीतं च दधतम् ।
निषण्णं शार्दूलत्वचि हरिणकृत्या परिवृतं
कृपादृष्ट्या दैन्यं सपदि शमयन्तं च जगताम् ॥

—:०:—

१. यत्तु अत्र वदन्ति शान्तरसस्य स्थायी निर्वेदो न युज्यते, तस्य निर्वेदस्य स्वस्मिन् स्वातिरिक्ते च हेयत्वज्ञानात्, देहावच्छिन्ने आत्मनि तुच्छत्वबुद्धित्वाच्च तथा च सुखरूपत्वाभावान्न तत्स्थायिकस्य रसत्वम् इति तत्तु चिन्त्यमेव विषयेषु ( स्वस्मिन् स्वातिरिक्ते च ) अलं प्रत्ययरूपस्य वा निर्वेदस्य शोकवत् समाधानात् । वस्तुतो रत्यादिकमुपजीव्य हर्षादेरिव तत्त्वज्ञानजनिर्वेदमुपजीव्य शमादिप्रवृत्ते स एव स्थायी न शम । अयं च तत्त्वज्ञानजन्यनिर्वेदस्यैव शमरूपत्वात् । न खलु ब्रह्मज्ञानजन्य निर्वेदस्य वैवर्ण्योच्छ्वासादिकार्यजनकता स्वप्नेऽपि सम्भवति ।

तदुक्तम्—स्थायी स्याद्विषयेष्वेव तत्त्वज्ञानाद्भवेद्यदि ।
इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥

का० प्र० वामनी

# भक्तिभावस्य लक्षणम्

रतिर्देवादि[1]विषया व्यभिचारी तथाञ्जितो भावः।

नानकचन्द्रोदयादुदाहरणम्[2]

शरणं करुणाकरो हरिः
मम नान्यं कलयामि कंचन।
गरुडध्वजतो गतिः परा
मम नास्त्येव समस्तजन्मसु॥

अत्र महाकाव्ये शान्तो रसोऽङ्गी। शृङ्गाररौद्रवीरादयस्त्वङ्गभूता इति। गुरोर्नानकस्य जगदिन्द्रजालं पश्यतो जीवनदर्शनम् उदासिमतप्रवर्तनं च शान्तरसं प्रधानभूतमुपन्यस्यति। रसानां सर्वेषां तु प्रागेव प्रदत्तानि सन्ति तावल्लक्षणानि। अत्र केचिद्वदन्ति यदत्र भक्तिभाव एव प्रधानो, रसास्तु सर्वे एवाङ्गभूता इति तन्न समीचीनम् यतोऽहि प्रारम्भतोऽवसानं यावत् भक्तिभावस्य चर्चा द्वयोरेव प्रस्तावयोः कृता वर्तते यत्र शान्तरसस्य सर्वेष्वेव प्रस्तावेषु महत्त्वं दृश्यते।

—o—

---

१. आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया। कान्ताविषयस्तु व्यक्तः शृङ्गार
—मम्मटः

२. अत्रोदाहरणं कुतः प्रस्तावानुसृतमिति अनुसन्धित्सुना बोद्धव्यम्।

## महाकाव्येऽत्र गुणः

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्तेस्युरचलस्थितयो गुणाः ॥

इति मम्मटोक्तदिशा 'रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वम्', अव्यभिचारेण रसोपकारकत्व चेति लक्षणद्वय फलित गुणस्य । स चासौ गुणस्त्रिविधः ।

"माधुर्यौज प्रसादाख्यास्त्रयस्ते न पुनर्दश"

इति मम्मटोक्ते । तत्र माधुर्य शृङ्गारे । द्रुतिहेतुत्वात् तथाचात्यन्तद्रुतिहेतुत्वात् करुणे विप्रलम्भे शान्ते च ।

ओज वीररसे दीप्त्यात्मविस्तृतेर्हेतुत्वात् । तथा च बीभत्से रौद्रे च तस्यैवात्मविस्तारस्याधिक्यात् । प्रसादस्तु सर्वत्र विहितास्थिति "समर्पकत्व काव्यस्य यत्तु सर्वरसान् प्रति । स प्रसादो गुणो ज्ञेय सर्वसाधारणक्रिय" इत्यानन्दवर्धनोक्ते ।

महाकाव्येऽत्र मुख्यत प्रसाद एव गुण । शान्तरसस्य प्रधानान्माधुर्यमपि सदैव प्रसाद इव राजते । केवल युद्धादिवर्णने पञ्चषा एव श्लोका ओजो गुण बिभ्रति ।

तत्र प्रसादस्योदाहरण यथा —

पुरोऽथ पान्थै परितश्चलद्भि
पद्भि स्वयात्रिप्रवरैरनेकै ।
अरण्यमन्यैर्विविधैर्युत तत्
समुत्सुकान्त करणे स दृष्टवान् ॥
१९।१

अन्यदप्युदाहरण यथा —

निशम्य कोलाहलमुल्लसन्मना
तडिच्छवि शैशवशेषशोभना ।
सरोजराजन्नयनाऽथ जानकी
गवाक्षनिक्षिप्तमुखी निरैक्षत ।
६।१३

—०—

# रीतिरत्र काव्ये

आलङ्कारिकाणां मते वृत्तिः रीतिश्च पर्यायवाचकौ एव। तत्र अनुप्रासो हि द्विविधो भवति छेकगतः वृत्तिगतश्च। तत्र वृत्तिस्तावत् :—

(१) मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः"

—प्रदीपे।

(२) "नियतरसविशेषव्यञ्जकत्वेन परिगणिता वर्णास्तद्वत्सन्निष्ठो व्यापारः सहकारी, आनुपूर्वी विशेषः स एव वृत्तिः"

(३) "वृत्तिश्च माधुर्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य संघटनाख्यो व्यापारविशेषः।"

एवा उपनागरिका, परुषा कोमलाख्याश्च वृत्तयः वामनादीनां मते वैदर्भी गौडी पाञ्चाल्याख्या रीतयो मताः। इत्थमत्र माधुर्यव्यञ्जकवर्णैर्युक्ता पाञ्चाली ओजः प्रकाशकैर्वर्णैर्युक्ता गौडी शेषैः प्रसादवद्भिर्वर्णैर्युक्ता वैदर्भी।

नानकचन्द्रोदये वैदर्भीरीते: प्राधान्यम्। गौणरूपेण तु अन्ये अपि द्वे लोचने पथमद्भवतः।

तत्र तावत् वैदर्भीरीतेरुदाहरणम् :—

"अधिगतः शिबिकां स हिरण्मयीं
हरिद्याल्लुरशोभत पण्डितः।
परिणये दशकन्यरविद्विषो
गुरुवशिष्ठ इवाप्तिप्रतिष्ठितः।

—४६।५

अन्यच्चोदाहरणं यथा :—

प्रसाधिता पाणिरगात्सुकेशी
केशानसंस्कृत्य जनेन कापि।
आदर्शमन्या दधती करेण
गवाक्षमाश्रिप्य परां रुरोध"

—९६।५

—:०:—

## अलङ्काराश्चात्र महाकाव्ये

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेणे जातु चित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

एतेन मम्मटोक्तलक्षणेन अलङ्काराणां रसव्यभिचारिस्थितित्वं नियमेन रसोपकारकत्वाभावश्च ।

तत्र शब्दालङ्काराः षट् । तथाहि :—

"वक्रोक्तिरप्यनुप्रासो यमकं श्लेषचित्रके
पुनरुक्तवदाभासः शब्दालंकृतयस्तु षट्"

—काव्यप्रकाशसंकेत (सोमेश्वर)

अर्थालङ्कारास्तु काव्यप्रदीपादौ परिगणिताः एकषष्टिः (६१)मम्मटोदिताः ।

नानकचन्द्रोदये शब्दालङ्कारस्यार्थापेक्षया बाहुल्यम् । अर्थालंकारेष्वपि रूपकोपमार्थान्तराणां बाहुल्यमत्र महाकाव्ये ।

महाकाव्यादमुष्य शब्दालङ्कारयोदाहरणं यथा :—

"सकलकर्मसुधर्मसुनिष्ठितः
विशदबुद्धिविलासविचेष्टितः"

—४।१

अन्यदुदाहरणं यथा :—

"मायानटीनायमिदं ततो नु
न मत्सरस्तत्र ममास्ति कश्चित्"

—५५।१

अर्थालंकारेषु तावदुत्प्रेक्षा यथा :—

ताः क्षत्रियाण्यो मृगशावनेत्राः
सुवर्णवल्लीसुकुमारदेहाः ।
अन्यत्र गच्छेदितिशङ्कयेव
कटाक्षदाम्ना वरमभ्यबध्नन् ॥

१००।५

इत्थमेवान्यान्यप्युदाहरणानि द्रष्टव्यानि सन्ति ।

—o—

## ऋतुवर्णनम्

ऋतुवर्णनमत्रापि महाकाव्येऽङ्गभूतमिव विदधत् शोभां काव्यस्य सहृदयानां समक्षमागच्छति। पञ्चमप्रस्तावेऽत्र महाकाव्ये ऋतुवर्णनं नितरां हृदयहारि हरतीव चेतांसि सभ्यानाम्।

तत्र वसन्तवर्णनं यथा :—

परागपिष्टातभरेण रञ्जयन्
दिग्वारनारीमुखमुन्मुखः परम्।
पिकालिगीतो सुरभिः समाययौ
कुसुम्भकौसुम्भपटो विटो यथा॥

अथवा

स्मर नरपतिशासनं समन्तात्
पिकनिस्टे परिघोषयत्यदोषम्।
त्यजतु किमपि मानिनी न मानं
प्रविशतु किञ्च विशालवेश्म मुग्धा॥

ग्रीष्मवर्णनं यथा :—

पांशुः स्पृशन्नपि पदे परितापहेतु-
र्व्याजेन दुर्जन इवातितरां सुशीलः
सन्तापिनोऽपि दिवसाः परिणामरम्या-
दीर्घास्तपोव्यतिकरा इव ते बभूवुः॥

## वर्षर्तुवर्णनम्

मेघाद्यैर्हरितेन्द्रनीलमलिनैराकाशमाच्छादयन्
फुल्लैरर्जुनसर्जनीपकुटजैः सर्वा दिशो भासयन्।
मत्तोन्मत्तककेकिदर्दुरगणान्कुर्वन्नसर्वस्वरान्
आषाढः समुपेत्य सो धुरि घनं ताप जनस्याहरत्॥

## शीतवर्णनम्

कन्यां तुलादिचतुरः प्रविहाय कृष्णां
भीमादिकानिव निरीक्ष्य हतं प्रतापम्।
पूर्वोत्तरां दिशमुपेत्य चिराय शीतं
प्रवासं युधिष्ठिर इवानुगतं निनाय॥

—:०:—

# नानकचन्द्रोदयस्य महाकाव्यत्वम्

सर्गवन्धो महाकाव्य"मित्यादिना यन्महाकाव्यस्य लक्षणमुक्तं तत् सर्वमत्र काव्येऽक्षरशः संघटते। अत्र महाकाव्ये एकविंशतिः प्रस्तावा सन्ति। श्लोकसंख्यास्तु अन्यत्रेवेह भिद्यन्त एव। छन्दसामपि सर्वत्र भेदाः दृश्यन्ते। छन्दसां विचारेऽस्त्यत्रैकं वैशिष्ट्यं यदेकस्मिन्नेव प्रस्तावेऽनेकेषां छन्दसां प्रयोगा कृता वर्तन्तेऽत्र।

नायकोऽस्त्यत्र स्वयं नानक एव योऽस्ति धीरप्रशान्तो नायकः। अत्र कृतं वर्तते वर्णनं जन्मनो मरणं यावन्नानकस्य। यद्यपि २०, २१ प्रस्तावयोः नानकस्य देहावसानात्पश्चान्नवसंख्याकानां गुरूणां आजन्मनो मरणं यावद् वर्णनं कृतमस्ति तथापि तेनैव कदाचिदपि भवेयुर्नायका महाकाव्यस्य। तथा सति नायकवैविध्यं स्यादत्र काव्ये। अत एव प्रायः इण्डियाऑफिसपुस्तकालयस्य हस्तलेखे (MSS) केवलमेकोनविंशतिरेव प्रस्तावाः सन्ति। नायिकास्त्वत्र नानकपत्नी सुलक्षणी एव। या च पुत्रद्वयं प्रसूय नानकस्य योगिवर्यत्वप्राप्तौ सततं प्रयत्नपरा समतिष्ठत। प्रायेण रसास्तु सर्वे एव विद्यन्तेऽत्र काव्ये येषां वर्णनं प्रागेव कृतमस्ति। प्रधानस्त्वत्रास्ति शान्त एव रसः। शृङ्गारवीरादयस्त्वप्रधानाः। हास्यरसस्य च्छित्राण्येवोदाहरणानि प्राप्यन्तेऽत्र येषां निरूपणं कृतमस्ति रसवर्णने। गुणा. सन्ति त्रयोऽपि। परमत्र वर्तते प्राचुर्यं प्रसादस्यैव। इत्यमत्र सर्वथा महाकाव्यस्य लक्षणं संघटते।

काव्यं हि नाम मम्मटोक्तदिशा "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इति। तदित्थं निष्पन्नम्—

१. सरसं स्फुटालङ्कारसहितम्। २. सरसम्, अस्फुटालङ्कारसहितम्।
३. सरसम्, अलङ्कारशून्यम्। ४. नीरसं स्फुटालङ्कारसहितम्।
५. नीरसम्, अस्फुटालङ्कारसहितम्। ६. नीरसम्, अलङ्कारशून्यम्।

एते षड् भेदाः काव्यस्य। अत्र मम्मटमते प्रथमद्वितीयचतुर्थपञ्चमानां काव्यत्वम्[1]। नानकचन्द्रोदयमिदं महाकाव्यं द्वितीयलक्षणसंघटितमिव विदुषां लोचनपथपञ्चति।

---

१. "अत्र केचित् कविकर्म काव्यमिति समाख्यानुरोधात् शब्दे एव काव्यत्वं स्वदयं। तस्य तत्तद्रससाम्यत्वात्। तस्मान् आस्वादजीवातु पदसन्दर्भः काव्यलक्षण वदति। तन्न। तथाहि। आस्वादवोधकत्वमेव काव्यत्व प्रयोजकरूपम्। यच्च शब्देऽर्थे चाविशिष्टम्। तथापि रसोद्बोधकत्वाङ्गीनेरिति, अर्थेऽपि दृश्यकाव्ये [illegible] काव्यत्वम्। कविकर्मव्यवहारस्तु तत्परतापरत्वाद्भाक्त एव। शब्दनित्यत्ववादिमते शब्दरूपेपि काव्ये कविकर्मव्यवहारस्य भाक्तत्वात्। एवमर्थेऽपि काव्यत्वे सिद्धे काव्य पठति काव्य रचयति, काव्यं शृणोति इत्यादि व्यवहारस्तु काव्यपदस्य शब्दमात्रपरत्वात् इति।

—काव्य प्र० नाम्न पृ. १४.

# महाकाव्यस्यैतिहासिकता

पुराणानि, रामायणं महाभारतं चोपजीव्य यानि काव्यानि लिखितान्यभूवन् तत्र जातं काव्यधर्मस्य बाहुल्यम्। परमिदं महाकाव्यं काव्यगुणैः सममेव प्राचुर्येणैतिहासिकं तथ्यमावेदयति। पं० ईश्वरशर्ममहोदयोऽयं गुरोर्नानकशिष्याद् द्वारकादासात् नानकजीवनवृत्तान्तं श्रावं श्रावं गुरुग्रन्थसाहिबं च समालोच्य स्वप्रतिभप्रतिभया महाकाव्यमिदं रचितवान्। अत एवात्रैतिहासिकं तथ्यं प्राचुर्येण वर्तते। गुरोर्जन्म समारभ्य देहत्यागान्तं सर्वं तथ्यमेव वर्तते काव्येऽत्र। केवलं द्वित्राण्योदाहरणानीदृशानि सन्ति यत्रातिशयोक्तिः कृता वर्तते कविना। विश्वविजयप्रयतमानस्य नानकस्य यात्रावर्णनप्रसङ्गे बहुधापतिता सन्त्यत्युक्तयः। तद्यथा वैकुण्ठगमनं, तत्र विष्णुदर्शनं तस्योपदेशग्रहणं, ध्रुवलोकगमनं, ध्रुवेण वार्तास्फुरणं, जनकेन सह साक्षात्कारः समुद्रलङ्घनं पादाभ्याम्, लङ्कायां विभीषणेन वार्ताकरणम्, तथा च क्षणेनैव पक्षकात्सुमेरुगमनं,मक्कातः स्वगृहगमनं क्षणेनैवेत्यादि। ये खलु नानकस्य पूर्वजन्मवृत्तान्ताः सन्ति ते तु भगवता बुद्धस्य जीवनवर्णने दशनवर्णने चावेदितमस्ति तथैवात्रापि नानकचन्द्रोदये वर्तते भूयानैतिहासिकांशः। अत एवेदमैतिहासिकमेव महाकाव्यं सर्वथा भवितुमर्हतीति। ये खलु नानकस्य गोरक्षशिष्यैः सह शास्त्रार्थविषया मक्कायां म्लेच्छाचार्यैः सह वार्ताविषया, अन्यैश्च पाखण्डिभिः सह ये चर्चाविषयास्ते यथा यथातथमत्कारा प्रदर्शिताः सन्ति ते च नैवात्युक्तिं स्पृशन्ति। यतो हि सतामत्रैवेतादृशो महिमा। भाषात्र काव्ये पाण्डित्यपूर्णापि लोकानुरञ्जिनी वर्तते। सन्ति केचित् सह्याशब्दा ये स्वनैव रूपेण प्रदर्शिताः सन्ति। यथा जबराईल, कारान,इत्यादि। बहुधा भाषात्र सुसरला सुनिबद्धा च राजते भावया भावव्यञ्जना समधिकं स्पष्टमञ्चति लोचनपथम्। अत सामञ्जस्यपूर्णोऽस्ति भाषाभावयोरत्र काव्ये। शैला खल्वत्र भाषाया भावं संयोजयन्ती लोचनपथमवतरति। वर्ततेऽत्र राजशेखरस्येव शैली चतुरता च। इत्यमिदं भाषादृष्ट्या, शैलीदृष्ट्या, ऐतिहासिकतथ्यदृष्ट्या च सर्वाङ्गीणं विराजमानमागच्छति समक्षमस्माकमक्ष्णोः। अर्वाचीनमिदं कार्यं संस्कृतस्य सर्वाङ्गीणसम्वर्द्धने सविशेषं स्थानमावेदयिष्यतीति निश्चप्रचम्।

—.०—

## भूमिकालेखने सहायकाः सिखधर्मस्य परिचयप्रदातृणां ग्रन्थानां सूची


१. The quint essence of sikhism = shiromani Gurudwara Pravandhak Cmmittee Amritsar.
२ Critical study of Adigranth – Dr Surinder singh, Readr Delhi University
३. Sikhism its ideals and instuctions Tejsingh.
४. Outline of sikhism – Surinder singh, Professor punjabi, Chandigardh
५. संत साहित्य = डा० सुदर्शनसिंह मजीठिया ।
६. उत्तरी भारत की संत परम्परा = परशुराम चतुर्वेदी ।
७. G. S. Durayl = Indian Sadhus
८. Civil and religious Institutons of the sikh = Wilson Jourual of the R. A Society 1818।
९. The Gospal of the Sathu = Surindar singh
१०. ब्राह्मनिज्म एण्ड हिन्दुइज्म = मोनियर विलियम् ।
११. दि सिखरिलिजियन = ए० ए० मेकालिफ ।

आक्सफोर्ड १९०९

१२. I. R. A. S भाग १८, फ्रेडरिक पिकनार ।
१३. फिलासाफी आफ दि सिखिज्म = शेरसिंह ।
१४. हिस्ट्री आफ दि सिखस = जे० डी० कनिंघम ।
१५. ट्रान्सफार्मेशन आफ सिखिज्म = गोकुलचन्द्र नागर ।
१६. नाथ सम्प्रदाय = हजारीप्रसाद द्विवेदी ।
१७. दि हिन्दू व्यू आफ लाइफ = राधाकृष्णन् ।
१८. पजाबी भाषा विगि यन अते गुरमति गियान = मोहनसिंह ।
१९. नानकचन्द्रोदयम् = देवराज शर्मा ।


—o—

# किञ्चिन्निवेदनीयम्

म० म० प० गोपीनाथकविराजैः श्रीव्रजवल्लभद्विवेदिमहोदयाः समाज्ञप्ताः नानकचन्द्रोदयस्यास्य सम्पादनं कारयितुम्। तदानीं श्रीव्रजवल्लभद्विवेदिन आसन् प्रकाशनाधिकारिणः (इदानीमिमे, योगतन्त्रविभागे व्याख्यातारः सन्ति) पदे। स च मां सम्पादनमनुष्ठ्य कर्तुं तदानीन्तनेभ्य उपकुलपतिभ्यः श्रीसुरतनारायणमणि-त्रिपाठिमहोदयेभ्य आज्ञामादाय न्ययोजयत्कार्येऽत्र। अतः सर्वप्रथममहमस्म्येतेषां कृतज्ञः। अनुसन्धानसञ्चालकस्यादेशानुसारं तदनु सम्पादनं कर्तुमहं समुद्यतोऽभूवम्। यौ तावद् हस्तलेखौ मयाधिगतौ तयोरासन् बहूनि अस्पष्टाक्षराणि, भ्रमाः, स्फुटार्थाश्चाशाः। परमहं सावधानेन महता परिश्रमेण च समारब्धवान् सम्पादनं संशोधनं चास्य कर्तुमिति। कार्यमिदं कर्तुमहं बहुशः समुत्साहितः पण्डितश्रीजगन्नाथ-उपाध्यायमहोदयैस्तदानीन्तनबौद्धदर्शनविभागाध्यक्षैः (एते सम्प्रति पालिविभागे प्राध्यापकाः सन्ति) रस्मदध्यक्षैश्च। ये सत्यासन्नान् भ्रमान् अस्फुटार्थांशांश्च सान्दूरी-कर्तुं सुव्यवस्थितं पाठं च विधातुमतीव मार्गप्रदर्शनं कृतवन्तः, सन्तीदानीन्तनाः सञ्चालकमहोदयाः पण्डितप्रवराः श्रीमद्रामनाथशुक्लमहोदयाः। इतः पूर्वं महाकाव्यमिदं नागतमासीत् प्रकाशम्। अतः कठिनकठिनं कार्यमिदं ललितललितं कर्तुं मया सिक्ख-धर्मस्य ग्रन्थाः समासादनीया आसन्। तदर्थमत्र तु मया समादरणीयाः सन्तश्चरणसिंह-महोदयाः समभ्यर्थिताः। एतेषामाशीर्वादं प्राप्य प्रकामं प्रसन्नोऽहं यथायोग्यं कार्य-माचरम्। गुरुवर्याः सभाजनीयाः सन्तमहोदया मह्यं सुचारुकार्यं कर्तुं प्रथाश्च प्रददुः। एतेषामाशीर्वादस्वरूपमेवेदमस्ति कार्यमिदं भवतां (पाठकानां) पुरतः शोभमानम्। इतः परमहं हार्दं धन्यवादं वितरामि प्रो० सुरिन्दरसिंहकोहलीमहोदयेभ्यः। एते चण्डीगढ़विश्वविद्यालये पञ्जाबीभाषाप्राध्यापकाः मत्कार्यसम्पादनाय बहुविधं प्रयत्नं कृतवन्त इति रक्षत्वेनं गुरुर्नानको निवराम। प्रस्तुतग्रन्थमुद्रणकार्ये हार्दधन्यवादस्य पात्राणि सन्ति प्रेसव्यवस्थापकाः विशेषतः श्रीहरिवंशत्रिपाठिमहोदय-प्रूफसंशोधनकार्ये कृतबहुपरिश्रमः धन्यवादार्होऽस्ति।

गुरुनानकस्य पञ्चशतशताब्दीजयन्त्याः पुनीतसमारोहावसरे (य समारोहः ५।११।६९ त सम्पत्स्यते) पुस्तकमिदं सम्पाद्य मया सहृदय-हृदयसमक्षं प्रस्तुव-न्नितरामानन्दमनुभूयत इति। अथ परं संस्कृतानुरागिणः प्रार्थ्यन्ते यद् याश्च त्रुटयः सञ्जातास्तदर्थमहमत्र क्षन्तव्य एवेति।

अकिरदविषमा यो
ज्ञानवैराग्यधाराः।

स जयति करुणाब्धि-
र्नानको योगिवर्यः ॥

देश्यैः सुबोधमधुरैः परमात्मतत्त्वं
वाह्लीकवर्गमपि बोधयताञ्जसैव
दैवान्धकारमपनीयत नानकेन
सन्दर्शितस्तनुभृतामपवर्गमार्गः ॥

विदुषामाश्रवः
सम्पादकः संशोधकश्च
ब्रजनाथ झा एम. ए; आचार्यः
विहारप्रान्ते दरभङ्गामण्डला-
न्तर्गतमहरैलग्रामवास्तव्यः ।

अन्तराष्ट्रिय-विभागः
वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी
२ अक्टूबर १९६९

—:०:—

श्रीगणेशाय नमः

श्रीदेवराजशर्मविरचितं

# नानकचन्द्रोदयमहाकाव्यम्

## अथ प्रथमः प्रस्तावः

[1]यस्याज्ञानवशादसावनवधिर्दुर्वारदैन्यास्पदं
संसारः सुखदुःखमोहगहनः प्राचीन उज्जृम्भते।
दृष्टे यत्र विवस्वतीव तिमिरं तूर्णं तिरोधीयते
सत्यं ज्ञानमनन्तमेकममलं तद्भासतो वो महः॥ १॥
औदार्यार्जवकीर्तनीयकरुणः शौर्यादिलक्ष्मीगुणः
शास्त्रार्थव्यवसायिसज्जनिपुणः श्रीभागमल्लाभिधः।
शश्वत्स्वीयसमर्हणीयचरणध्यानानुरक्तः कृती
राजासीन्निजधर्मकर्मसुदृढः प्रख्यातकीर्तिः सुधीः॥ २॥
प्रख्यातान्तस्तिमिरतरणिः पूर्वविद्याविलास-
प्रेमासक्तः सरसजनतासंस्तुतो ब्रह्मनिष्ठः।
साङ्गोपाङ्गश्रुतिकृतिपटुः स्वीयवात्सल्ययुक्तः
शान्तो दान्तः प्रभवति गुरुर्धर्मदासाभिधानः॥ ३॥

---

१. पत्रं—क

२. तत्र परब्रह्मणः स्मरणं कृत्वा कविः भागमल्लनामकं राजानं गुरुं धर्मदासं सुरतरामं हरिदासं नानकं श्रीचन्द्रं च स्मरति चिकीर्षितस्य ग्रन्थस्य निर्विघ्नेन समापनं आयतामिति बुध्या।

1. प्रारम्भिकाः सप्तश्लोकाः 'क' इति हस्तलेखे न सन्ति। एते केवलं 'ख' इति हस्तलेखे दृश्यन्ते।

अत्र द्वितीयसर्गादिविद्यमानप्रस्तावपर्यन्तं प्रथमश्लोके सरस्वत्याः वर्णनं दृश्यते। कविना तत्र प्रथमप्रस्तावस्य प्रथमश्लोके सत्यज्ञानानन्तामलरूपस्य महसो वर्णनं लोचनपथमश्नुते। तत्र कारणमिदमेव यदुदाभिमतप्रत्यारब्धस्य महाकाव्यस्य प्रारम्भे परब्रह्मणः परमैश्वर्येण भाव्यमेव।

सकले[१]कर्मसुधर्मसुनिष्ठितो
विशदबुद्धिविलासनिचेष्टितः
सुरतरामसमाख्य उदारधी-
र्जयति सन्ततमात्ममुदान्वितः ॥ ४ ॥

ज्ञानं गुह्यतमं मतित्वममलं ध्यानं तथाध्यापनं
सानन्दाध्ययनं [२]सुयोगमयनं सद्वृन्दसम्माननम् ।
संभाव्यात्मगतौ रतः समभवद्भस्माद्वृताङ्गः सदा
सिद्धश्रीहरिदासयोग्यतुलधीर्दिगम्बरीवृत्तिकृत्[1] ॥ ५ ॥

श्रीमद्बुद्धिसुधाकरः पटुतरः सर्वागमज्ञानभृद्
वेदान्तैकविचारचारुचतुरश्चैतन्यचिन्तामणिः ।
सद्वर्णाश्रमसिद्धशुद्धविलसत्साम्राज्यतत्त्वोत्सुकः
सर्वैश्वर्यसमन्वितो विजयते श्रीनानकाख्यः सुधीः ॥ ६ ॥

श्रीचन्द्रः प्रभवत्यनेकगुणवद्वन्दै[३]स्तुतः संमतः
सद्विद्याभ्यसने सदैव जनताकारुण्यकल्पद्रुमः ।
धैर्यस्थैर्यतयेप्सितस्थितिरतिस्वच्छस्वभावोर्जितः
श्रीमद्बुद्धिसमीहितप्रविमलज्ञानप्रधानप्रधीः ॥ ७ ॥

बालाख्येन पुराङ्गदं प्रतिकथा प्रोक्ता निजप्राकृत-
व्राह्मया नानकसंगी[४]तात्मविशदज्ञानाम्बुधेः श्रीगुरोः ।
गङ्गारामसुदाय सैव भवता गीर्वाणवाणीवृता
श्राव्या मे कृपयेत्युवाच नृपतिः श्रीमागमल्लाभिधः ॥ ८ ॥

---

१. सकलधर्मसुरर्म—ख.
२. सुयोगमरनं—ख । श्लोकोऽयं "क" इत्यत्र नास्ति ।
३. विद्वत्स्तुतः—ख.
४. गता—ख. ।

1. षष्ठीतत्पुरुषप्रसङ्गे पुंवद्भावो नेत्यभियुक्तोक्तेर्न पुंवद्भाव ।

श्रीशब्दाम्बुधिसम्भव[1]मतमो हृद्ज्ञानचन्द्रोदयो
विद्वद्वृन्दविवेकनैभनभवन्नोत्कर्षहर्षप्रदः ।
सच्चिद्ब्रह्मविलासिविश्वविजयप्रोल्लासिराशिप्रभु-
र्गङ्गाराम उदासिवर्यविदितः काशीप्सितस्थानकृत् ॥ ९ ॥
सोऽयं सुधीः सकलशास्त्रसमृद्धसिद्ध-
विद्याविवेकनिपुणो मुदमादधानः ।
स्वाभीष्टदेवमभिवाञ्छितभुक्ति मुक्ति
[2]साम्राज्यदं विजयते प्रणमन् प्रवीणः ॥१०॥
श्रुत्वा वचस्तदखिलप्रियमेन गङ्गा-
रामैः स्वकीयजनसौख्यदनानकीया ।
सा श्राव्यतेऽद्भुतकथा नृपभाग मल्लं[3]
[4]प्रत्यब्दसंस्कृतपदावृतवृत्तवृन्दा: ॥११॥
आदौ प्रणम्य सदय गुरुधर्मदासं
ख्यातप्रभावहरिदासदिगम्बरं च ।
श्रीचन्दसूनुसहितं गुरुनानक च
सत्सङ्गतं[5] सुरतराममुदारबुद्धिम् ॥१२॥
कलिमलिनमतीना शोधयन् मानसानि
स्वपदुदयमुपेतः शास्त्रयोनि स्वयंभूः ।
अखिरदनिपमा यो ज्ञानवैराग्यधारा
स जयति करुणाब्धिर्नानको योगिवर्यः ॥१३॥
प्रादुर्भावावधिमधुरिमोद्गारगुर्व्यः कथास्ताः
प्रस्तूयन्ते विमलयशसो नानकस्यानवद्याः ।

---

१. दृभम—ख. ।
२. साम्राज्यदो—क. ।
३ मह्यम्—क ।
४. प्रत्यब्द—क. ।
५ सङ्गता—क ।

याभिः शुद्धिं दधति मलिनाः स्वर्धुनीस्पर्धिनीभिः ।
सन्तोऽनन्तं हृदि शमसुखं कर्णकोणाङ्कताभिः ॥१४॥

[1]देश्यैः सुबोधमधुरैः परमात्मतत्त्वं
[2]वाहीकवर्गमपि बोधयताञ्जसैव ।
द्वैतान्धकारमपनीयत नानकेन
सन्दर्शितस्तनुभृतामपवर्गमार्गः ॥१५॥

धर्मिष्ठानां परमधनिनां वेदवाक्याश्रयाणां[२]
शौर्योदार्यप्रथितयशसां [3]बाहुजानां कुलेऽभूत् ।
अभ्यासक्तो विषयजसुखे शैशवात् साधुसेवी
नित्यानित्ये मनसि विमृशन्नङ्गदो[4] नामधीरः ॥१६॥

निर्विस्मेषु परं प्रसादसुमुखः संसारिपूपेक्षको[३]
नित्यं साधुसमागमैकरसिको जिज्ञासुचेताः कृती ।
प्रत्यब्दं स सहस्रशः सुकृतिभिः ससेवितो यात्रिभिः
[5]ज्वालां द्रष्टुमगादगाधजडताविध्वंसिनीं देवताम् ॥१७॥

आब्रह्मप्राणिपर्यन्तमखिलमिति यत्प्रोतमेवेहतेऽत्र
श्रौतस्मार्तप्रसिद्धप्रवचनमनसां हर्षमुल्लासयन्ती ।
कालव्यालालिमालाकुपथगतधियां दृश्यते या कराला
[४]ज्वाला काचिद्विशालाऽनलतरलकलाकोटिचिच्छक्तिरेषा ॥१८॥

---

१. न्धकार—ख., धकार—ग. । २. थयाणा—ग. ।
३. पु प्रेक्ष—क. । ४. नाला—क. ।

1. देश्य, देशे भवो देश्यो लोकभाषाविशेष ।
2. वाहीकवर्ग—वाहीको देशवासी जन । अत्र ब्राह्मणक्षत्रियवैश्येभ्य इतरो जन इत्यर्थ । पञ्चनददेशीयो जातिविशेष ।
3. बाहुज —क्षत्रिय ।
4. अङ्गद—सर्वप्रथमम् उदासिमतव्याख्याता नानकशिष्य ।
5. अरण्यमध्ये ज्वालानाम्नी देवी । या ज्वालामुखीति नाम्ना प्रथितास्ति ।

पुरोऽथ पान्थैः परितश्चलद्भिः
पद्भिः स्वयात्रिप्रवरैरनेकैः ।
अरण्यमन्यैर्विविधैर्युतं तत्
समुत्सुकान्तःकरणैः स दृष्टवान् ॥१९॥

समुन्नतस्कन्धपलाशिराशिभिः
प्रशस्तपुष्पस्तवकप्रकाशिभिः ॥
फलोल्लसत्पल्लववारितातप-
[1]स्थलैर्मनोहारि वनं विराजते ॥२०॥

आम्रातकाम्रपनसैर्लकुचैः कदम्बै-
[2]र्निम्बैरशोकधनतालतमालशालैः ॥
प्लक्षाम्लिकामलकपिप्पलजम्बुवृन्दै-
र्युक्तं समुल्लसति वत्तरुभिर्वटाद्यैः ॥२१॥

सन्मल्लिकाचम्पककुन्दबिल्वै-
र्वृन्दाज[3]पाद्यैर्बकुलैः सरम्भैः
सशोभते तद्विपिनं युतं तैः
शीतोल्लसन्मन्दसुगन्धवातैः ॥२२॥

कपोतैर्वृतं खञ्जनैः कोकिलाद्यैः
शुकैः क्वचिद्बर्हिभिर्नीलकण्ठैः ॥
क्वचिच्चञ्चरीकोल्ल[4]सत्पुष्पिताभिः
[5]श्रितं शोभते काननं तत् तमालैः ॥२३॥

---

१ पङ्क—क. ।
२. निम्बै—ख. ।
३. अपालं—क. ।
४. ल्लसित्पु—श ।
५. लताभि श्रित शोभते कानन तत—ख. ।

1 श्लोक २० स २४ यावद् वनशोभावर्णन, २५ श्लोके इरावतीतीरवर्णन तत २७ यावत् तत्रत्यस्थलवर्णन विद्यते ।

राजते परिवृतं मृगसंघैः
क्वापि खड्गगजसिंहशशाद्यैः ॥
क्रोडमर्कटगणैर्महिषोघैः
संयुतं क्वचिदलं गहनं तत् ॥२४॥

ऐरावतीविमलवारितरङ्गतीरा
स्वच्छोल्लसत्सुरभिपुष्पयुता गभीरा ॥
यत्रोल्लसत्यखिलजीवसुखप्रदैका
तत्सन्निधौ सततमाश्रमिणो जयन्ति ॥२५॥

स्थलं तदद्वैतमुनिप्रभावतो
निर्द्वन्द्वनिर्वैरितया विजृम्भते ॥
क्वचिद्विनिर्धूततमोमलैः क्वचित्
प्रबुद्धतत्त्वैर्मुनिभिर्मनोहरम् ॥२६॥

एकं पाययति स्तनं स्वतनयं व्याघ्री कुरङ्गी शिशू-
नन्यं विश्रति बभ्रुषु प्रतिदिनं प्रीतिं परां मूषिकाः ॥
यस्मिन् नृत्यति बर्हिणेऽहिनिवहो निःसम्भ्रमं वीक्षते
क्रीडन्तः करिणाङ्गणेषु कुतुकं कुर्वन्ति कण्ठीरवाः ॥२७॥

कृशैः शरीरैरकृशैस्तपोभिः
केशैः पिशङ्गैर्विशदैर्यशोभिः ।
शुद्धैर्मनोभिर्मलिनैर्विभूत्या
गात्रैश्च यत्रावसना वसन्ति ॥२८॥

धूमपैरूष्मपैरश्मकुट्टैरदो—
वृक्षलैरुञ्छजीवैः शिलाजीविभिः ॥

१. बर्हिणो—क. ।
२. कम्बीरवाः—क. ।
३. यत्रा—ख. ।

यत्र यायात्रैर्वायुतोयाशनैः
काष्ठमौनाश्रयैस्तप्यते सत्तपः ॥२९॥

स ददर्श तपोवेद्यां देवदारुतरोरधः ॥
यमिनं यमिनं मेने तपस्तीव्रेण तेजसा ॥३०॥

निबद्धपद्मासनमुन्नतोरसं
स्वनासिकान्यस्तदरोन्मिषद्दृशं
प्रसारिते जानुगते कराम्बुजे
दधानमीषत्सरलां शिरोधराम् ॥३१॥

अयं [1]किमग्निः प्रकटोऽग्निहोत्रिणां
बभूव भक्त्याचिरात्रतोषितः ॥
समष्टिरेषा नु तपस्वितेजसा-
मुपार्जितानां नियमैरनेकशः ॥३२॥

प्रसादिता मे प्रतिवर्षयात्रया
बभूव साक्षात्ररुपाकृतिः पुरः ॥
कृतार्थयन्ती किमुहेतिदेवते-
त्यमुं स दृष्ट्वा बहुधा व्यकल्पयत् ॥३३॥

त्रिसंध्यस्नानार्द्रास्तनुकनकतन्तुप्रतिभटा
जटाः शुभ्रां भूतिं धवलमुपवीतं च दधतम् ॥
निषण्णं शार्दूलत्वचि हरिणकृत्या परिवृतं
दयादृष्ट्या दैन्यं सपदि शमयन्तं द जगताम् ॥३४॥

---

१. बन्ह—स. ।
२. ह्रमया—क. ।
३. भक्ता—क. ।
४. इतिपुर—स. ।

जपावसाने श्रवणेऽक्षमालिकां
विधाय मायामयकञ्चुकोज्झितम्[1] ॥
विलोकयन्तं परितो विसृत्वरं
चिरं चिदानन्दमयं[2] निजं महः ॥३५॥

ध्यानावसानसमये स समीहमानो
बद्धाञ्जलिः स्थिरमनाः पुरतोऽवतस्थे ॥
दृष्टिः सुधोर्मिमधुरा निपपात तस्य
भक्तेषु मङ्क्षु महतां हि मनो दयार्द्रम् ॥३६॥

उन्निद्रपङ्केरुहसुन्दराभ्यां[3]
विलोचनाभ्यां शिशिरीकृतः सः ।
पुरः समित्पुष्पफलानि धृत्वा
पपात साष्टाङ्गप्रपातकेन ॥३७॥

सकुन्दशुभ्रैर्दशनैः प्रकाशयन्[4]
दिशो विमुष्णन् दुरितं दयाढ्या ॥
स्मितावदातैर्वचनैर्विशोधयन्
मनांसि लोकस्य जगाद तापसः[I] ॥३८॥

कुतः समागच्छसि भद्रकोऽसि
प्रयासि कं देशमिहागतः किम् ॥
प्रयोजनं किं हृदि धारयित्वा
धरातले धावसि यत्र तत्र ॥३९॥

इति तेन तपस्विना स पृष्टः
परमानन्दसमुद्रमध्यमग्नः ॥

---

१. कञ्चुकोज्झितं—ख. ।
२. नन्दमहो—ख. ।
३. सुन्दरा—क. ।
४. सन्—क. ।
I. श्लो० ३४ तः ३८ यावत् मुनेर्ध्यानवस्य वर्णनम् ।

मनसा कथिताखिलार्थसिद्धि-
विनयेनाननतः कृती जगाद ॥४०॥

जानन् जनस्य सकलस्य मनीषितं यत्
पृच्छस्यमु परमनुग्रह एष नान्यत् ॥
कालत्रयं कलयते हृदि सार्थजातं
तुभ्यं नमोम्यहमहो भगवान् वियातः ॥४१॥

आयामि मङ्गलद जङ्गलतः प्रदेशात्
क्षत्रप्रसूतिरहमङ्गदनामधेयः ॥
ज्वालापुरीं भगवतीमवलोकयिष्यन्
यामि स्वहार्दतिमिरावरणापनुत्यै[1] ॥४२॥

पुण्यैरनेकजनुरन्तरसङ्गृहीतै-
र्नीतो बलेन गल[2]हस्तमिहोत्सृजद्भिः ॥
धावन् वनेषु मधुने सविधे विधात्रा
क्षिप्तः सुधाम्बुनिधिरोधसि सोऽहमस्मि ॥४३॥

क्वाहं विमोहबहुलैर्ग्रहिलो विकल्पैः
क्व त्वं निरावरणतत्त्वविबोधसिन्धुः ॥
सम्भाषणात्तदपि मां शिशिरीकरोषि
वेवेक्ति कल्पविटपी नु किमुच्चनीयान् ॥४४॥

आशैशवान्मृगयते भगवन् यमर्थं
दासस्तमाकलय भृत्यकृपाविधेयः ॥
अन्त्र. कृतेषु विविधानुपपत्तिमत्सु
प्रश्नेषु हन्त परमार्थविदां न रोषः ॥४५॥

---

1. अङ्गद स्वहार्दतिमिरावरणापनुत्यै ज्ञानगमाय गत इत्यर्थः ।
2. गलहस्तम्—अर्धचन्द्रेण बलात् प्रेरितो यथा कथ्यते "विधात्राक्षिप्त" इति ।

१. तु—क. । २. दोष—क. ।

विपत्तिसंयोगवियोगदुखैर्जरामृतिव्याधिदरिद्रताभिः ।
मानापमानैर्गहनो भवोऽयं भवेन्न केनातिविपादहेतुः ॥४६॥

कामिन्य· कमलेक्षणा कलगिरो बालाः प्रभूतं धनं
निर्व्याजा· सुहृदो हया पृथुरया मत्ता महादन्तिनः ॥
सौधा· शारदचन्द्रबिम्बधवलाश्वेतोनुकूला जनाः
शल्यानीव तुदन्ति मर्मणि मृतौ दोपैर्विहस्तीकृतम्' ॥

आपातरम्ये स्फुरिते कदाचित्
सुखे हि खद्योत इवान्धकारे ॥
बाला रमन्ते कृतबुद्धयस्तु
ग्लानिं परां प्रत्युत तत्र यान्ति ॥४८॥

नमन्ति भूपाः शतशः सभायां
नदन्ति मत्ताः करिणश्चवार्याम् ॥
अकिञ्चनस्येव तथापि राज्ञः
प्राणव्ययो दुःसहदुर्दशा च ॥४९॥

शतं तुरङ्गान् विधिवत् विशस्य
शचीपतिर्योऽघ्युषितः सुधर्माम् ॥
स संहत· कर्ममहोर्मिजाले—
र्दीनः कणान् याचति यत्र तत्र ॥५०॥

पिपीलिकायाः परमेष्टिनो वा
शरीरमासाद्य भवे भ्रमन्तः ॥
राका तमत्यन्तमदुःखभाजो
न केपि मे बुद्धिमधिश्रयन्ति ॥५१॥

---

१. कृता–क. ।　　1. इतोऽङ्कदस्य मनसि प्ररूढमुदासमतामित्येतेन व्यज्यते ।
२. मुखे–र. ।　　३. वाला–क. ।　　४. सहत–क. ।
५. परमेष्ठि–ख,　　६. अधिश्रयन्ते–ख. ।

भन किमेष स्वत एव सिद्ध
कृतोथ केनापि महात्मना वा ॥
कृतेरभावान्न जडोस्य कर्ता
फलं विनान्यस्य तु न प्रवृत्तिः ॥५२॥
तस्याप्तकामस्य न कश्चिदर्थो
लीलाप्यनालस्य न तस्य योग्या ॥
किं कोशकारस्य यथैव कोशः
स्वस्यैव बन्धाय तथैव लीला ॥५३॥
निपातितो हा जगदन्धकूपे
जीवो वराको न ततः परार्थः ॥
ईशस्य कारुण्यमकारणं हि
चिरं श्रुतोयं श्रुतिडिण्डिमो[1] मे ॥५४॥
माया नटी नाथमिदं ततो नु
न मत्सरस्तत्र ममास्ति कश्चित् ॥
पात्रीकृतं यत् प्रसभमेव रण्डा
विडानयत्येप तु वज्रपातः ॥५५॥
ज्ञानेन साध्यो यदि नाम मोक्षः
स्वर्गादिवत्सादिरसावपि स्यात् ॥
सिद्धे तु तस्मिन् श्रवणादिभिः किं
श्रुतिर्व्यथा[2] हा श्रुतिरादधाति ॥५६॥
स्वमेव विस्मृत्य न मन्यतेऽन्य
कश्चित्त्रिलोक्यामयमेतदस्तु ॥
ब्रह्मातिरिक्तो न परोस्ति पूर्वं
यद स्वमन्तात्समसावपूर्वम् ॥५७॥

---

१. विडम्बयते–ब. ।
२ श्रुतिर्व्यथा–श्रुयुक्तिर्नगता सार्थकतामिति भाव ।

1. श्रुतिडिडिम–श्रयुक्ति ।
2. उभयत्रापमेव पाट ।

जीवः परं विस्मरणस्वभाव-
स्ततोधिकं विस्मरणस्वभावः ॥
उक्तः परात्मेति तत. कृते किं
यत्नेन तस्यैक्यमवाप्यते न ॥५८॥
श्रुत्यर्थं शतधा श्रुतः श्रुतिपथं गीतापि गीता बुधैः
नीता लोकपुराणशास्त्रवचनैर्ज्ञातं जगन्नश्वरम् ।
नाहंताममते गते प्रविवर्ते मोहो मुहुर्वर्धते
वैराग्यं क्व शमः क्व मोक्षपदवी दूरे क्व बोधोदयः ॥५९॥
जीर्णज्वरोयं भवनामधेयो
जहाति यावन्न जनं कुतश्चित् ॥
तापः कथं शाम्यतु तावदस्या
कथन्तरां वा रुचिरा रुचिः स्यात् ॥६०॥
परस्परं विप्रतिपत्तिमन्ति
शास्त्राणि शास्त्रेष्वपि च प्रबन्धाः ॥
अहो प्रबन्धेष्वपि बुद्धिभेदात्
विसंवदन्ते विवृतिप्रवृत्ताः[1] ॥६१॥
अलौकिके वस्तुनि वस्तुविद्भिः
शास्त्रं परं चक्षुरुदीरितं यत् ॥
तद्बुद्धिभावेन गुरोरलाभात्
गतं वितण्डाबहुलैः प्रलापैः ॥६२॥

---

१. मदितने–र. ।
२. विमर्जा = अशास्त्रीय स्वबुद्धिवाद ।
1. विवृतिप्रवृत्ताः = भेदाभेदाः विसंवदन्ते ।
३. मङ्गदस्य प्रश्नेषु निम्नलिखिता विचाराः सन्ति –
क. धामिन्यादय शल्यानीव तुदन्ति ।
ख. रात्र अकिंचनस्य च प्राणद्वय समान ।
ग. नव स्वत सिद्धोऽप्यवास्य कश्चित् कर्ता ।
घ धूर्तार्डिडिन श्रुत पर व्यर्थ इव ।
ङ. नश्वरस्य जात का सार्थकता ?
च. क्व बोधोदय ?
छ. विवदन्ते परस्पर शास्त्राणि ।

यथा रज्जौ सर्पो भ्रमविलसितो ब्रह्मणि तथा
प्रपञ्चः प्राञ्चो मे यदभिदधते तत्र विभ्रयः ॥
भ्रमो यत्र ब्रह्मण्यपि तु नियतं जीवनिलयः
कुतः पूर्वं जीवः स हि भुजगवद् भ्रान्तिरचितः ॥६३॥

वेदान्तशास्त्रार्थविचारतत्परैः
समावृतः शान्तजनैरहर्निशम् ॥
आध्यात्मिकज्ञानविधानवित् सुधीः
शिष्यं स्वकीयं स उवाच नानकः ॥६४॥

मोचयत्सुजनेष्वायुः सौम्य त्वं सुव्यवस्यसि ॥
तव चेष्टेयमाचष्टे पवित्रां भ्राक्तनीं [1]क्रियाम् ॥६५॥

विरज्यमानो निषयेषु सम्यग्
दुष्टे[2]ष्विहामुत्र विवेक सक्तः ॥
शमादिसेवी गुरुशास्त्रनिष्ठः
तरेद् भवाब्धिं भगवत्सहाय. ॥६६॥

शास्त्रैररिश्रैर्गुल्लाविकेन
नीतां प्रसन्नेश्वरसौम्यवार्ताम् ॥
आरुह्य धीनामनिम्यदुग्रैः
कर्मोर्मिभिः पारममुष्य पायात् ॥६७॥

---

1. श्लो० ६५ स ९६ पर्यन्त गुरोर्नानकस्याद्भुद प्रत्युपदेशा समन्तमायान्ति ।

१. चरित –ख.

२. ष्विहा–क. ।

रागो भवे हन्त भवे विरागः
सङ्गः सतां खल्वसतामसङ्गः ।
निरन्तरं च श्रवणादिसेवा—
विमुक्तिपुर्या[1] ग्रथितः सुपन्थाः ॥६८॥

अज्ञानजातस्य भवामयस्य
ज्ञानं विना भेषजमस्ति नान्यत् ॥
आलोक एव [२]भ्रमयन्नभस्य
न दण्ड[३]काष्ठादिरुदासहेतुः ॥६९॥

[2]अन्तर्वाणिगणा वदन्ति महितान् शास्त्रेष्वुपायान् बहून्
मोक्षार्थं[४] गुरुमाश्रितोऽनुभवति प्रध्वस्तमोहान्वयम् ॥
विक्रीणन्ति महौषधीर्हि वणिजः सामान्यतस्तद्गुणान्
जानन्तोऽपि कृतक्रियास्सु[४]भिषजो गच्छन्ति नीरोगताम् ॥७०॥

उपेयबोधाय भवन्त्युपाया
व्यवस्थितत्वेन हठोऽस्ति तेषाम् ॥
गन्तव्यदेशं पथिभिर्विचित्रै—
र्यान्ति गच्छन्ति जना यथेच्छम् ॥७१॥

यत् सच्चित् स्वप्रकाशं विमलमविकृतं देशकालाद्यमे[५]यं
बोधानन्दाद्वितीयं निगमपथजुषां ब्रह्म तन्निर्विकल्पम् ॥
मायामूले प्रपञ्चे विमतिरविततरां स्वस्वबुद्ध्या हि तस्मिन्
संवादः कुत्र तेषां ननु परिभिमते मार्गतृष्णा[६] पयो ये ॥७२॥

१. न्या–क. । २. भ्रमय–क. । ३. दंडकाष्टा–क.
४. सभि–क. । ५. यमे–क. । ६. पयोधे–क. ।
1. "पुर्या" इत्येव पाठो वर्तते कवेरप्युसयत्र ।
2. अन्तः = अन्तःकरणे, वाणी = शास्त्रविहिता वाक् यस्य सः शास्त्रविद् शास्त्रज्ञ इत्यर्थः ॥

ब्रह्मास्मीत्यपरोक्षबोधजनितो मोक्षः सशोकक्षतिः
ब्रह्मात्मिश्च सबोधजौपनिषदो वेदाविरुद्ध. परः ॥
शोकस्य भ्रमजस्य या परिहृतिर्लोभश्च यो ब्रह्मणः
सिद्धस्याप्युभयस्य साधनमिदं नोनर्थकं लोकवत् ॥७३॥

अनिर्वाच्यानादिः प्रकृतिरिति मायेति गदिता
परेशे साऽविद्या भवति बहुधा जीवनिलया ॥
तयाविष्टो जीवः कलयति परब्रह्मणि जगन्न-
संस्कारा जीवान् जहति किल कल्पेऽपि तनवः ॥७४॥

पूर्वपूर्वभववासनावशा-
दुच्चरोच्चजनुः प्रपद्यते ॥
जीव एष करुणाकरस्तु त-
न्मुक्तये कथयति श्रुतिस्मृतीः ॥७५॥

जीवादृष्टानुरोधाद्यं विषमो ननु निर्घृणः ॥
भृत्यसेवानुसारेण दातेव परवान्न च ॥७६॥

अयि मायया किमपराद्धमीश्वरे
ननु जीववर्गनतनार्थवृत्तया ।
प्रतिबिम्बितो धुनिरविर्मलीमसः
तरलश्च तेन किममीषुमालिनः ॥७७॥

स्वप्ने शिरश्छेदमवाप्तितोऽपि
स्वप्ने यथा जागरणे समानः ।
तथापरं बुद्धिविपर्ययोऽस्य
न वास्तवः कोपि विकारलेशः ॥७८॥

---

१. नन–ष. । २. मिथ–श. । ३. दैवाविला–ख. ।
४. नद–क. । ५. पवान च–च. ।
६. नाद्यङ्–ख. । ७. नार–घ. ।

निद्रानिवृत्तौ यतनीयमस्य
न स्वप्नशोकस्य[1] निवर्तनाय ॥
निवृत्तनिद्रः स्वयमेव बोद्धा—
न निद्रितः[2] श्रोष्यति वो वचांसि ॥७९॥
मदेन सन्निपातेन भूतावेशेन निद्रया ॥
उन्मादेन च रागेण स्वमन्यं[3] मन्यते जनः ॥८०॥
अनन्यभक्त्या भवमोचनस्य
निष्कामसत्कर्मविशुद्धचित्तः ॥
विरागमासाद्य जगत्यहृद्ये[4]
हृद्यैवदेवं[5] सुलभं लभस्व ॥८१॥
अध्यारोपापवादौ श्रुतिषु निगदितौ
ब्रह्मणो बोधनार्थम्,
माया तस्मिन् विवर्तो जगदिदमखिलं
जीवभावश्च तस्य ।
नाशो बोद्धुं समर्थः कथमपि हि विना,
यं च कोशादिशैलीम्[6],
ज्ञाने सत्येष मर्त्यं स्वयमिह मनुते
ब्रह्म सर्वं न चान्यत् ॥८२॥
चि[1]दंशमादाय विहाय चान्य-
मुपाधिमन्तः करणान्यविद्याम् ।
सदैव सोम्ये निजगाद वेद
तस्यावदत्तत्वमसीत्यभेदम् ॥८३॥

---

१. स्वमशोक—ख. ।  २. वाश्च—ख. ।  ३. स्वमप—क ।
४. त्य—क
५. वदेतं—क
६. वैशादि—क
1. वेदान्तशास्त्रस्यैवोदाहिमतप्रपञ्च समक्षमायाति ।

न ब्रह्मणो विस्मरणं स्मृतिर्वा
बोधोदयस्तज्ज्ञनिहानिहीनः ॥
मायानिलाज्जीवतरङ्गराजि-
र्विचारिता सापि ततो न भिन्ना ॥ ८४ ॥

वासनातंतुमातत्य कोशकार इवाविशत् ॥
जीवो ब्रह्म सदप्यत्र व्योमेव दुरवग्रहम् ॥ ८५ ॥

अपरोक्षब्रह्मज्ञाणो यदन्ति यस्मै स याति भवपारम् ॥
गुरुशिष्यव्यवहारो गड्डलिकानां प्रवाह इव नान्यः ॥८६॥

अमात्यवश्यो राजेव स्त्रीवश्यश्च पुमानिव ॥
अन्तःकरणतादात्म्याज्जीवो याति विडम्बनाम् ॥ ८७ ॥

न देहेन्द्रियप्राणबुद्ध्यादिरूपः
सदानन्दचैतन्यबोधोऽहमात्मा ॥
इदं बाल्यपाण्डित्यमौनैर्व्यवस्थे-
त्तटस्थो न दूये न चारब्धभोगे ॥ ८८ ॥

अहं निराकारनिदेव साधो
तत्रात्र लोकानुभवप्रमाणः ॥
प्रारब्धशेषेण धृतं शरीरं
तस्मिन्नहन्ताममते गते मे ॥ ८९ ॥

स्वाप्ने शरीरे सुखदुःखभोगं
जानन् यथा जागरितो न तेन ॥

१. वासनान्त—ग वासनां तामित्यपि पाठ· "ब" इत्यत्र ।
२. नान्यः—ब
३. तटस्थो—क
४. त—क

हर्षेण शोकेन च युज्यते हि
ज्ञाने तथाऽज्ञानदशो प्रपञ्चम् ॥ ९० ॥

प्रत्यक् परानन्दमयो महेशो
विभुर्विभाति श्रुतिगीतकीर्तिः ॥
दृश्यं जगद् सर्वमिदं मृषैव
द्विचन्द्रगन्धर्वपुरीसमानम्[1] ॥ ९१ ॥

सुखस्य[2] लाभान्मुदितः प्रतीचः
प्रारब्धनिक्षिप्तशरीरयात्रः ॥
पश्यन् प्रबुद्धो[3] जगदिन्द्रजालं
न द्वेष्टि नाकाङ्क्षति नो बिभेति ॥ ९२ ॥

स्वयमविक्ततो भिन्नाभिन्नं बहु दर्शयन्
कुतुकमतुलं मायी लोके यथा खलु खेलति ॥
सृजति सकलं स्वस्मिन् स्वेनानुविद्धमसङ्गतं
तदपि महतां मायालीलामुपेत्य तथा प्रभुः ॥ ९३ ॥

शास्त्रं गुरुश्च गोविन्दस्त्रयो हि त्रिगुणात्मिकाम् ।
मायां निर्धूय धन्यस्य दिशंति श्रियमद्वयाम्[2] ॥ ९४ ॥

महेश्वरान्नान्तरमस्ति किञ्चि-
त्तथापि हार्दस्य[4] पदं स एव ॥
यद्यप्यतीतोऽसि विधिं निषेध
शास्त्रं तव स्यात्तदपि प्रमाणम् ॥ ९५ ॥

विनयेन तस्य परमं प्रसेदिवा-
नथ नानको गुरुरुवाच तं पुनः ॥
उपकार एष सहसेवया गुरो-
र्वचनस्य यत्तु परिपालनं सदा ॥ ९६ ॥

---

१. दशा—क  २. सखस्य—क.  ३. बुद्धे—ख  ४. प्रदि—क.

I. तदिद सर्वं जगत् द्विचन्द्रदर्शनवत्, गन्धर्वपुरीवद्वा भ्रान्तमेवेत्यर्थं ।

2. शास्त्र, गुरु गोविन्दश्च माया निर्धूय धन्यस्याद्वया श्रिय दिशन्ति ।

इत्थं स शिष्यमनुशिष्य कियद्दिनानि
तस्थौ[1] गृहीतवचनः शिरसा नतेन ॥
संसेवितो नियतवाङ्मनमेन नित्य-
मीशात्पृथक् परमतो हि मतो नतेन ॥ ९७ ॥

अथैकदा नानकपारिकाङ्क्षी
यदृच्छयोत्थाय गतः कुतश्चित् ॥
देहे यतीनां ममता यतो नो
शिष्ये कुतः कुत्र कुटीकटादौ ॥ ९८ ॥

अङ्गदस्तु परिहीणमाश्रम तेन देवतरुणेव सागरम् ॥
चुक्षुभे स यदि वीक्ष्य बाधते ज्ञानिनोऽपि विरहः सतां खलु ॥ ९९ ॥

एते चञ्चलचेतसा किमु मया यत्नेन नोपासिताः
सङ्गाद्भिस्यति साधवस्तदथवा तूर्णीं क्वचिन्निर्गताः ॥
तत्सान्निध्यसुखं ददातु यदि वा दैवं क्व मे दुर्बल
चिन्तामित्यकरोत् गुरोर्गुणगणात् संस्मृत्य संस्मृत्य सः ॥१००॥

विलोकितं तस्य दयारसोक्षितं
वचांसि वैराग्यकराणि शृण्वताम् ॥
वपुः कृतार्थी करमाशु पश्यतां
स्मरन् स तीर्थेषु[2] निनाय वासरान् ॥१०१॥

पश्यन्ननेकनगराश्रमतीर्थसाधून्
सिद्धोऽपि सद्गुरुवियोगविषण्णचेताः ॥
आत्मानमप्रकटयन् विगतैषणत्वाद्
ग्रामेऽवसत् पङ्कर इत्यभिधानभाजि ॥१०२॥

---

१. तस्या—क.  २. सतीर्थ्येषु—ख.

तत्र स्थितः स गुरुनानकजन्मकर्म
श्रोतुं समुत्सुकमतिः कृतकृत्यताकृत् ॥
प्रत्यक्षदृष्टतदशेषचरित्रचित्र-
मन्विच्छति स्म पुरुषं स्वमनोनुकूलम् ॥१०३॥

कौपीनधारी धृतकालकम्बल-
स्तुम्बीधरः[१] श्वेतशिरोरुहो वशी ॥
अत्रान्तरेऽन्विष्य चिराय तापस-
स्तमभ्यगात् कोऽपि विरक्तिभूषणः ॥१०४॥

प्रवेशितो मर्मविदाय केन
चित्योघनत्वादनिगूहनाकृतिः[२] ॥
फलानि पुष्पाणि निवेद्य पादयो
ननाम भक्त्या स विनिद्रलोचनः ॥१०५॥

विनीतवेषं विषयैरबद्धं
तृणीकृताशेषजगद्विभूतिम् ॥
समाजयामास तदाङ्गदोऽमुं
पप्रच्छ च स्थानकुलाभिधानम् ॥१०६॥

सोऽवदत् 'तलवंडीति[1] नगरी भुवि विश्रुता ।
चन्द्रभानोः[2] सुतस्तस्यां वालसिन्धु[3]रहं विभो ॥१०७॥

वर्णं चतुर्थमपि मामकरोत्कृतार्थं
चित्रं बलेन गुरुनानकबालमैत्री ॥
स्पर्शोपलव्यतिकरेण विधेर्विलासा-
ल्लोहानि हन्त कलयन्ति सुवर्णभावम् ॥१०८॥

---

१. तुम्बी—क  २. कृतो—ख.

1. तलवंडी = ग्रामः, नानकस्य जन्मभूमिः ।
2. चन्द्रभानुः = वालसिन्धोः पिता ।
3. बालसिन्धु. = नानकशिष्यः ।

वैकुण्ठवास इव विश्वमये न शून्ये
सङ्गे सतो मम वयो गतमेतदस्य ॥
केनापि दुर्विलसितेन विधेरिदानीं
सीदामि तस्य विरहेण विदूयमानः ॥१०९॥

श्रुत्वा भवं तमधिरोपितमासने स्वे
निर्धूतमोहगहनं गुरुनानकेन ॥
'तस्यावलोकनसुखं समवाप्तकाम-
स्त्वामागतोऽस्मि सुचिरेण विचिन्त्य सोऽहम् ॥११०॥

इत्यङ्गदस्तस्य वचो निशम्य
प्रसादविस्फारितनेत्रपद्मः ॥
उत्थाय तं सादरमालिलिङ्ग
जगाद च स्वागतपूर्वमेतत् ॥१११॥

अवग्रहे वृष्टिरियं प्रथीयसी
सुवर्णकुम्भाधिगतिर्दरिद्रतः ॥
उदीर्णदाहस्य सुधारसच्छटा
ममातिदूनस्य तवाद्य सङ्गतिः ॥११२॥

गुरोः पदाम्भोरुहदर्शनोत्सवै-
रवाप्त एवाहमवार्यरंहसा ॥
वियोजितो दुश्चरितेन केनचित्
न जातु विन्दामि भुवि भ्रमन् रतिम् ॥११३॥

---

१. सता—क
२. य—क
३. समवास—क
४. इत्यंगद—क
५. संगति—क
1. गुरुनानकावलोकनसुखं समवाप्तकामोऽङ्गदः स्व कृतकृत्यं मेने ।

तदद्य मां जीवय जन्मनः कथा
गुरोर्मदीयस्य वदन् प्रथीयसीः ॥
समग्रमालोकितवान्भवानहो
त्वमद्य दैवेन हि दत्तसन्निधिः ॥११४॥

न तत्पदाम्भोरुहरक्तचित्तयो-
र्विनोदिनी केवलमावयोः कथा ॥
अमङ्गले मङ्गलमिच्छतां भवे
भवेदियं कामदुघेव[1] कामदा ॥११५॥

आतिथ्यं विधिवदुपेत्य बालसिन्धुः
स्वस्थात्मा मृदुनि महासने[2] निषण्णः ॥
सिद्धानामथ गृहमेधिनां समाजे
प्रारेभे कथयितुमद्भुताः कथास्ताः ॥११६॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
बालसिन्ध्वङ्गदसमागमो नाम प्रथमः प्रस्तावः

—:०:—

१. दुघेव—क० ख० इत्यत्र 'दुघेव' इति पाठः ।
२. महानसे—क० ।

## अथ द्वितीयः प्रस्तावः

स्तुता देवेन्द्राद्यैः धवलकमलस्थासनगता
लिपिन्याहारादिव्यवहृतिविधानैकशरणा ॥
सदा श्रीवागीशा निजजनमनोभीष्टफलदा
जयत्येषा देवी जगति निखिलानन्दजयदा[1] ॥ १ ॥

इरावती नाम च चन्द्रभागा
नद्यौ पुराणप्रथिते पृथिव्याम्[2] ॥
ययोस्तरङ्गैस्तरलैरजस्रं
सञ्जायते चामरवीजनश्रीः ॥ २ ॥

मध्ये तयोर्जनपदो बहुशस्यशाली
शालीक्षुमिष्टफलवृक्षवनैरनूनः ॥
सौराज्ययुग् "जयतिवार"[I] इति प्रसिद्धः
सिद्धस्थलं वरतुरङ्गमजन्मभूमिः ॥ ३ ॥

संसेविताः प्रतिगृहं परमातिथेयैः
यस्मिन् प्रवासजिपदं[3] न विदन्ति पान्थाः ॥
सौहार्दहृद्यचरितैरनुबध्यमाना
लोकैः[4] कुटुम्बमखिलं न खलु स्मरन्ति ॥ ४ ॥

---

१. पङ्कुरा—ख० ।

२. पृथिवे प्रथिव्य—ख० ।

३ प्रवासविवदन्ति—क० ।

४. लोके—क० ।

I. "जयतिवार" जैतवार इति प्रसिद्धो ग्राम । द्वितीयप्रस्तावतो प्रभृति ध्यान सर्वत्रैव प्रारम्भभूमौ सरस्वत्या वन्दन कृतमस्ति कविना ।

[1]दुर्गैर्युतो बहुविधैर्नितरां निरीतिः
सत्सेतुबन्धसरसीरमणीयमार्गः ।
यः सार्थवाहशिविरे श्रमनोदनार्थे
छायां बिभर्ति नगरस्य महावनेऽपि[1] ॥ ५ ॥

स्त्रीपुंसकान्तिपरिभूतरतिस्मरोघ-
शश्वत्समिक्ष इति दुर्लभभिक्षवर्गः ।
नीरोगता विफलवैद्यगणोऽपि यस्मिन्
सर्वज्ञतार्थपरिशीलितवैद्यविद्या. ॥ ६ ॥

शब्दार्थरत्ननिमन्यजनैर्दुरापा-
मानन्दभूमिमभितो विगतत्रितापाः ।
आब्रह्मबुद्धिविभवैकविधिप्रधाना
यत्रोत्तमा ब्रुवति शान्तपदं दधानाः ॥ ७ ॥

सनिगमागमगीतसरस्वती
वसुमती सुमती हि जनस्थितिः ।
जयति यत्र सुवर्त्मनतोन्नता
परिवृता सरसा सरसान्विता ॥ ८ ॥

उपवने पवनेषु समुल्लसत्
किशलयोज्ज्वलपुष्पफलैर्वृते ।
समुदिते मुदिते ऽप्यनृभिर्कृते[2]
जनपदस्य हितस्य शमेधवि[3] ॥ ९ ॥

---

१. दुर्ग—क० ।

२. नृभि हृते—क

३. शमेधते—क

1. श्लो० ३ तः ११ यावत् 'जयतिवार' स्थलवर्णन नितरां ललितं कृतमस्ति कविना । अत्रैव स्थले तलवण्डी नाम्नी नगरी यत्र नानकोऽजायत ।

सर्वर्तुसम्प्राप्तसदुत्सवाढ्यै-[1]
स्सौजन्यजन्यैर्जनताजंवाद्यैः ॥
सौंदर्यदर्यो[2]द्धुतकुञ्जपुञ्जै-
र्वीराभिधस्तत्रश्रुतो विभाति ॥ १० ॥

क्षीरच्छलादमृतमेव किरन्ति गावो
यस्मिन् चरन्ति सुरशाखिधुरां वदान्याः ॥
देवा इवोज्वलरुचः प्रमदाः पुमान्सः
स्वर्गस्य यः प्रतिनिधिर्विधिना न्यधायि ॥ ११ ॥

पञ्चभिः कुलकम् ॥

तस्मिन् विस्मितविश्वकर्मधिषणा विश्वस्य सारः परं
सम्बाधं सरवर्त्मसम्भिदधती सौधैः सुधांशूज्वलैः ॥
प्राकारेण परिष्कृतातिमहता धाराधरान् रुन्धता
विख्याता [1]तलवण्डिकेति नगरी जागर्ति सर्वार्तिहृत् ॥ १२ ॥

[2]अनेकवर्णोज्वलसन्नशोभा
वर्णैश्चतुर्भिः परिशोभितापि ॥
अष्टापदाकारसदापणापि
नानाप्रतिच्छन्यमहानिपद्या ॥ १३ ॥

नानादेशजनैर्युता बहुवणिङ्नीतैः[3] सुभाण्डैश्रिता
दिव्यैर्गायकनर्तकैरनुगता सच्छिल्पिसंघैः श्रिताः ॥
दैवज्ञैः कविकोविदैर्गुणिगणैर्भूयश्च वैद्यैर्वृता
दृष्टा योगकलेन विश्वकुतुकं[4] लोकाय या कल्पते ॥ १४ ॥

---

१. दुत्सवामै–क. । २. दर्पा—ख. ।
३. न्नीतैः–क०
४. कुतका–क०
1. तलवंडिका नगरी स्वर्गस्य प्रतिनिधिर्यत्र जन्मापहीनानकः ।
2. विरोधाभासेन ग्रामवर्णनं प्रारभते कवियंत्र जातिगतभेदभावाभावः ।

जुह्वानाज्ज्वलनं श्रुतिस्मृतिविदः सन्तोषशीलाद्विजा
राजन्या बहुजन्यजन्ययशसा ख्याताः प्रजारक्षिणः ॥
वार्तायां कुशलाविशः प्रमुदिता देवद्विजाराधने
¹शूद्रा यत्र भजन्ति भव्यचरिता वर्णत्रयं निर्मदाः ॥ १५ ॥

राका शारदशीतरश्मिवदनाः सम्फुल्लपद्मेक्षणा
विद्युत् गौररुचोगुरुस्तनभरास्ताम्रुष्टिमेयोदराः ॥
वीणा वल्गुगिरो गजेन्द्रगमनाः शृङ्गारसारश्रियः
प्रत्यक्षानि वसन्ति यत्र दयिताः कामास्त्रदेव्यः किमु ॥ १६ ॥

जितेन्द्रिया दीनजने दयालवो
यशोर्थिनो धर्मधनाः सुनीतयः ॥
वसन्ति यस्यां परमार्थदर्शिनः
सहस्रशः सत्पुरुषा महाकुलाः ॥ १७ ॥

षड्भिः कुलकम् ॥

तस्यां वंशो वेदिनां क्षत्रियाणा-
मास्तेयावत्सृष्टिशुद्धः² प्रसिद्धः ॥
श्रेणी गुण्या मौक्तिकानामिवासी-
त्तस्मात्पुंसां सा सभा भूषणानाम् ॥ १८ ॥

कलावपि ध्वस्तसमस्तधर्मे
न वेदमार्गात्प्रचलंति किञ्चित् ॥
ते क्षत्रियास्तेन गताः प्रसिद्धिं
स्वकर्मणावेदिन³ इत्युदाराम् ॥ १९ ॥

---

१. निर्मलाः—क०
२. शुद्धः—क०
३. मेदिन—क०
1. शूद्रा यत्र वर्णत्रयं भजन्ति—वर्णत्रयसेवातत्पराः सन्तो वसन्तीत्यर्थः ।

धावद्भिर्विषयग्रहाय सततं संक्षोभयद्भिर्मनः
कश्चित्कालमनिग्रहेण[1] वलिभिः पातप्रदैस्तत्क्षणम् ॥
योगानाचरता सदैव सुजयैर्योगैर्न तृप्तिं गतै-
र्वंशेऽस्मिन्बहवो न्यभूवुरजिता पक्षैर्विपक्षैस्तथा ॥ २० ॥

वेदी यत्र किल ज्वलत्यतिमहाः संग्रामवेदीगतः[2]
संस्कारं विधिवद्द्विजैर्दहनवन्नीतो युतो हेतिभिः ॥
हूयंते यवनास्तनीयसमिधः स्नेहैः खलानां भृता-
स्तत्र स्वास्थ्यमुपैति शान्तिकरणाङ्को विप्रसत्संहतिः॥ २१ ॥

क्रुद्धा शत्रुषु संयुगे यशसि ते लुब्धाः परंपातका-
द्भीता भूसुरपादयोर्नतिजुषो गृण्वन्ति वक्रं धनुः ॥
किञ्चैकं शरणागतं विजहति द्रव्यं वदान्योत्तमाः
सद्गृह्णन्ति चिराय केवलमहो धर्मे स्वकर्मस्थिराः ॥ २२ ॥

तस्मिन्कुले पुरुषरत्नखनौ बभूव
वाराणसी यतिरिति प्रथितो महौजाः ॥
तस्मादजायत सतः शिवरामभक्त-
कुन्देन्दुनिर्मलयशाः [1]शिवरामवर्मा ॥ २३ ॥

जातस्ततस्तलमतिर्मतिमद्भिरीड्यः
[2]कालो जगत्यभिधयाप यशोवलक्ष ॥
ओजस्वितां हि सहजामपि बाहुजस्य
सत्त्वाधिकः स विजहौ विनतस्वभावः ॥ २४ ॥

---

१. मतिपहेण—क० ।
२. वेदीं गत —क० ।
1. शिवरामवर्मा शिवरामभक्तोऽभून् ।
2 शिवरामपुत्र काल ।

दम्भप्रधानसकलाचरणेऽनृतेन
संमिश्रिते विरसमेव हि लोकतन्त्रे ॥
आशैशवात्सुजनसङ्गरतिर्नितान्तं
नारायणे प्रणिदधौ स मनो मनस्वी ॥ २५ ॥

क्षत्रस्य कर्मपरराज्यधनापहार-
हिंसामलीमसमुपेक्ष्य विरज्यमानः ॥
[1]ग्रामाल्लिलेख कतिचिचलवंटिकाया
राज्ञा[1] सुबन्धुरिव सप्रणयेन बद्धः ॥ २६ ॥

साध्वी शिरोमणिरभून्ललनागुणाना-
मेकाश्रयः कुलवती सुभगास्य भार्या ॥
तौ दम्पती न विषयेष्वतिसक्तचित्ता-
वाचेरतुश्चिरतरं[2] गृहमेधिधर्मान् ॥ २७ ॥

कालादजायत चहोर्दुहिताथ काला-
द्गौरी यथा हिमवतः कमनीयकान्तिः ॥
सा नानकीति कथिता प्रथिता गुणौघै-
पित्रोः प्रसादमतनोदजनुं सुशीला[2] ॥ २८ ॥

काले गते कतिपयेऽथ तयोरकस्मा-
त्स्त्रीपुंसयोर्मनसि वासनया बभूवे ॥
स्यादावयोरदितिकश्यपयोरुपेन्द्रः
स्यातो यथैव तनयो विनयोपपन्नः ॥ २९ ॥

सिद्धैर्द्विजैरभिहितान्नियमाननेका-
नाचेरतुस्तदवधिव्रतदानयज्ञान् ॥

---

१. राज –क० ।
२. जर–क० ।
1 लेखपाल समजायत । 2. नानकीति वाल्पुरी ।

दीनाननाथविकलानवधूतनग्रा-
नन्नैःशुभैस्ततृपतु. स्वसमीहिताय ॥ ३० ॥

तौ कायवाग्घृदयभक्तिपरावभाक्तां
नारायणं सकलवाञ्छितकल्पवृक्षम् ॥
नानाजन्तुर्जनितपुण्यविपाकसाध्वी
सेवास्य साधयति नाम हि क न कामम् ॥ ३१ ॥

ग्लानिं निशम्य सुकृतस्य कृवामधीभिः
पाखण्डिभिः स्वमतिनद्धमतैरशास्त्रैः ॥
अंशं स्वकीयमवतारयितुं नृलोके
तौ निश्चिकाय पितरौ हरिरात्मभक्तौ ॥ ३२ ॥

भक्तेष्टसाधनविधौ निभृतव्रतस्य
मन्तव्यमद्भुतमिदं न जनार्दनस्य ॥
एवंविधा कतिनतस्य यशोविमिश्रा
गाथाः पुराणगणिताः कवयो गृणन्ति ॥ ३३ ॥

पत्युर्हर्षोत्कर्षहेतुः सखीनां
नेत्रानन्दं चन्द्रिकेवार्पयन्ती ॥
आशावल्लीं वर्द्धयन्त्याश्रितानां-
मन्तर्वत्नी कालपत्नी बभूव ॥ ३४ ॥

आपन्नसत्वा परमस्य पुंसः
सा तेजसा कुक्षिगतेन रम्या ॥
अभूदधृष्या सकलान्तराये
विदिद्युते चाप्रतिमप्रभाभिः ॥ ३५ ॥

---

१. नम्नै—क० । २. जन—क० ।
३. खाखण्डभि—ख० । ४. गणति—क० ।

स्वप्ने सुरैर्गगनवर्तिभिरर्च्यमानं
संस्तूयमानमृषिभिः स्वमहो ददर्श ॥
सा जागरेकमपि सारमिवोद्वहन्तं
विश्वाधिकं समधिगम्य विसिस्मियेच ॥ ३६ ॥

पथ्येषु सौम्यमधुरेषु हविष्यमेध्ये
स्वाहार्यवस्तुषु दधार रतिं सुशीला ॥
सा शृण्वती विरतिभाक् खलु विश्ववार्ता-
माश्वासमौपनिषदीषु कथासु लेभे ॥ ३७ ॥

[1]पाण्डिम्ना परिशोभिता विदधती दीप्त्यातमिस्रक्षतिं
जीवं जीवकुलैरिवाश्रितगणैराश्रीयमाणा निशम् ॥
प्राचीवोदयदिन्दुमण्डलपुरः प्रोत्सर्पिचन्द्रातपा
तापं सापहरन्त्यतीव नयनानन्दं जनस्यातनोत् ॥ ३८ ॥

प्ररूढगर्भश्रमचारुलोचना
समुन्नमद्दक्षिणकुक्षिमण्डला ॥
सुतार्थिनं भावमनन्दयत्प्रिया
ह्रिया तिरश्चीनमुखी विलोकिता ॥ ३९ ॥

गर्भश्रमेण सकलाभरणानि हित्वा
तन्वी स्थितापि सुषमां न कथं दधातु ॥
त्रैलोक्यभूषणमणेरुदयस्थितेन
सैवैव भूषितमभून्महसाद्भुतेन ॥ ४० ॥

---

१. विसिस्मिये—क०    २. सौम्य–क० ।
३. सुषया—क    ४. पर्यंक–क० ।
1. श्लो० ३७ त- ४१ यावत् अन्तर्वत्न्या वर्णनम् ।

उपप्लुतिकाभिरतिसाधुबुद्धिभि-
विविधोपचारचतुराभिरावृताम् ॥
प्रसवोन्मुखीं सुसमये समीक्ष्य तां
मुमुदे स वेदिकुलवर्द्धनो भृशम् ॥ ४१ ॥

आकस्मिके सर्वजगत्प्रसादे
शंखादिशब्देषु सुमङ्गलेषु ॥
असूत साध्वीसुतमुत्तमं सा
तमोहरं ज्ञानमिवात्मचिन्ता ॥ ४२ ॥

अलौकिकं सौरभमुद्गिरन्तो[१]
ववुः शनैः स्पर्शसुखाः समीराः ॥
नयध्वनिर्व्योम्नि बभूव तारः
पपात पुष्पप्रकरोऽप्युदारः ॥ ४३ ॥

अरिष्टदीपास्तनयस्य धाम्ना-
मम्लुर्यथा धामनिधावुदीते ॥
[2]जाताः समन्तादुपप्लुतिकास्ता-
श्चित्रार्पिताश्चित्रमिदं विलोक्य ॥ ४४ ॥

ममोऽपि 'हर्षाम्बुनिधौ ममज्ज
सचैलमाश्वम्भसि कालवर्मा ॥
[3]विधाय वृत्तिं विधिवत्पितॄणां
नान्दीमुखानामनृणो बभूव ॥ ४५ ॥

---

१. पर्योद्गिरन्तो—क० ।
1. तुलना–"वाता ववुः स्पर्शसुखामनोज्ञा."–बुद्धचरित. १।१२ ।
2. श्लो० ४३, ४४ इत्यत्र प्रकृतेः प्रसन्नतावर्णनम् ।
3. श्लो० ४५ आ ५१ पर्यन्तं कालस्य प्रीत्यं बालस्य जातकर्मादिवर्णनम् ।

उद्दाममङ्गलमृदङ्गनिनादरम्यं
गीतं पुरन्ध्रिनिवहेन ततः प्रणीतम् ॥
शृण्वन् समूरिपु कृतावलिजातकर्म[१]
पाकोद्विलैरभिहितोऽकृत जातकर्म ॥ ४६ ॥

वर्धस्व दिष्ट्या तनयोद्भवेने-
त्युदीर्य वस्त्राभरणानि भृत्याः ॥
प्रसह्य जहुर्नच वेदिवर्यः
किञ्चिचदाऽदेयममन्यत स्वम् ॥ ४७ ॥

विधाय मेधाजननादिकर्म
बालं विनालं जनको विलोक्य ॥
सुवर्णवसांसि पयस्विनीर्गा-
र्ददौ द्विजेभ्यो मुदितो नितान्तम्[1] ॥ ४८ ॥

न केवलं तस्य महोत्सवोभू-
दजस्रमावादितपंचवाद्यः ॥
सुजन्मना तेन कृतप्रहर्षा
सबालवृद्धा तलवंडिकैव ॥ ४९ ॥

स सप्तधान्यैर्बलिभिर्विचित्रै-
र्विधाय तृप्तिं खलु योगिनीनाम् ॥
उत्खातखड्गैर्निशि रक्षितायां-
पष्ठ्यां जजागार पुरन्ध्रिवर्यः ॥ ५० ॥

---

१. ज्ञातकर्म—क० ।
२. मनन्यतस्यं—क० ।
३. हविप्र—क० ।
1. अत्रत्यवर्णनम् अश्वघोषप्रणीतस्य भगवतो बुद्धस्य जन्मवर्णनेन सह सान्दमेदने ।

आहूय बन्धून् गणकान् बुधांश्च
संपूज्य गौरीं गणनायकं च ॥
स द्वादशेऽह्न्यकरोत्सुतस्य
नामप्रसिद्धं जगतीतले यत् ॥ ५१ ॥
बालं विलोक्यात्मदृशा द्विजेन[1]
केनाप्यहो नानक इत्यकस्मात् ॥
अवादि कालोऽपि विशेषवृद्धि-
स्तदेव नामानुमतश्चकार ॥ ५२ ॥
[1]नास्त्यकं दुःखमेतस्येत्यनको नापरः पुमान्[2]॥
इति बुध्वा हि विप्रेण तत्त्वज्ञेन[3] तदीरितम् ॥ ५३ ॥
कालस्ततः कुलनमस्यितमारभन्तं
दैवज्ञशास्त्रपरपारगतं कृतज्ञम् ॥
मिथ्रं नतो [2]हरिदयालुमुवाच विद्वन्
बालस्य वर्णय कथं ननु जन्मकालः ॥ ५४ ॥
सोऽब्रूत सौम्य शृणु जन्म मम प्रमत्तो
निर्णीतवाँस्तदुपसूतिकया च लक्ष्म्या ॥
चिह्नैर्दृढीकृतमथोक्तमहो कुमाराः
के के मया विजनिता न परं त्ववेहि ॥ ५५ ॥
बालोऽयमद्भुतगतिर्जनितो जहास
त्रासाकुलः कुलवधूनिनदो जगाद ॥

१. द्विजेन—क०
२. नाऽस्यकं—क०
३. न तत्त्वज्ञेन—क०
1. ना अर्थात् नर अनक इव।
न + अक दु खमेतस्येत्यनको नानकः मुनाद् दु नाथव महिमेन इत्यर्थः।
2. हरिदयालुविद्वान् ज्योतिर्विद्।
१

उत्पात एव उत वंशविवर्धनःस्या-
द्विप्रं वहुज्ञमिति पृच्छतु शीघ्रमेव ॥ ५६ ॥
जानाम्यहं तु सुभगं कथनेन किं नु
साक्षाद्विलोकयसि किं न तवापि गोप्यः ॥

उक्त्वेति[1] वस्त्रपिहितः स हि शीतभीत्या
मंन्यं नवो[2] मणिरिवानवमो न्यदर्शि ॥ ५७ ॥
सोऽहं निरूप्य सकलानि सुलक्षणानि
गच्छेति तामचकथं ग्रहसंस्थितिज्ञः ॥
सामुद्रिकाद् यदिह जातकतश्च दृष्टं
तद्वो ब्रवीमि तरणेश्चरणौ प्रणम्य ॥ ५८ ॥
ललाटमर्द्धेन्दुनिभं सुतुङ्गं
नासोन्नता भ्रूयुगलं विभक्तम् ॥
लाक्षारुणान्ते नयने विशाले
ग्रीवास्य कम्बुप्रतिमा विभाति ॥ ५९ ॥
वक्षो महाहेमशिलासमान-
माजानुगौ वृत्ततरौ च बाहू ॥
दीर्घाङ्गुली शोणनखाभिरामौ
सम्वर्तिका ताम्रतलौ च पाणी ॥ ६० ॥
स चामरच्छत्रयुतौ सस्य[3]-
चन्द्राङ्कितौ चास्य शिशोः करौ यत् ॥
आश्लिष्टमूली यवमालयात्रि[4]-
स्तत्सार्वभौमो भवितैष नूनम् ॥ ६१ ॥

---

१. उक्तेति—क०
२. मन्दानवो—क०
३. चच्छु—क०
४. जयमालयात्रिः—ख०

असङ्गताग्रे पितृमातृरेखे
तदस्य सक्तं न मनः कुटुम्बे ॥
अत्युन्नतं पाणितलं वसूनां
व्ययं च दानव्यसनेन वक्ति ॥ ६२ ॥
पाणौ शिशोर्दर्पणमत्युदारं
पश्यामि तज्ज्ञानिधुरंधरोऽयम् ॥
योगीश्वरः स्यादवनीश्वरो वा
चक्राणि सर्वासु यदङ्गुलीषु ॥ ६३ ॥
सिंहोदरस्यास्य मृदू यदन्ध्री
कूर्मोपमौ सूक्ष्मघनाङ्गुलीकौ ॥
तलोल्लसत्स्पष्टमहोर्द्ध्वरेखौ
महात्मभिर्वन्द्यतमौ ध्रुवं तत् ॥ ६४ ॥
बालोऽधुना किं बहुवर्णयेयं
द्वात्रिंशताऽलक्ष्मभिरेष लक्ष्यः ॥
भविष्यतीति प्रतिभाति भावी
नूनं जगद्गीतयशा महात्मा[1] ॥ ६५ ॥
[१]कृशानुभे [2]कार्तिकपौर्णमास्यां
सुरेज्यवारे परिघे च योगे ॥
सिंहे [3]विलग्ने [२]करणेववाख्ये
ज्ञातः सुतो वेदिकुलप्रदीपः ॥ ६६ ॥

१. च-क०
२. कशानुभे-ख०
३. ग्य-क०
1. हरिहपालः ५९ श्लोकतः ६४ यावत् बालस्य ललाटाद्यङ्गानि वर्णयित्वा "नून स महात्मा भविष्यती" ति जगाद।
2. कृत्तिकालक्षणे।
3. सिंहलग्ने।

[1]मूर्तौ भूमिसुतः सितः शनियुतो[2]दुश्चिक्यगोमित्रगो
मित्रः शीतमयूखसूनुसहितः [4]प्रत्यर्थिभावे शिखी ॥
देवेज्योदपितानिकेत[5]निलयो मेषूरणे चन्द्रमा ।
राहुरिः फगतो ग्रहस्थितिरियं श्रीनानकस्योदिता ॥६७॥



1. लग्ने ।
2. तृतीयस्थानगः ।
3. तुर्यस्थानगः ।
4. षष्ठे स्थाने केतुः ।
5. सप्तमस्थानीयो गुरुः ।

# श्रीनानकस्य जन्मलग्नम्

१५२६




[1]उपेन्द्रदत्तो नक्षत्रनाम्ना योऽयं निगद्यते ।
स नानक निराकार इति ख्यातिं गमिष्यति ॥ ६८ ॥

अखण्डखण्डपरशोः शिरोभूषणमुज्ज्वगम् ।
पञ्चखेटाः प्रपश्यन्ति जगदीशस्ततः शिशुः ॥ ६९ ॥

[2]अमूर्तिगः [3]पूर्णमूर्तिस्तूर्णं चूर्णितवैरिणम् ।
नरेन्द्रं केन्द्रगश्चन्द्रस्तनुतेऽतंद्रतेजसम् ॥ ७० ॥

उपरस्थाच्छीतकिरणात्कर्मगः शर्मकृद्गुरुः ।
तं पश्यन्कर्मनिपुणं धर्मनिष्ठं नृपं चरेत् ॥ ७१ ॥

उपचये सितसूर्यसुतौ स्थितौ
स्वगृहगोच्चगतो सुहृदौ परम् ॥

1. १६६७८ यावत् जन्मलग्नानुसार नानकस्य भाविनो जीवनवर्णनम्।
2. अजन्मलग्नगः ।
3. दासं-क॰

अतुलवाग्विभवं जनपूज्यतां
परमऋद्धिमपि प्रविधास्यतः ॥ ७२ ॥

कौमारे प्रतिभास्यति स्वयमहो शास्त्रं श्रुतीनां गणो
धर्मे प्रीतिरतीव चास्य भविता नार्ये कुटुम्बे तथा ॥
सिद्धीनां निवहः समाधिसहितो ज्ञानं पुरोत्पद्यते
ख्यातं भूवलये प्रणस्यति सदा म्लेच्छस्तथार्यो जनः ॥७३॥

सिद्धान् बोधयिता विमार्गगमनांस्तत्तन्मतं खण्डय-
न्मूढानां हृदयाद्धरिष्यति तमो विष्णोर्यशोगीतिभिः ॥
जानीमो जगदीश एव जगतीमुद्धर्तुमद्धामव-
द्धाप्याः केन गुणा हि नानक निराकारस्य लोकोत्तराः ॥७४॥

नृपालयोगाविविधाधनं मह-
त्परन्त्वयं सर्वविरक्तपुङ्गवः ॥
तृणाय मत्वा भुवनत्रयश्रियं
सदा परब्रह्मसुखेन निर्वृतः ॥ ७५ ॥

यथा मणिर्ग्रावगणे न बुध्यते
खनौ यथा हेम न बालुकाकुलम् ॥
अयं[1] कुटुम्बेषु तथा न लक्ष्यते
विचक्षणो वेत्स्यति कश्चिदेव तम् ॥ ७६ ॥

समये तरवः फलत्यलं
समये वर्षति वारिदावली ॥
समये प्रकटीभवन्त्यहो
अवतीर्णस्य[2] महात्मनः कलाः ॥ ७७ ॥

---

१. वयं—क०
२. ऽवतीर्ण—ख०

किमधिकमभिदध्यामेपकालः कलिर्य-
ऽन्नहि वदति सुमेधाः सत्यमप्यद्भुतं यत् ॥
प्रकटयति विभुत्वं बालके तत्र काले
कथमिव भविता नो जीवतामक्षि साक्षि ॥ ७८ ॥

इदं मया शास्त्रगुरुप्रसादेता
निवेदितं किञ्चन बुद्धिसौष्ठवात् ॥
नहीदृशां कश्चन वेद चेष्टितं
नमो नमोऽस्मै मम योऽस्तु सोऽस्तु सः ॥ ७९ ॥

श्रुत्वेति कालाय परं प्रसीदते
ददौ स मिश्रः शिशुजन्मपत्रिकाम् ॥
अपूजयत्सोऽपि विचित्रभूषणै-
र्धनैश्च वस्त्रैश्च महार्घधेनुभिः ॥ ८० ॥

श्रुत्वाङ्गदो गदादिदं भ्रजबालसिन्धो-
र्भ्रातः समानय गुरोर्मम जन्मपत्रम् ॥
दृष्ट्वा तदप्यनुदिनं गुरुदर्शनस्य
प्रीतिं यतोऽनुभवितास्मि सखे विखेदः ॥ ८१ ॥

बालसिन्धुरुवाचेदं कालः कालगतिं गतः ॥
लालः सम्प्रति तद्भ्राता विद्यते तं भ्रजाम्यहम् ॥ ८२ ॥

कथाया विच्छेदाद्विमनसि जने श्रोतरि तदा
समाश्वासं शीघ्रागमनकथनादेप रचयन् ॥
प्रवासी तीर्थेषु भ्रमणरसिकः कालमलघुं
ययावात्मारामः[1] सपदि तलवंडीं स्वनगरीम् ॥ ८३ ॥

प्राप्तस्तत्रदिनैरयं कतिपयैर्लालस्य वेश्मागम-
स्तेनाश्लेषसभाजनादिभिरलं सत्कृत्य सम्भोजितः ॥

---

१. कथानेक—क०
२. महार्हं—ख०

1. आत्माराम. = बालसिन्धु

आयातैश्चिरमुत्सुकैर्निजजनैः प्रेम्णा समावेष्टितो
नानादेशकथां विशिष्य कथयन्निन्ये त्रियामां यमी ॥ ८४ ॥

कृतनित्यक्रियं प्रातः स्नातो यातसुहृज्जनः ॥
आलोलो[1] न जगत्यस्मिन् बालो लालमभाषत ॥ ८५ ॥

अङ्गदः पङ्कुरसि स्थितः कृती
नानकेन गुरुणा प्रतिष्ठितः ॥
पत्रमस्य जनुषः[2] स याचते
देहि दर्शनममुष्य चाचर ॥ ८६ ॥

श्रुत्वेति लालोऽभिदधे स बालं
स्मृत्वा गुरुं नानकमुद्गताश्रुः ॥
सुतौ परित्यज्य कथं स्वकीये
निवेशयामास पदे परं सः ॥ ८७ ॥

बालस्तमाहस्म निशम्यता भो
मम त्वमाज्ञा कथिता कथेयम् ॥
तस्यात्मनिष्ठस्य जगत्कुटुम्बं
दयाध्वरा कोपि न वास्तवस्तु ॥ ८८ ॥

लालस्तदाकर्ण्य तथेत्युवाच
विमृश्य तस्मै विससर्ज पत्रम् ॥
जगाद विज्ञप्तिमिमां कुरुष्व
महात्मनस्तस्य पुरो महीयाम् ॥ ८९ ॥

गार्हस्थ्यपञ्जरे बद्धा गृह्यका इव मानवाः ॥
तेषां सुदुर्लभं देवतीर्थसज्जनदर्शनम् ॥ ९० ॥

---

1. आलोलः = कालः
2. जनुषः—गुरोः

प्रणामपूर्वं पूजेयं तस्मै देया ममेति सः ॥
नारिकेलफलं किञ्चिद्वसु चास्मै न्यवेदयत् ॥ ९१ ॥

अथ प्रतस्थे स च बालसिन्धुः
कालेन[1] केनापि समाजगाम ॥
तमङ्गदो जीव जयेत्युदीर्य
समालिलिङ्गोत्पुलकः प्रसन्नः ॥ ९२ ॥

तत्रत्यवृत्तमभिधाय निवेदनीयं
दत्त्वा सपत्रमिदमित्यददात्करेऽस्य ॥
पत्रं शिरस्यथ निधाय विधाय पूजां
सुश्राव देववदहर्निशमाञ्जिहस्तः ॥ ९३ ॥

सहाङ्गदैः श्रोतृजनैः प्रसन्नः
कथां पुनस्तां कथयाञ्चकार ॥
बालस्य बालः किल नानकस्य
चरित्रपीयूषरसानुपक्ताम् ॥ ९४ ॥

नीलकुंचितघनालकावृतः
कज्जलाविलविलोचनः शिशुः ॥
भूषितो जनभवेन बिन्दुना
दोलयापि हृदये निजे धृतः ॥ ९५ ॥

मुष्टिद्वयस्य चरणौ क्षिपतः प्रकामं
स्मेरस्य च क्षणमहो रुदतः क्षणं च ॥
तस्यावलोक्य मुरापथ ममेयकान्तेः
का ते जनानजनुषः फलसिद्धिमापुः ॥ ९६ ॥

सुवर्णमणिमेखलातरलनूपुराराविणं
निपीय किमपि स्तनं धरणिधारमानं शिशुम् ॥

---

1. कालेन केनापि = कियता कालेनेत्यर्थः । ननु कालेन तन्नाम्ना जनेनेति ।

६

दधार न परिश्रमादनुसरन्त्यमुं धातृका
जहास मुदितस्तदाङ्गनगतः समस्तो जनः ॥९७॥

अवलम्ब्य दण्डमथ सञ्चलतो
वदतश्चटूनि कलवर्णपदम् ॥
परिशिक्षया च जनकं नमतो
जननी चुचुम्ब तनयस्य मुखम् ॥९८॥

कृतमण्डनः कनककुण्डलोज्वलो
नवचूडया ललितकाकपक्षकः ॥
शिशुभिः समेत्य सवयोभिरश्रमा-
द्भणितं लिपिं च स गुरोरशिक्षत ॥९९॥

उपदिष्टं सकृदेव बालको
न विसस्मार गुरुं प्रमोदयन् ॥
पितरौ सर्वसुहृज्जनास्ततः
सुमनीषां मनसैव तुष्टुवुः ॥१००॥

दिने दिने वृद्धिमियाम कोशो
लालस्य तस्मिन् किल वर्द्धमाने ॥
[1]अलौकिकैकान्तमतिप्रभावैः
ख्यातिश्च जाता तलवंडिकायाम् ॥१०१॥

भवनादपनीय पञ्चवर्षो
वसुवस्त्राभरणान्यसेत्रमन्यत्[1] ॥
विससर्ज स भिक्षुकेभ्य ईप—
त्पितरि क्रोधपरे परं रुरोद ॥१०२॥

स्त्रमार्यामवदत्कालो गृहवस्तु न रक्षसि ॥
तयोक्तं जनितश्चोरो मां[2]मुपालमसे कथम् ॥१०३॥

---

१. भरणान्यमन—ख०  २. मानुपालम मे—ख०

1. बाल्य एव स बाल- ख्यातिं गतोऽलौकिकैकान्तमतिप्रभावैरित्यन्वयः ।

दैवज्ञमासाद्य जगाद कालो
विपर्ययो ज्यौतिषिकोदितेषु ॥
यच्छत्रधारी तनयस्त्वयोक्तः
स चौर्यमभ्यस्यति वान्य एव ॥१०४॥
स्मित्वा ततो हरिदयालुरुवाच कालं
सम्प्रत्युपालभस एवमनिश्चयान्माम् ॥
सम्पत्सु नानक जनुर्जनितासु सौम्य
न प्रक्ष्यसि प्रमुदितो हि कदापि वार्ताम् ॥१०५॥
वितरणव्यसनादपलप्य स
स्वगृहवस्तु ददौ द्रुतमर्थिने ॥
तदवलोक्य चुकोप पिता परं
न परुषं जननी समभाषत ॥१०६॥
तिष्ठन् गृहे हरति वस्तु तदेष तिष्ठे-
त्कार्ये क्वचिन्नियत इत्यवधार्य चित्ते ॥
गोचारणाय निदिदेश पिता सुतं स्व-
माज्ञां स तामुरसि कृत्य ययौ वनाय[1] ॥१०७॥
घटोघ्न्यस्ता गावो गलत्तरलसास्नाः शुशुभिरे
सिताः पीता नील्यो ऽरुणतनरुचः शाद्वलगताः ॥
अराजद्बालोऽसौ परिकरनिबन्धेन रुचिरो
व्रजन् पश्चात्तासां करकलितयष्टिर्हरिरिव ॥१०८॥
गावश्चरन्ति स्म जनस्य शस्यं
सचेदुपालम्भममुष्य चक्रे ॥
कृषिं विलोक्यापचितां ततोपि
स्वयं ललज्जे च विसिस्मिये च ॥१०९॥

---

1. चौर्यकर्मणापि नानको गृहवस्तूनि याचकेभ्यो ददौ। इति दृष्ट्वा पिता परं चुकोप। अथ च तस्मादिनाद्वने गाश्चारयितुमिति।

वैशाखे विकसितवन्यपुष्पगन्धै-
रामन्दे वहति समीरणे सुगन्धौ ॥
धावित्वा मृदुलतनुर्नितान्ततान्तः
सुष्वाप क्वचिदयमाप्तगाढनिद्रः ॥११०॥

सुतस्य मौलौ सहसा फणीन्द्र-
श्छायां फणामण्डलतश्चकार ॥
कान्तिस्तदा कापि हरेरिवासीत्
संबिभ्रतः शेषफणातपत्रम् ॥१११॥

शाखीन्तरापातनिदाघरक्षा
कृता फणीन्द्रेण शिशुः स [१]शिश्ये ॥
पीलोरधो यस्य न तस्य दृष्टा
छायाधुनापि व्यतिवर्तमाना ॥११२॥

सस्यं परिच्छेद्य तदा प्रजानां
स "रायबोलार" इति प्रसिद्धः ॥
निवर्तमानस्तलवंडिकाया
राजा स्वयं सुप्तममुं[1] ददर्श ॥११३॥

न्ययोजयत्कञ्चन पश्य कोऽयं
सुप्तो मृतो जीवति वेत्युदीर्य ॥
आगत्य दृष्ट्वा स गतो नृपस्य
तूर्णं समीपं कथयाञ्चकार ॥११४॥

---

१. शिष्ये—ग.

1. रायबोलारः = बोलारराय इति नाम्ना प्रसिद्धस्तलवण्डिकाया राजा। स दृष्टवान् फणीन्द्रच्छायायां गाढनिद्रं नानकम्।

गाश्वारयंस्तातनिदेशवर्ती[1]
श्रान्तो महाराज महातपेन ॥
फालस्य वालः श्वसिति प्रसुप्तो
रक्षत्यमुं फुल्लफणः फणीन्द्रः ॥११५॥

निशम्य सर्वे प्रसिता बभूवुः
नृपश्च तं देशमुपाजगाम ॥
कोलाहले स्फुर्जति सैनिकानां
बालो जजागार गतो भुजङ्गः ॥११६॥

सम्भ्रान्त उत्थाय नृपं निरीक्ष्य
ननाम तं नानकचन्द्रवर्मा ॥
नृपोवरूढः सहसा तदाश्वा-
दमुं हृदा सादरमालिलिङ्ग ॥११७॥

जगाद चेदं किल कालभाग्या-
त्र केवलं तात कृतावतारः ॥
अस्माकमभ्यूर्जितपूर्वपुण्यै-
र्देशः कृतार्थीः कुरुपे महात्मन् ॥११८॥

कार्याय कस्मैचिदुपात्तदेहो
धरातले कश्चन किं सुरोसि ॥
पुराकृतानां तपसां विपाकात्
सिद्धोसि किं वोपगताष्टसिद्धिः ॥११९॥

उतावतीर्णोसि महाप्रभावो
रिरक्षिषुः सागरमेखलां क्ष्मा- ॥
मिमे वयं कोशकुटुम्बसैन्य-
देशान्वितास्ते करवाम किं नु ॥१२०॥

---

१. वर्तुनी—क.    २. अस्माकमाभूर्जित—ग.

अथाचचक्षे विनयेन तस्य
प्रीतः परं वेदिकुलप्रदीपः ॥
पश्यन्ति सर्वत्र सतां प्रसङ्गा-
द्देवं परं निर्मलमानसा ये ॥१२१॥

भृत्यस्य ते सूनुरहं न सिद्धः
सिद्धस्त्रिलोक्यां जगदीश एकः ॥
तस्यैव भक्त्याखिलशक्तिभाजः
सिद्धिस्फुलिङ्गाः परितः स्फुरन्ति ॥१२२॥

को नाम विश्वस्य विहाय राज्यं
धराधिपत्यं नृप कामयेत ॥
मातङ्गपृष्ठादवरुह्य तुङ्गा-
द्घालोऽयमारोहति को नु बालः ॥१२३॥

त्वमस्मदीयोऽसि वयं त्वदीया
न संप्रतीदं कथनीयमस्ति ॥
ततः कुटुम्बं च वयं च सर्वे
त्वयैव नित्यं परिपालिताः स्मः ॥१२४॥

त्वया सुराज्ञा तलवंडिकेयं
राजन्वती धर्मविवेकभाजा ॥
वयं प्रजायत्सुखमास्म हे ते
स चापि पुण्यस्य परं प्रभावः ॥१२५॥

ताः[1] सूनृतास्तस्य गिरो निशम्य
राजा परं विस्मयमान ऊचे ॥
आत्मानमीदृग् विवृणोति नेति
त्वं योऽसि[2] सोऽसि प्रणता वयं त्वाम् ॥१२६॥

1. ता इत्यनेनानिर्वचनीया इति व्यज्यते ।
2. मानुषो भव देवो वा भवेति ध्वन्यते ।

कालस्य बालो बहुमानितोऽथ
बोलाररायेण नृपेण नत्वा ॥
गत्वा नगर्यामगदन् जनाय
मोहो महानल्पधियां ततोऽभूत् ॥१२७॥

[1]एतद्यशो नवमवर्षमुपेयुषोऽस्य
श्रुत्वा जनो नवमदभ्रमतिर्ननाम ॥
कृष्णस्य नन्द इव तस्य तु तत्ववेदी
तातस्ततो व्यधितकृत्यकदर्थितानि ॥१२८॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
राजबहुमानो नाम द्वितीयः प्रस्तावः



1. बोलाररायेण राज्ञा ग्रन्य एव प्रथितयशाः सञ्जातो नानकः ।

# अथ तृतीयः प्रस्तावः

दुग्धेन्दुकुन्दधवलैः स्वमहःप्रभावैः
प्रक्षाल्य मानसमलं निजभक्तिभाजाम् ॥
विश्वं करामलक[1]वत्परिदर्शयन्ती
वाचं विभूषयतु मे वचसामधीशा ॥ १ ॥

कृपीमकार्षीद् गुरुणा निदिष्टो
व्रीहीनसौ स्तम्बकरीं स्वैरत्सम् ॥
मृगेषु नारब्धदपीक्षमाणः
क्षेत्रेषु तिष्ठन् भरतो यथा प्राक् ॥ २ ॥

उपनीय गुरूनुपनीय सुतं
निगमाध्ययने नियुयोज पिता ॥
चतुरो निगमान्स्वयमेष पठन्न-
भवद्बहुवैदिकविस्मयकृत् ॥ ३ ॥

आश्चर्यं तत्पण्डितानां मतानी-
र्यव्याचख्यावश्रुतानि श्रुतानि ॥
यन्म्लेच्छा नामाचचक्षे मतानि
तर्त्रित्रीयां चक्रिरे ते नमन्तः ॥ ४ ॥

---

१. स्ववरतरम्—ख.
२. त्यद्या—क.
३. सत्लेष्टो—क.
४. तद्विश्री—ख.
1. करे स्थित आमलको यथा परितोऽखिलतो दृश्यते तथैवेति भावः ।

घालसिन्धुमनुगं सुमेधसं
रूपकाणि च गृहाण नानक ॥
भाण्डमानय विशिष्टलोभदं
विक्रयं कुरु वृथा स्थितोऽसि किम् ॥ ५ ॥
एवमादिशदमुं पिता ततो
नानकः प्रचलितो मया सह ॥
तावदृष्टपरनीवृतौ शनै-
रव्रजाव[1]पृथुकौ पृथून् पथः ॥ ६ ॥
युग्मम् ॥

नद्यस्तीर्णा विमलसलिलायान्यपात्रैरनेका
दृष्टा ग्रामाः कृषकबहुलाः शस्यसम्पन्नमनोज्ञाः ॥
पर्याक्रान्तान्यवलविभवैः पत्तनान्युत्तमानि
व्यालोलूकैः प्रतिभयमथ प्राप्तमारादरण्यम् ॥ ७ ॥
तस्यां तमभिलप्यंतावतिशान यथा यथा
तथा तथा दुस्तरतद्विपयास्वादनोपमम् ॥ ८ ॥
न सिक्ताः केनापि प्रचुरदलसांद्राः क्षितिरुहा
न संदृष्टा वैद्यै. शबरशिशवः स्थूलवपुषः ॥
मृगाः संजीवन्तो मृगरिपुषु रिङ्गत्सुपरितो
जगद्रक्षादक्षं कमपि परमस्मिन्निजगदुः ॥ ९ ॥

---

१. नि—क०
२. दृष्ट—क०
३. मनेरे—ख०
४. पृथिव—क०
५. वरिष्यपथ—क०
६. सुर—क०
1. पृथुको = पृथुरेव पृथुको स्वार्थो धनञ्ज ।

व्याघ्रव्यालवृकैरुपस्थितमृतिश्वभ्रैः प्रयातप्रदं
शैलारोहवरोहणैरनियमादुच्चत्वनीचत्वकृत् ।
भृङ्गैर्मङ्गलगुञ्जितैः सुरभिभिर्वातैः क्वचिच्छर्मदं
भ्राम्यन्तौ विपिनं भवोपममिदं न क्वापिशान्तिं गतौ ॥ १० ॥

अवरोधमिवोत्तमं मृगीणां
परितः प्रोन्नतशालसंपरीतम्[1] ।
अविशाव घनं वनं तदन्त-
र्विहगैर्वल्गुवचोभिराचितद्रु ॥ ११ ॥

कौपीनमात्रावरणान् जटाधरा-
नादिग्धगात्रान्भसितेन भास्वता ॥
आलोक्य तत्राथ ननाम नानक—
स्तपस्विनस्तद्गुरुमित्यभाषत ॥ १२ ॥

के यूयं विजने वने स्थितिजुषो वस्त्रं न किं धार्यते
मार्गः कः खलु नाम किञ्च भवतामन्नं कुतो लभ्यते ॥
कस्यार्थे क्रियते तपः प्रतिदिनं को वात्र वो रक्षिता
निर्व्यापारमिहास्थितैः किमु सुखं युष्माभिरासाद्यते ॥ १३ ॥

एवमुक्तो नानकेन नानकेनापि संलपन् ॥
उवाच स हितं साधुः सहितं साधुतागुणैः ॥ १४ ॥

निर्वाणिनो वयमपेतजटावधूता
नामापि सचरणरेणुरिति स्फुटं मे ॥
विश्वम्भरोऽत्रमिह यच्छति कर्मसाक्षी
प्रीत्यै च तस्य तनुमः सततं तपस्याम् ॥ १५ ॥

---

१ सम्परीत —ख०

पश्यन्वी जगदिन्द्रजालमतुलं नृत्यद्भिरेवैर्जनै-
रर्थार्थं बहुरूपधारिभिरहो नीयामहे कौतुकम्[1] ॥
प्रारब्धं विदधाति नः परिजनं[2] सर्वामनुक्तःक्रियां
साम्राज्यं परिभुज्यते हत परं[3] सन्तोषसिंहासने ॥ १६ ॥

मच्छस्त्रग्रथितामुद्रास्तत उन्मुच्य नानकः ॥
उवाच किमतो भाण्ड बालसिन्धोऽति लाभदम् ॥ १७ ॥

वसु सपदि बुभुक्षितेषु पात्रे-
ष्वहह वितीर्णमभाग्यतो नयेन ॥
अपहृतसकलर्द्धिनेव चौरै-
रिह च परत्र च तेन रोदितव्यम् ॥ १८ ॥

अथ तमहमवादिषं वृथात्वं
कथयसि नानक धर्मवादमुच्चैः ॥
असति वसुनि धार्मिका न किं किं
विदधति पापमधर्मभीरवोऽपि ॥ १९ ॥

डिंडिमो [1]नुःस्पृहत्वस्य ज्ञानवैराग्ययोश्छटाः ॥
धर्माधर्मपरिष्कारः कुक्षिपूर्तेर्विजृम्भितम् ॥ २० ॥

कालोऽयं कलिरवधेहि भो धनस्य
मावज्ञां कुरु किल सर्वसाधनस्य ॥
यैर्न्यूनैर्गुणकुलसज्जनत्वपूर्णै-
र्विक्षिप्तैरिव धनिनो न संलपन्ति ॥ २१ ॥

---

१. कौतुकम्—क०
२. परिचयः—क०
३. हतपरं—क०
४. मच्छन्य—क०
1. नि स्पृहत्वस्यैनि मुद्र. पाठः ।

अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ॥
विच्छिद्यन्ते क्रियाः सर्वाः ग्रीष्मे कुसरितो यथा ॥ २२ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः
यस्यार्थः स पुमान् लोके यस्यार्थः स च पण्डितः ॥ २३ ॥

यस्यार्थः स च विक्रान्तो यस्यार्थः स च बुद्धिमान् ॥
यस्यार्थः स महाबाहुर्यस्यार्थः स गुणाधिकः ॥ २४ ॥

चण्डः पिताऽलौकिकचेष्टितैस्ते
विरज्यमानं प्रसभं पुरैव ॥
अनेन सर्वस्वविसर्जनेन
किमाचरेत्तन्मनसावधेहि ॥ २५ ॥

ते देव दानं शंसन्ति धर्मज्ञा अपि सर्वशः ॥
न स्वस्य न कुटुम्बस्य येन पीडा प्रजायते ॥ २६ ॥

इति मे वाचमाकर्ण्य कर्णप्रियमुवाच सः ॥
बालसिन्धो शृणु भ्रातस्तातप्रेषितमद्वचः ॥ २७ ॥

आपद्धर्मधिया बुधा विदधते यत्तत्प्रदोषास्पदं
विश्वामित्रमुनेरिव श्वपिशिताहारक्रियोपक्रमः ॥
अन्यद्दाम्भिकचेष्टितं सुमनसां सद्वृत्तमन्यत्सखे
साक्षी सर्वगतः प्रमाद्यति न चेद्दम्भो मुधा तन्यते ॥ २८ ॥

कृते प्रयत्नेपि न लभ्यते धनं
विनापि यत्नं यदि लभ्यते क्वचित् ॥
तदा[1]न्वयेन व्यतिरेकतो ध्रुवं
न दैवतोन्यच्चदवामि साधनम् ॥ २९ ॥

---

१. किमाचरत्–क०

1. तत्सत्त्वे तत्सत्ता तदभावे तदभाव इत्यन्वयव्यतिरेकः ।

दानेन पीडापि विमर्शणीया
भविष्यतो भूरि सुखस्य हेतुः ॥
आरोग्यकामा न किमाग्रहेण
भैषज्यमश्नन्ति कषायतिक्तम् ॥ ३० ॥

वाणिज्येऽस्मिन्नलाभश्चेत्ततस्तातः प्रकुप्यतु ॥
वृद्धौ शतगुणायां त्वं स च वा विमना कुतः ॥ ३१ ॥

तारका इव ता मुद्रा इत्युक्त्वा निदधौ नवाः ॥
स्मेरो नानकचन्द्रस्तं तापसौ मन्दमालपत् ॥ ३२ ॥

किमर्थमेतत्प्रददासि मह्यं
कुमारकस्त्वं कुत आगतोऽसि ॥
न संग्रहो नः खलु सौम्य धर्मः
सिद्धान्नपात्रं सुमते वयं स्मः ॥ ३३ ॥

सन्तोषेण परिव्राजां प्रसन्नमुखपङ्कजः ।
अथ नानक आचष्ट सम्मतासम्मतो मया ॥ ३४ ॥

विश्वम्भरेण प्रहितोऽत्र दात्रा
तवास्म्यहं दर्शनमात्रतुष्टः ॥
नाम्ना निराकार इति स्फुटेन
वदन्ति मां [1]नानक पूर्वकेण ॥ ३५ ॥

विस्मितः स ततोऽपृच्छन्निराकारप्रथा कुतः ।
अवदन्नानकस्तं च परिव्राजकपुंगवम् ॥ ३६ ॥

---

१. रिमापदेन—क०
२. आचष्ट—क०
३ यथा—ग०
1. नानकः [illegible] निराकार इति पदेन सम्बोधयामास । तत्र हेतुं ३७ श्लोके स्वयमेव ददाति ।

द्वापरे निर्द्वीपरोहं[1] निराकारमचिन्तयम् ॥
कलौ जातः कारणेन तामेव प्रथितिं गतः ॥ ३७ ॥

वनाद्धि निर्गत्य ततो नगर्यां
गोधूमचूर्णादिसवेश्नवारम् ॥
आनीय तेभ्यो व्यतरा[१]च तैश्च
विसर्जितौ स्वं गृहमागमाव[२] ॥ ३८ ॥

ऊचे शिष्यस्तेषु कश्चिद्गुरुस्त्वं
कस्माच्छीघ्रं बालकोऽयं विसृष्टः ।
सम्प्रत्यूचे तं[३] महात्मानमुच्चै-
स्तेजस्वन्तं कारयेयं स्वकर्म ॥ ३९ ॥

स्थितः सरोरोधसि नानकस्तु
मामब्रवीद्गच्छ सखे गृहं त्वम् ॥
अहं विना तेन न शोभमानो
धर्मेण हीनोऽर्थ इव प्रपोतः ॥ ४० ॥

भाण्डं किमादाय समागतोऽसि
स्थितः स कुत्रेति विपृच्छते माम् ।
कालाय तत्सर्वमवादिषं स
तडागतीरं सहसा जगाम ॥ ४१ ॥

नमन्तमागत्य विनीतवेषं
स नानकं रक्तदृगित्युवाच ॥

---

१. व्यतरन्ततश्च–ख.
२. आजगाम–ख.
३. सम्प्रस्तु–क.
४. रक्–क.
1. निर्द्वीपरः एकाकी निराकारमचिन्तयमिति भाव ।

किं [1]पेण्यमानी तमपेतभीते
पराजितार्थेषु महावदान्य ॥ ४२ ॥
वराटकोऽद्यावधि नार्जितस्ते
धनार्जनस्येति न वेत्सि कष्टम् ॥
गृहादुपाहृत्य यथाकथञ्चि-
दुन्मन्तवन्मुञ्चसि किं धनानि ॥ ४३ ॥

स एवमादीन्यभिधाय कोपात्
क्रूराणि तस्यान्यसमंजसानि ॥
[2]चपेटमुद्यम्य रुदन्तमेनं
व्रजेति चोक्त्वा भवनं निनाय ॥ ४४ ॥

पोलाररायेण निशम्य सर्वं
विषण्णचित्तेन दयालुभावात् ॥
आहूय कालः कथितः सभायां
चण्डोऽतिमात्रं तनये कुतोऽसि ॥ ४५ ॥

तं कोमलं बालमतत्त्ववेदिन्
दुनोषि किं भो परुषैर्वचोभिः ॥
सुपल्लवं चन्दनपादपस्य
क्रूरैः कराग्रैः [4]शरदर्पमेव ॥ ४६ ॥

द्यूतादिकं दुर्व्यसनं यदि स्या-
त्तथापि बाले पितरौ दयालू ॥
न नानकः प्राकृत एष यस्मिन्न-
वाच्यवादान्प्रलपस्य बुद्धिः ॥ ४७ ॥

१. पुण्यसानी—क.
२. चपेहामु—ख.
३. पोटका—क.
४. शरदर्पं—क.

कियन्ति जन्मावधिने धनानि
दत्तानि तान्यद्य गृहाण मत्तः ॥
यतः क्रुधा साधुभिरीडनीये
मा नानके दुर्वचनानि[1] वाचः ॥ ४८ ॥

उन्मेद[1] आनेय ममार्थगृहाद्धनानि
दद्यामनाहूत[2]सुताय धनप्रियाय ॥
तेनाहृतं धनचयं वितरन्नवादी-
देतद्गृहाण कृपयाऽनुगृहाण बालम् ॥ ४९ ॥

सोऽब्रूत किं लज्जयसे भृशं मां
धनं मदीयं भवदीयमेव ॥
बालो विनश्यन् गृहमेधिमार्गा-
न्न शिक्षणीयः कतमो नयोऽयम् ॥ ५० ॥

राजावदद्बाल इति भ्रमस्ते
सिद्धोऽथवा कश्चन देव एव ॥
स चावतीर्णः सदने तदस्य
प्रसादमेवानुदिनं प्रतीच्छ ॥ ५१ ॥

स्थित्यैव तस्याखिलसंपदस्ते
भवेयुरित्येतदहं तु वेद्मि ।
उद्वेजितः स्थास्यति नात्र नूनं
भाग्यं क्व तादृग् हि भवादृशानाम् ॥ ५२ ॥

---

१. उन्मद—इच.
२. मनाहूत—क.
1. एतेनेदं व्यज्यते यत्पित्रा भर्त्सितोऽपि राज्ञा प्रोत्साहितो नानकः पुनर्दानमदात् ।

विसर्ज्य तं नानकमाजुहाव
प्रोत्थाय बद्धाञ्जलिरित्युवाच ॥
इदं गृहं नानक तावकीनं
जानीहि नः कर्मकरानिहास्त्र ॥ ५३ ॥

भवत्स्वरूपा विदुषः पितुस्ते
क्षमस्व दुर्वाक्यमदूरदृष्टेः ॥
अमार्मिकेणाचरिता महान्तं
तिरस्क्रिया नैव दुनोति नूनम् ॥ ५४ ॥

नानको निजगादेदं विनयावनतं नृपम् ॥
तवैवास्मि गृहे तस्मिंस्त्वद्बाहुपरिपालितः ॥ ५५ ॥

शास्ति दुर्नयमालोक्य पिता नास्ति क्रमो मम ॥
यतः प्रसीदति भवान्मयि वात्सल्यवारिधिः ॥ ५६ ॥

तस्य वाचमिमां शृण्वन् स्नेहसौजन्यपेशलाम् ॥
विससर्ज नृपः प्रीतो बहुमानपुरस्सरम् ॥ ५७ ॥

वार्षिकं करमादातुं महाराजप्रयोजितः ॥
ससैन्यो जयरामोऽस्य तलवंडीं समागमत् ॥ ५८ ॥

आतिथ्यमद्भुतमकारि करोऽपि दत्तः
संस्थापितः कतिपयानि दिनानि हार्दात् ॥
बोलाररायसहितो जयरामवर्मा
बभ्राम तस्य नगरस्य निरीक्षणाय ॥ ५९ ॥

पश्यन्तौ विपणिमनुत्तमामुदारम्
प्रासादाननुपमशालभञ्जिकाढ्याम् ।
सम्बाधं विविधजनैः प्रतोलिकासु
कालस्योपगृहमुपागतौ गजस्थौ ॥ ६० ॥

निशम्य कोलाहलमुल्लसन्मना
तडिच्छविः[1] शैशवशेषशोभना ॥
सरोजराजन्नयनाथ नानको
गवाक्षनिक्षिप्तमुखी निरैक्षत ॥ ६१ ॥

कामस्य सा कनककार्मुकवल्लिरेव
यस्याः कटाक्षविशिखैर्व्रणितो मुमोह ॥
धैर्यं विहाय बहुधा जयरामवर्मा
श्वासानमुञ्चदथ रायमिदं बभाषे ॥ ६२ ॥

कस्येयमिन्दुवदना तनयाऽस्तनुश्रीः[2]
व्यूढा नवेति नृपते परिभावनीयम् ॥
चेत् क्षत्रियस्य न परेण गृहीतपाणि-
र्नातः परं तव पुरोऽभिदधे सुमेधः ॥ ६३ ॥

निश्चित्य कालतनयां प्रजातोपयमां जनात् ॥
अवोचद्रायबोलारो जयराममिदं वचः ॥ ६४ ॥

कालस्यैषा सुभगतनया वेदिनः क्षत्रियस्य
न व्यूढा च त्वमसि कुलवानस्य संबन्धयोग्यः ॥
विप्रं पृच्छेर्गणनकुशलं शास्त्रतो योग्यता चेत्
प्राप्तो[3] भावी तव परिणयो यद्वामो विधाता ॥ ६५ ॥

एवं तेन धराधवेन गदिते विप्रं निधिं पार्श्वगं
सोऽवादीद्वद वेदिमल्लकुलयोर्योग्यो विवाहो न वा ॥
योग्ये वर्णवशादिचिन्त्यतया चेदौचिती सत्वरं
कुर्वीया नृपतेरमुष्य वचसा वैवाहिकीं संविधाम् ॥ ६६ ॥

---

१. तरि—ख०
२. तनयाननुः श्रीः—क०
३. प्रापो—ख०

अपृच्छचयोर्नामिनी शास्त्रदृष्ट्या
शुभं सम्बन्धमालोक्य विप्रो बभाषे ॥
ध्रुवं वेदिनो मल्लसम्बन्धयोग्या-
स्तपाते विवाहे गुणानां गणश्च ॥ ६७ ॥

बोलायरायः सदने स्वकीये
कालं समाहूय रहो जगाद ॥
अयं कुलीनो जयरामवर्मा
भ्रातर्विवाह्यो भवतो नवेति ॥ ६८ ॥

विवाह्ययोग्या यदि नानकीयं
विवाहनीया न किमित्यनेन ॥
लावण्यसौजन्यनिधिर्गुणाढ्यो
[1]वरोवरीयानयमित्यवैमि ॥ ६९ ॥

स्वज्ञातिमुख्यैर्निपुणं विचार्य
कार्यं त्वया कार्यमिदं मदुक्तम् ।
अपत्यसम्बन्धविधौ विशेषा-
दपेक्षिता बन्धुजनाभ्यनुज्ञा ॥ ७० ॥

कालस्तमूचे नृपते भवत्तो
ज्ञाता ममाप्तो न परोऽस्ति कश्चित् ॥
निर्धारितं यद्भवतास्मदीयै-
रवश्यमेवाभ्युपगम्यमेतत् ॥ ७१ ॥

मल्लैः समं नो बहवो विवाहाः
पुराप्यभूवन्निति योग्यमेतत् ॥
अनत्यये[2] बाधकवर्जिते हि
लोकस्य पूर्वाचरितं प्रमाणम् ॥ ७२ ॥

---

१. सौहार्द्र—ब.       २. अनुत्पते—ब.

1. वरोवरीयान्—वरीयान् श्रेष्ठ वर इत्यर्थं ।

2. अनत्यये—उत्थानरहित इत्यर्थं ।

ततो निश्चित्य नानक्या लग्नं वैवाहिकं बुधैः ।
दत्तवाक्यो विवाहाय जयरामं स आह्वयत् ॥ ७३ ॥

शृङ्गारितैर्मर्द[1]कलैः करिभिर्नटद्भिः
सद्घोटकैर्नृपतिभिः शिविकागतैश्च ॥
श्रोत्रप्रियैः प्रतिपथं विविधैश्च वाद्यै-
र्जन्यैरशोभत शुभैरथ जन्ययात्रा ॥ ७४ ॥

आसनार्घादिभिः पूजयित्वा वरं
नानकीमस्य हस्ते ददौ वेदिवर्यः ॥
कामिनीनां कले गीतवाद्यध्वनौ
वैदिकैः पठ्य[2]मानेषु मन्त्रेषु च ॥ ७५ ॥

लाजान्शमीदलयुतान्प्रनिधाय[3] पाणौ
यन्नानकः श्वसुरदंचति लाजहोमे ॥
लक्ष्म्याः करे मरकतावलिहीरखंड-
दातुर्नतच्छ्र[4]भृतोऽभूत सर्वशोभाम् ॥ ७६ ॥

जन्यान्भोजनपाननृत्यविनयैः सन्तोष्य सर्वांश्चिरं
जामात्रे मणिहेमखण्डतुरगान्दत्वा च कालः कृती ॥
रायस्यानुमतैर्विसर्ज्य तनयां याने नवीने स्थितां
वाष्पैर्विप्लुतलोचनामनुरुदन् वक्तुं न शक्तोऽभवत् ॥ ७७ ॥

नानको यदपि ज्ञानी न वशो हर्षशोकयोः ॥
तदप्यशोचद्विरहे स्वस्वरूपविदः स्वसुः ॥ ७८ ॥

---

१. निलर्वैः–च.
२. पद्यमानेषु–क.
३. प्रजिघाय–च.
४. तदश–क.

पितुर्गृहे भर्तृगृहे च काले
कालेऽवसत्कालसुता सती सा ॥
ज्योत्स्नेव यं पक्षमळञ्चकार
स एव शोभामधिकामुवाह ॥ ७९ ॥

मणिमयोर्मिकया सह कर्करी-
मदितकांस्यमयीमथ नानकः ॥
अनुपपत्तिमते किल भिक्षवे
प्रकुपितोऽस्य पिता गणकं ययौ ॥ ८० ॥

भवति नानकराज्यमखण्डितं
हरिदयालुमुपालमतेऽत्यलम् ॥
हरिदयालुरमापत काल किं
भृशमुपालमसे ननु बालवत् ॥ ८१ ॥

न खलु नानकतत्त्वमवागमो
भ्रमसि तत्त्वमबोधमहोदधौ ॥
यमयमिच्छति तं कुरुते नृपं
भगवतो हि कला कमलापतेः ॥ ८२ ॥

स्वयमभोगभुजोऽपि महाजना
गिरिखवत्परवाञ्छितदायकाः ॥
नहि भवानिव तृप्यति नानको
भवसुखेषु मरीचिजलेष्विव ॥ ८३ ॥

त्वममुतो न सुखं समवाप्स्यसि
ध्रुवमपत्यधियैन कदर्थयन् ॥
अविदितात्किल कामदरत्नतः
करधृतादपि नास्ति मनोरथः ॥ ८४ ॥

---

१. क्या—क०

तेनैवं प्रत्युपालब्धः स्मेरः स भवनं[1] ययौ ॥
न पीडयति पुत्रस्य स्वस्माद्[2]दुत्कृष्टतोदिता ॥ ८५ ॥

निशम्य चोलारनृपः कृपालुः
कालस्य कोपं तनयेऽनवद्ये ॥
आहूय तं तस्य हितानुबंधी
स सान्त्वमित्येवमुवाच वाग्मी ॥ ८६ ॥

असंशयं तर्जनताडनादि
बाले प्रयुञ्जन्ति विनेतुकामाः ॥
न सूनुमज्ञात्मसमं महान्तः
शिक्षाक्षणैस्तीक्ष्णतरैस्तुदन्ति ॥ ८७ ॥

जानासि यद्येतमयाविधेयं
विधेयमेकं भवते ब्रवीमि ॥
तत्त्वं विजानाति न नानकीयं
न नानकीयं तदयं ततोऽस्तु ॥ ८८ ॥

त्वं प्रत्यहं कुप्यसि खिद्यतेऽसौ
प्रायो ग्रहाणां युवयोर्न मैत्री ।
दूरे स्थिते श्रीविरुदेति बन्धौ
वीर्ये सुरे चापि नृणां विशेषात् ॥ ८९ ॥

तत्रैव तडागे पदस्य भाति
स चापि साधुर्जयरामवर्मा ॥
निमित्तमात्रं भविताऽस्य कार्ये
कार्येऽत्र कस्यापि खलु प्रतीक्षा ॥ ९० ॥

---

१. समवनं–क०
२. स्वमाद्‌–ख०

तिष्ठेत् [1]सुरत्राणपुरे स काले
गन्तासि तं च प्रणयप्रणुन्नः ॥
चिरादद्दष्टं वहुनन्दितासि
नवोदितं चन्द्रमिवावलोक्य ॥ ९१ ॥
उक्त्वेति राये विरते यभाषे
कालोऽवदः सम्यगिदं सुमेधे ॥
अद्यैव सद्य प्रहिणोमि पत्रं
विलिख्य तं सौम्य सगालसिन्धुम् ॥ ९२ ॥
स्वस्तिश्री जयरामवर्मणि शुभाः कालप्रणीताशिषः ।
क्षेमं प्राज्यमिहास्ति तावकमिदं संप्राथ्यते ऽनुक्षणम् ॥
अभ्यासे तव नानको गत इतो निर्विस्मयेताः कृती
निर्विद्येत यथा न तत्र भवता सम्पादनीयं तथा ॥ ९३ ॥
इति पत्रमुपादाय नानकोऽहं च निर्गतौ ॥
कालेन क्रियता प्राप्तौ सुरत्राणपुरं तत. ॥ ९४ ॥
युग्मम्
जनेन निर्दिष्टमुदारसौधं[2]
ततः प्रविष्टो जयरामसद्म ॥
स्वसुः पदे प्रह्वमनास्तथैव
स नानको स्पृश्यत पादपद्मे ॥ ९५ ॥

---

१. गता—क०
२. प्रणप्र —क०
३. सुमेधा —ख०
४. माप्तौ—क०
५. निर्दिष्टमदार—क०
1. सुरत्राणपुर = जयरामवर्मणो ग्राम ।
2. उदारसौधम् = जयरामवर्मण· प्रासाद ।

ज्येष्ठासि किं मे पदमस्पृशस्त्वं
न योग्यमेतत्कथितेति तेन ॥
साश्रूणि मुंचत्यवदत्कथंचि-
त्त्वयीश्वरांशे मम किं गुरुत्वम् ॥ ९६ ॥

भाग्यं मदीयं महदेव मन्ये
भ्रातं यदत्रागतवानसि त्वम् ॥
यं कामयन्ते किल वीतरागा
जनः स धन्यो जगतीतलेऽस्मिन् ॥ ९७ ॥

पित्रोः शुभं शंस तथा परेषा
पृष्टो भगिन्येति शुभं स शंसन्[1] ॥
उपायनं वस्तु बहूनि चास्यै
दिदेश वात्सल्यपरः प्रसन्नः ॥ ९८ ॥

पृष्टां प्रवृत्तिं तलवंडिकाया
जनस्य तस्मिन्नभिभाषमाणे ॥
आगत्य हृष्टो जयरामवर्मा
शर्मानसे श्यालमवेक्षमाणः ॥ ९९ ॥

भगिनीपतेः स चरणग्रहणाय
विनिमन्ननेन सहसा विधृतांघ्रिः[2] ॥
विपरीतमेतदकृथा इति जल्प—
न्नमुनाप्यधीयत नरो न सुरोऽसि ॥ १०० ॥

प्रेम्णा समालिङ्ग्य चिराय साश्रुः
समाजयन्नेतदुवाच साधुः ॥
समागमो नानक तावको मे
तपे मरुस्थस्य सुधीर्मिसेकः ॥ १०१ ॥

---

१. सुशसन्–क०
२. विधृतोऽङ्घ्रिः–ख०

कालेन लिखितं पत्रं जयरामाय नानकः ॥
अर्पयामास ततः पठित्वेदमुदैरयत् ॥ १०१ ॥

इह स्थितो नानक भुंक्ष्व भोगान्
प्रदेहि मे शक्तिमवेक्ष्य भिक्षौ ॥
न किञ्चिदत्रास्ति तवार्य कार्यं
परिश्रमः कोऽपि नहि क्षमस्ते ॥ १०३ ॥

इत्येवमुक्तो जयरामनाम्ना
तं नानकः प्रत्यवादीत् प्रवीणः ॥
कार्यं विना स्वस्थवपुः सचेता
भोक्ता तटस्थैरपि सह्यते न ॥ १०४ ॥

तेन त्वया किञ्चन मेऽनुरूपं
निरूपणीयं ननु सौम्य कृत्यम् ॥
अकर्मकृज्जातु न कोऽपि तिष्ठेत्
क्षणं प्रकृत्यायवशः प्रभुश्च ॥ १०५ ॥

तेनैवमुक्तो जयराम ऊचे
सौम्य त्वया किं यवनान्यधीना ॥
स उक्तवानार्यलिपिं तु जाने
नापाठिषं भो यवनाक्षराणि ॥ १०६ ॥

जयरामस्ततः स्मेरः श्यालमालपदुन्मनाः ॥
न [2]सास्ति भुवने विद्या विद्यास्त्वं यां न नानक ॥ १०७ ॥

न वारिपूर्णः कुलशो नीयमानो हि कूजति ॥
किञ्चिद्रिक्तस्तु मुखरो नेतारं भेदयत्यपि ॥ १०८ ॥

---

१. समानय—क०
२. प्रपन्न—क०
३. तारित—ख०

म्लेच्छाधिराजो धनखाननामा
देशान्बहून् शास्ति समृद्धकोशः ॥
तस्याधिकारं कलयस्व सौम्य
स्फीतस्य भोः प्रात्यहिकव्ययस्य ॥ १०९ ॥

तथेति तं सम्प्रति शुश्रुवान्सं
निवेद्य निन्ये धनखानपार्श्वम् ॥
अलौकिकं तस्य महो महीयः
प्रसेदिवान् वीक्ष्य तुरुष्कराजः[1] ॥ ११० ॥

प्रसादवस्त्राभरणैस्तदैव
ददावलङ्कृत्य निजाधिकारम् ॥
नवोल्लसत्पल्लवपुष्पबन्धः
सङ्कल्पशाखीव परं रराज ॥१११ ॥

मुद्राः सहस्रं विततार तावत्
ययाय तस्मै यवनाधिराजः ॥
प्रावर्तयद्भक्तममुष्य नित्यं
तस्यावरोधस्य च वेदिवर्यः ॥ ११२ ॥

ततो गजानां तुरगोत्तमानां
गवां नृपाणां मृगपक्षिणां सः ॥
भक्तं परिच्छिद्य ददौ निबद्ध-
मर्घेण तृप्ताः सकलं न तेऽश्नन् ॥ ११३ ॥

1. १०४ श्लोकस्य "तिष्ठेन्" इत्यारभ्य "तथेति तं सम्प्रति शुश्रुवांसं निवेद्य निन्ये" इति १०९ पर्यन्तं भागो नास्ति—"क इत्यत्र" ॥
२. तुरुष्कः=तुर्क इति भाषायाम् तेषां राजा।

पुष्टिं परामापुरपेतरोगाः
[1]स्तम्बेरमाद्या इति तन्नियुक्ताः ॥
अन्योन्यमूचुः प्रविचिन्त्य हृष्टाः
भक्ताधिकारी किल कोऽपि सिद्धः ॥[1] ११४ ॥

अभूत्सुरत्राणपुरे प्रसिद्ध
स्तन्नायका[2] सा किल भक्तशाला ॥
यस्याः पुरः प्रातरुदीय राने-
रायाममासीज्जनसंकुलत्वम् ॥ ११५ ॥

सिताघृतादीन्गणयेत को नु
तिष्ठेद्वराकी समिता मिता तु ॥
राशीकृतासीद् घुसृणो न तत्र
कस्तूरिका चेद् घनसारपुञ्जैः ॥ ११६ ॥

प्रियालवातादसनारिकेल-
स्वाद्वीसखर्जूरसुकूलकानाम् ॥
सितोपलानामपि दाडिमाना-
मनुत्तमानां गणिता न गोप्यैः ॥ ११७ ॥

अन्यैरहोभिर्महती समृद्धि-
रमुष्य लोकैरवलोकितासीत् ॥
धनानि विद्यास्तदहर्मजाज-
मन्योयमेनैव समुन्मिपन्ति ॥ ११८ ॥

भक्तस्य दानं न महाधिकार-
स्तथापि सर्वाधिकतामुवाह ॥

---

1. स्तम्बे दर्भादितृणनिचये रमते क्रीडति इति स्तम्बेरमो हस्ती।

१. गोप्य इति क० पु०;

2. "तन्नानचीया किल भक्तशाला" इति पुस्तः पाठ।

यदेव कुर्वन्ति महानुभावाः
पदं तदेवाखिलसंपदां हि ॥ ११९ ॥

तमेकदाऽभाषत[1] निःशलाके
भ्रातर्भवान् स्वोदयमभागिनीनाम् ॥
अहं यियासामि निजं निकेत—
मेतन्निशम्यानुमतिं प्रदेहि ॥ १२० ॥

मा नानकोऽभाषत कश्चिदाम[2]
प्रेमाकृतोभून्मयि बालसिन्धो ॥
यावच्छरीरं विकृतानपास्या—
त्प्रीति हि तामेव वदन्ति पक्वाम् ॥ १२१ ॥

भवन्तमेतर्हि विगर्हितैर्हा
भोगैः कृतार्थः किमु विस्मरामि ॥
त्वां सार्वभौमाश्रियमप्यखण्डां
दत्वा सुमित्रं नियमेन नूनम् ॥ १२२ ॥

लीलावलोक्या कतिचिद्दिनानि
त्वयेयमप्यस्य जगद्विधातुः ॥
य उद्यमो नः सततं विधेयो
न विस्मृतः सोऽपि हि सन्निधत्ते ॥ १२३ ॥

प्रियंवदस्येति निशम्य वाणीं
स्नेहावृतोऽहं गमनान्निवृत्तः ॥
कार्याणि तस्य प्रणपादकार्यं
मनोनुरूपाणि सुसावधानः ॥ १२४ ॥

इति श्री जगद्गुरुनानकचर्यायां नानकचन्द्रोदय-
समाख्यायामधिकारग्रहणं नाम तृतीयः प्रस्तावः ॥

---

१. दाम—क० पु० ।

1. "इदामार्थिर्धिनि……" इति पाठः 'क' एव 'ख' इत्यत्र ।

# अथ चतुर्थः प्रस्तावः

या [1]कच्छपीमपि निगादयति प्रवीणा
सप्तस्वरैरमृतगर्वहरा गिरस्ताः ॥
व्याकुर्वतीव जगति स्वकृपाप्रभावं
सा शारदास्तु सदया सदयाय नित्यम् ॥ १ ॥

न न्यवर्तत यत्पूर्वमाक्रोशति पितर्यपि ॥
दानव्यसनमेतस्य स्वातन्त्र्ये तदवर्धत ॥ २ ॥

प्रातर्निषद्यामुरमण्डनेऽसौ
सौधे निपद्यातितरामुदारे ॥
आयासमासीत्सुरशाखिधर्मा
न याचकोऽजायत कोपि मोघः ॥ ३ ॥

औदार्यमार्यस्य निशम्य तस्य
जनो थ आगात्तलवण्डिकायाः ॥
अपूरयत्तस्य मनोरथेन
साकं गृहं प्राहितभूरिरिक्थः ॥ ४ ॥

कुन्देन्दुकर्पूरसितं यशोऽस्य
यथा तथा दिक्षु विकासमायात् ॥
तथा तथा सौरभकृष्यमाणा—
वनीयकास्तं मधुपा इवागुः ॥ ५ ॥

---

1. वीणाभेद, सरस्वत्यास्तु कच्छपीत्यभियुक्तोक्तेः ।

भक्ताधिकारी यवनस्य तस्य
किं चक्रवर्तीव करोषि दानम् ॥
आयाद् व्ययो यस्य महाननीतेः
स सत्वरं सीदति लोकतन्त्रे ॥ ६ ॥

मयेवमुक्तः स कदाचिदूचे
भ्रातर्न नीतिर्न च लोकतंत्रम् ॥
स्वप्ने नृपात्वे सकलेऽविशिष्टे
भिक्षुर्वरो वा वद सार्वभौमः ॥ ७ ॥

## युग्मम् ॥

वदान्यतामस्य वदन्नुपेत्य
मासोत्तरं सूचयति स्म कश्चित् ॥
चेतो भगिन्या भगिनीपतेश्च
तस्याकुलीकर्तुमसारवेदी ॥ ८ ॥

यत्कोषनस्यास्य धनस्य हानिं
करोत्यसंको यवनाधिपस्य ॥
भ्राता त्वदीयस्तदशंसयं मे
शिरस्यनर्थो निपतेत्कदाचित् ॥ ९ ॥

पत्यैवमुक्ता खलु नानकी तं
जगाद नैवं हृदि कल्पयेथाः ॥
भ्रातुः सतो मे न भवेदनर्थः
कस्याप्ययाप्येनमिहाह्वयामि ॥ १० ॥

---

१. पयो—क०
२. वरो—क०

## युग्मम् ॥

मद्भ्रातरं तुलसि[1] गच्छ तमानयेह
त्वां द्रष्टुमिच्छति भवद्भगिनीत्युदीर्य ॥
दासी जगाम तुलसी गदिता नयेति
तस्यान्तिकं तदभिधाय निनाय तं सा ॥ ११ ॥

मया समं नानक आजगाम
सितोपलास्वादुफलानि गृह्णन् ॥
दत्त्वा भगिन्यै सविधे निषण्णः[1]
किमर्थमाहूतवतीत्यपृच्छत् ॥ १२ ॥

जगाद सा भूरिदिनाऽन्यपश्यं
न यत्तदाहूतवती भवन्तम् ॥
भक्ताधिकारे यवनस्य सक्त—
स्तथा यथा नेह कदाप्युपेषि[2] ॥ १३ ॥

अथावदन्नानक एतदेवं
बद्धा खगा ये खलु वागुरायाम् ॥
ते संनिधिस्था अपि नानुवन्ति
परस्पराभ्यागमभाविसौख्यम् ॥ १४ ॥

आयव्ययं शोधयितुं यवनाधिपलेखकान् ॥
स्वसः स्वश्रुपतिर्वक्तुंव्यवहारविशुद्धये ॥ १५ ॥
नानकेनेति गदिते नानकी निजगाद तम् ॥
मासमात्रेऽधुनातीते भ्रातस्तव कुतस्त्वरा ॥ १६ ॥

---

1. तुलसी = नानकीपरिचारिका तामाह नानकी नानकमानेतुम् ।

१. जिवन्नः—क०

२. पेयुषी—क०

दारुणाद्यवनराजतो भयं
मास्तु मे त्वनृपतेरिति त्वरा ॥
एवमुक्तवति नानकेऽवद-
द्विस्मितोऽथ जयरामनामकः ॥ १७ ॥

साधोः प्रसङ्गाद्भवतो भयं चे-
चापस्तदा शारदचन्द्रतः स्यात् ॥
तथापि लोकव्यवहाररीत्या
त्वयेदमुक्तं न तदन्यथास्ति ॥ १८ ॥

आयव्ययौ शोधयितुं प्रवृत्ता
लेखान्गृहीत्वा नृपलेखकास्ते ॥
राज्ञार्पितं नानकवस्तुमूल्यं
मुहुर्मुहुः संघटयाम्बभूवुः ॥ १९ ॥

[1]शरयुगशशिनोय रूपकाणि
स्फुटमभवन्नधिकानि नानकस्य ॥
तदखिलमपहाय याचति स्म
भवतुमनास्त्वरितः सतामनुज्ञाम् ॥ २० ॥

नानकोजयरामश्च हीणावन्तश्च विस्मितौ ॥
पटुकृत्वः स्थितिं प्रार्थ्य स्थापयत्याहतुः स्म माम् ॥ २१ ॥
अहं पुनर्नानकमेतदाख्या-
मजानतां त्वं तदिदं समस्व ॥
न नानकीं त्वं जयराममेत-
मुपेत्य गच्छेर्विमनायमानौ ॥ २२ ॥

---

१. म्य—ख०
२. साधेः—ख०
I. शरयुगशशिनः = १४५ रूपकाणि।

मयैवं बोधितस्तस्थौ कृपापरवशो वशी
प्रार्थनाद्यधिसंरम्भः साधूनां कारणोद्भवः ॥२३॥
लेखकैस्तदखिलं निवेदितं
व्याजहार स निशम्य भूपतिः ॥
रूपकाणि[2] खनमोहयक्षिती[1]-
राददातु निजमप्यवञ्चकः[3] ॥ २४ ॥
पुनः प्रतिश्रुत्य निजाधिकारं
ददौ द्विजेभ्यः स धनानि धेनूः ॥
प्रसेदिवानस्य पवित्रकीर्तेः
सर्वः सुरत्राणपुरस्य लोकः ॥ २५ ॥
अनाग्रहस्तस्य निजे शरीरे
न दिव्यवस्त्राभरणादिवाञ्छा ॥
परस्य दुःखं विनिवर्तयिष्य-
न्नसौ यथाशक्ति समुद्यतोऽभूत् ॥ २६ ॥
महात्मभिर्भूरिधनैरजस्रं
स चाटुकारैरुपचर्यमाणः ॥
कदापि न स्वं[2] बहु मन्यते स्म
प्रीतिं परां साधुजने बभार ॥ २७ ॥
प्रियंवदः सस्मितपूर्वभाषी
दृष्टः स्वभाग्येन जनेन येन ॥
कृतार्थमात्मानमवेत्य लोके
न तं विसस्मार कदाचिदेषः ॥ २८ ॥

---

१. तदिक—ख. ।
२. करणो—क. ।
३. वंचक—ग. ।
1. ख-नभो-हय-क्षिती = १७००
2. "स्वं" इति पाठ. "क" इत्यत्र

प्रकृतिरम्यतनुं समशोभय-
तरुणिमाभिनवोऽतितराममुम् ॥
रुचिरमेव चिरं सुतपोवनं
सुरभिरेत्य नवप्रसवो यथा ॥ २९ ॥

मन्मथो वपुषि तस्य सञ्चरन्
यौवनेन बलवानपि ध्रुवम् ॥
लोहपञ्जरनिवेशितो बला-
त्केशरी-बल-पराक्रमक्षमः ॥ ३० ॥

विरज्यमानो विषयेषु नित्यं
युवापि वश्यैः करणैरकुष्टै[२] ॥
कालं प्रतीच्छन्नकरोत्स कृत्यं
न तत्परो वैतनिको यथैव ॥ ३१ ॥

वर्षद्वयं सज्जनहर्षदस्य
भक्ताधिकारं वहतो बभूव ॥
ततः सुतस्नेहसमाकुलात्मा
कालो दिदृक्षुः समुपागमत्तम् ॥ ३२ ॥

कालं समागतमसौ प्रणनाम मूर्ध्ना
मूर्धन्यजिघ्रदयमेतमथालिलिङ्ग ॥
मातुर्मुहुर्मुहुरपृच्छदनामयं[३] च
श्री नानकः सवयसां प्रतिवेशिनां च ॥३२॥

---

१. निर्ज—ग. ।
२. कृष्टः—ख. ।
३. दत्तामयं—क. ।

तं पूर्णचन्द्रमिव वीक्ष्य मनोभिरामं
कालः सरित्पतिरिवोत्कलिकाकुलोऽभूत्॥
उद्वेलतामगमदस्य च शर्मपूरा
रस्तैरिवोपचितै उज्ज्वलपूर्वपुण्यैः ॥ ३४ ॥

विश्रान्त कृतभोजनोऽकृत कथा पूर्वानुभूतानहूः
काल पुनमपृच्छदर्जितमभूत्किं किं व्ययं प्रापितम् ॥
पुत्रोऽनूत यदर्जितं समगमत्तत्सर्वमेव व्ययं
पित्रोक्तं गृहमेधिनापि भवता संन्यासिधर्मो धृतः ॥ ३५ ॥

नानकः सकललोकवदान्यो
नोत्ससर्ज[2] खलु यन्निजपित्रे ॥
स्नेहमस्य विनिवर्तयितुं तत्
स्वार्थ एव जगति प्रियताकृत् ॥ ३६ ॥

अथ कालमुपागतं गृहा
ज्जयरामः प्रणनाम सादरम् ॥
पदयोः प्रणता च नानकी
पितृवात्सल्यसमुद्गताश्रुभिः ॥ ३७ ॥

कालो ददौ स्वकन्यायै द्रविणं मोदकानि च ॥
आश्वासयामास चिरं वचनैः स्नेहकोमलैः ॥ ३८ ॥

जयराम उवाच बालका-
न्स्मृतवान्नो बहुभिर्दिनैर्भवान् ॥
इह तिष्ठ निजालयन्[3] जनान्
परमानन्दय इवामि मे मतः ॥ ३९ ॥

---

१. रिवोचित—ग।
२. नात्ससर्ज—ग०
३. मानयन—ग०

अभूत कालो भवतो व्यलोकयं-
श्चिरादद्दष्टात्प्रणयप्रवर्तितः ॥
तुष्टो गमिष्यामि गृहानतः परं
न शोभते मे स्थितिरत्र सत्तम ॥ ४० ॥

नानकोयमिह तिष्ठति कार्या-
स्त्वत्कृतादुपयमो भवतैव ॥
चिन्त्यते क्वचन चेदविगीत-
स्तन्मनोभिलषितं भविता मे ॥ ४१ ॥

गुणैरशेषैः परिभूषितस्य
तस्य प्ररूढो न निवारणीयः ॥
दोषो गुणो वैक उदारताख्यो
न मे मनो मुञ्चति तस्य चिन्ताम् ॥ ४२ ॥

राज्ञो नयेद् भूरिधनं व्ययं चे-
त्स क्रूरचित्तो यवनो भवत्सु ॥
किञ्चिद्व्ययेस्येद्विषमन्तदानः
कलङ्कपङ्कस्य न मुच्युपायैः ॥ ४३ ॥

बालसिन्धुमुपाहूय तस्य मित्रमलं परम् ॥
वदाव त्वमहं चापि राजकीयधनाव्ययम् ॥ ४४ ॥

नानको वदतु तातमवादी-
स्त्वं पितर्वदसि नानकमेवम् ॥
अत्र तेन न परस्य कदर्यो-
प्यन्यथा व्ययमनीयत नाम ॥ ४५ ॥

---

१. पस्ये—ग०
२. मुच्युपाय —ग०

आयव्ययविचारोभल्लेखकेः सह भूपतेः ॥
नानकस्यैव निरगाद्राजपार्श्वे धनं तदा ॥ ४६ ॥

जयराम उवाच तदा श्वसुरं
करपीडनमस्य गुरो भविता ॥
घटना तु महुन कृतास्ति मया
त्वयि यास्यति निश्चयपत्रमितः ॥ ४७ ॥

बालसिन्धुरिति नाम तवेदं
बाल एव किल यन्मतिसिन्धुः ॥
नानकं स्वसुहृदं कथयेथा
न व्ययं परधनस्य स कुर्यात् ॥ ४८ ॥

आहूयमाभिदधतुः सत्कारस्नेहपूर्वकम् ॥
जयरामश्च कालश्च कालप्राप्तमिदं वचः ॥ ४९ ॥

उदारता केयमहो परस्य
धनेषु दानव्यसनं किमेवत् ॥
प्रज्ञायते निष्ठुरचेतसो य-
त्कुर्वन्ति भूपाः कुपिता प्रसह्य ॥ ५० ॥

त्वं देशकालकलनाकुशलः सुमेध-
स्त बोधय प्रकृतिमेतु गृहस्थयोग्याम् ॥
पाणिग्रहाय हितबन्धुवधूसुताना
योपाय रक्षतु धनं किमिदं करोति ॥ ५१ ॥

अहमनदमथ प्रथा कथं वो
भवति परस्य धनं ददाति वेति[१] ॥
अधिगतमधिपस्य लेखकैः किं
व्ययितमनेन धनं विचारयद्भिः ॥ ५२ ॥

---

१. स्तेति—क०

घृतमपि न किल्याग्रिमन्ययोर्[1]मूदिति
परिभावनभूतिभूरि भीतिः ॥
अहमिह न वसामि भोगलुब्धा
प्रणयति बद्धमनास्तु नानकेन ॥ ५३ ॥

क इव पवनः कियत् क्षितीगः
कियदिह तस्य च भक्तवेतनादि ॥
भवति वितरणे न नानकस्य
द्रुततरमै[2]लिविलोपिरिक्तकोशः ॥ ५४ ॥

भक्ताधिकारे[1] लाभः कः किं ददाति च नानकः ॥
अनालोच्येति जल्पन्ति जाल्मा जानीथ तत्तया[3] ॥ ५५ ॥

अहं न जानामि सदा सहस्थितः
कुतस्त्यमेतत्प्रददाति नानकः ॥
वराटकं वापि सहस्रमागतं
गतक्लमः किन्तु लिखामि सन्ततम्[4] ॥५६॥

जगति सुकृतन· कृतावतारा
परिणतपूर्वतपःफला निगूढाः ॥
दुरधिगमदुराचरा हि तेषा-
मितरजनैः सकलाः क्रियाकलापाः ॥ ५७ ॥

---

१. माय्यपो—स०
२. मेलि—क०
३. ततया—क०
४. सतत—क०
1. भक्ताधिकारः—'पटवारी' इति भाषायाम् ।

न सम्भवोन्यस्तु धनागमस्य
सिद्धिः करस्पर्शकृतास्य[1] वा स्यात् ॥
सङ्कल्पमात्रादथनोन्मिपन्ति[2]
धनानि दानाय तदीयपाणौ ॥ ५८ ॥

धनानि यावन्ति महीतलेऽस्मिन्
तावन्ति तस्यैव वशे स्थितानि ॥
निरूपयिष्यामि न वाऽस्य तत्त्वं
पुरोद्य समावयतां जनानाम् ॥ ५९ ॥

अमुं मुहुर्मोहवशाद्भवन्तो
न खेदयन्त्वेप विरक्तचर्यः ॥
भाग्येन नस्तिष्ठति तावदत्र
धनं किमेतस्य पुरः किमन्यत् ॥ ६० ॥

किं म्लेच्छमृत्योभवदीदृशश्चे-
त्याशक्यतामित्यविमर्शनेन ॥
निगूहयन्ते हि महानुभावा
जगद्भयात्स्वं निविधक्रियाभिः ॥ ६१ ॥

यदा भ्रमः स्याद्धनखानचित्ते
विशोधयेत्तं निजलंखकान्त्याः[१] ॥
अस्माधिकं स्यास्यति तस्य पार्श्वे
भविष्यदेतद्भवता मयोक्तम्[२] ॥ ६२ ॥

---

1. कृतापवा—ख०
2. थोन्मिष—क०
१. लेखपाला—ख
२. मानिनि—

[१]इति मया गदिते गतविभ्रमौ
मनसि तच्चरिते कृतसंभ्रमौ ॥
व्रज विधेहि यथामति मामिति
प्रतिनिगद्य वचो विरता वयम् ॥ ६३ ॥

तलवंडीगते काले जयरामो महामतिः ॥
नानकस्य विवाहाय प्रयत्नमकरोत्कृती ॥ ६४ ॥

असंमतं नानकवर्मणस्तत्
स्वीकारितं किन्तु बलाद्भगिन्या ॥
कालस्य वंशस्थितये पृथिव्यां
वृद्धेन चैवं जयरामपित्रा ॥ ६५ ॥

[1]पक्खके [2]पुखरे कृतवासो
मूलचन्द्र इति बाहुजवर्यः ॥
स्वात्मजापरिणयाय स विप्रं
प्रोहिणोत् विधृतनिश्चयपत्रम् ॥ ६६ ॥

वर्णवंश्यादिकं सर्वमेवोचितं
नानकस्यानया कन्ययेति द्विजैः ॥
बोधितः पारमानन्दिरानन्दितः
कालमामन्त्रयिष्यन् जनं प्रैषयत् ॥ ६७ ॥

---

१. दिनरातम्—क०

A. श्लो० ५० तः ६२ यावत् जयरामः कालश्च नानकं धनविषये राज्ञो विचारं, राज्ञो धनाग्रहम्, धनव्यये कोपंच दर्शितवान ।

1. पक्खके = तन्नामग्रामे ।
2. पुखरे = सुन्दरपुरे ।

२. रिणाय—क०

३. पारमानन्दमा—क०

[1]मूलाचोणेति [1]विख्यातः पत्तके क्षत्रियर्षभः ॥
तत्कन्यायाः परिणयो नानकस्यावधारितः ॥ ६८ ॥

यूयमायात सर्वेऽपि कुलाचारविधित्सया ॥
समायोऽनुमुदे कालो लेख्यार्थमिति कीर्तयन्[2] ॥ ६९ ॥

## युग्मम् ॥

गीतिमङ्गलमुदाऽस्थ बभूवुः
तस्य सद्मनि सगोत्रहितस्य ॥
सज्जता समजनि प्रयियासो—
राशु किञ्च सुररक्षपुराय ॥ ७० ॥

[3]कृष्णो नानकमातुलोऽस्य जनको रामः स्वकीयैर्वृतः
कालो लालपुरस्सरो निजजनैस्तद्वैणिको मर्दनः ॥
आदित्ये निरगुर्बृहस्पतिदिने प्राप्ता रथैरुत्तमै—
र्देवत्राणपुरे परस्परमभूदालोकनादुत्सवः ॥ ७१ ॥

नानकं नानकीं दृष्ट्वा जयरामं च तेऽखिलाः ॥
प्रसेदुराशिषः प्रोचुरालिलिङ्गुर्यथायथम् ॥ ७२ ॥

मातामहादय उदीर्णमुदस्तदानी—
मुद्भ्रम्य नानकशिरस्यकिरन्वसूनि ॥
दासा परे परिजना अपि तान्यगृह्णन्
ज्योतींषि शीतकिरणस्य यथा चकोराः ॥७३॥

---

1. मूलाचोण = क्षत्रियप्रसिद्धि० ।
2. सुररक्षपुरम् = ग्रामनाम सुरणायपुरस्य पर्यायवाच क नाम ॥
१. चोणेतितिनिस्था—क०
२. कीर्तयन्—ग०
३. कृ भो—ग०

विश्रम्य तत्र विहितातिथिसत्क्रियास्ते
जग्मुः परेद्य सुपुरीमजितेन गुप्ताम् ॥
प्राप्ताः सदेशमवदन्निधिमिश्रमङ्ग
त्वं मूलचन्द्रनिकटे कथयागतान्नः ॥७४॥

विप्रो गतः स तमुवाच तवागतास्ते
कालादयः किल कुलाचरणाय मान्याः ॥
आयान्तु मे मुदितमित्यभिधायमूल-
स्तानानिनाय[३] परिरम्य नमन् यथावत्[४] ॥७५॥

कुलाङ्गनानां कलगीतिरेव
तोषाय तेपामलमास्त तावत् ॥
किं वर्ण्यतां तत्सहकृत्वरी चेत्
संभावना मूलकृता विशिष्टा ॥ ७६ ॥

[1]सुलक्षण्या विवाहाय वृते नानकवर्मणि ॥
[2]मूलचन्द्रेण सर्वेपि सामञ्जस्यात्सुखावहाः ॥ ७७ ॥

भोजनासनसत्कारैर्नृत्यगीतमहोत्सवैः ॥
तोषिता स्तत्र ते चक्रुः कन्यासम्माननादिकम् ॥ ७८ ॥

---

1. सुलक्षणी = नानकपत्नी ।
2. मूलचन्द्रः = पिता सुलक्षण्याः ।
१. कदा—ख०
२. निना—ख०
३. नमन्यथास्त्वमू—ख०
४. सुखाभवन्—ख०

प्रेमालापान् सत्परीहासपूर्वा-
नन्योन्येन ज्ञातयः प्रीतिभाजः ॥
चक्रुर्दैवात्सङ्गता कार्यभारैः
स्वैः स्वैर्नानानीवृतः सेव्यमानाः ॥ ७९ ॥

मूलमापृच्छय मुदिता वरपक्ष्या ययुर्गृहात् ॥
द्वयेपि चक्रुः संभारानुद्वाहाय महोत्सवान् ॥ ८० ॥

उत्फुल्लपङ्कजदृशं तपनीयगौर-
माजानुबाहुमतिविस्तृतवक्षसं च ॥
नत्वा स्थितं सदसि नानकमन्वयक्तं
राजैकदा कथय किं तव नाम सौम्य ॥८१॥

मां नानकनिराकारं कीर्तयन्ति महीपते ॥
इत्युक्ते तेन सोयोचम्नास्यार्थेवगतो मया ॥ ८२

[1]पारसीकवचनैर्जयरामो
म्लेच्छशास्त्रगदितोपनिषद्भिः ॥
बोधयन् यवनराजमवादी-
च्छृण्वतां सकलतत्त्वसुधानम् ॥ ८३ ॥

चैतन्यं हि गुणक्रियाकृतिपरिच्छेदैरनास्कन्दितं
सत्यं दृश्यमिदं जगद्बहुविधं यन्मायया कल्पितम् ॥

1. परसियनभाषायामप्युपनिषदां प्रमाणं ददद्वदज्जयराम इति भावः ।
१. देवा—क०
२. पर पक्ष—ख०
३. प्रत्युक्ते—ख०
४. तद्विधुधानाम्—ख०

जीवो ज्ञानदशा तदेव न परो ज्ञानी जनो लीलया
कुर्वन्नस्यो[१][2]खिलोद्यमं न मनुते भेदं स्वतो ब्रह्मणः ॥ ८४ ॥

तन्निश्चित्य निराकारो नानकः कथितोऽमुना ॥
[1]आहार्ये नामरूपे हि चैतन्यं तन्निराकृतिः ॥ ८५ ॥

दुर्जनेषु यवनेषु हसत्सु
सज्जनेषु परितुष्टमनस्सु ॥
पाणिपीडनममुष्य बभूव
कश्चिदित्यवनिपः समपृच्छत् ॥ ८६ ॥

नेत्यभाषत ततो जयरामः
सस्मितं पुनरुवाच नरेन्द्रः ॥
ज्ञानगर्भितगिरश्च विरक्ताः
किं न वक्त्य्यमलब्धवधूकः ॥ ८७ ॥

ज्ञानिनो [3]गगनदत्तपदाग्रा
[4]ब्रह्मवादनिनदैः कृतहेषाः ॥
कामिनीजनकटाक्षकशाभि-
स्ताडिताः पथि ऋजौ प्रचलन्ति ॥ ८८ ॥

---

1. यदा नानको निराकारस्तदा कथं तस्य रामरूपत्वे-
ति शङ्कां समाधत्ते जयरामः ॥
2. किल पाठो युक्तः ।
3. शीर्षासनं कुर्वन्त इति भावः ।
4. सततम् 'ॐ' इति ब्रुवन्तः ।
१. रमाखिलो—क॰

को न मोक्षनगरं प्रविविक्षेत्[1]
इन्द्रियाणि यदि न स्युरुदाराः ॥
रक्षिणो विषयपाशनिबद्धा-
प्रक्षिपन्ति मनुजान्भवकूपे ॥ ८९ ॥

वाग्भिरेव पदवी न दवीयें[2]-
स्यङ्कर्मभिरियं दुरवापा ॥
जीवतैव[3] समुपैति[4] विरोधे
कः स्वरूपनिगमाय यतेत ॥ ९० ॥

भिक्षुकोऽधिगतमानसराज्यो
भिक्षणं यदि जहाति विमूढः ॥
क्षीयते स जठरानलतापै-
रापदं व्रजति नान्यदुपैति ॥ ९१ ॥

स्वर्णनिर्मितरसायनयोगा-
योगसाधनविमोक्षपदव्यः ॥
शास्त्रकारकथिता वितथाः किं
किन्तु सोऽस्ति विरलोऽत्र कृती यः ॥ ९२ ॥

कथ्यते स्म कथितं सदसीत्थं
चाटुकारनिवहो बहुराज्ञः ॥
नानकस्तदनु सिन्धु गभीरो
ज्ञाननिर्मलमनाः समचष्ट ॥ ९३ ॥

---

१. प्रविविशु—क
२. दवीयं—क.
३. जीवतेन—क.
४. समर्पति—क.

सत्यमेव समभापि भवद्भिः
श्रोत्रतं पदमदः प्रतिपित्सोः ॥
विघ्नजालबहुलाकिलचर्या-
पातमत्र चपलः समुपैति ॥ ९४ ॥

निरावरणमानन्दमनुभूतवतः पुरः ॥
किमुर्वशी सुकेशी वा वराकी किं जगत्त्रयम् ॥ ९५ ॥

रक्षितेपि चतुरङ्गमभूमिः
सुस्थिते करिणि सत्तुरगेपि[2] ॥
कश्चिदेत्य सुभटो रणरङ्गे
खड्गमुत्सृजति नायक एव ॥ ९६ ॥

यो ब्रह्मवादमुखरः स खरो नरो न
मूढेषु किं श्रुतिशिखास्वरसैर्विकीर्णैः ॥
स्वान्तःसुखाय खलु तत्त्वमिदं विचेयं
देयं सते मतिमते भवभीरवे वा ॥ ९७ ॥

[1] राजा स्वप्ने भिक्षुतामागतश्चे-
त्कश्चित्कालं तापमाप्नोति दैन्यात् ॥
उन्निद्रोयं स्वं स्मरन्भूतकत्वं
स्मेरो भूयो भिक्षयावर्तता किम् ॥ ९८ ॥

न ज्ञानिनः श्रद्धमुदेति किञ्चित्
क्रियासमैव व्यवहारतन्त्रे ॥
विकुर्वतेन्ये[3] क्षतिलाभशोकै-
र्मिथ्येति न ब्रह्मविदो व्यथन्ते ॥ ९९ ॥

---

१. वच्मा कि कि—क.
२. तुरगवरेपि—क.
३. प्रेक्षति—क.
1. यदि राजा स्वप्ने भिक्षुर्जायते तदा समुत्थितः स कि पुनर्भिक्षां चरितुमिच्छति ?

न निगूहयितुं शक्या कृत्रिमा ब्रह्मवादिता
रागद्वेषादयश्चारा विवृण्वन्ति क्षणे क्षणे ॥ १०० ॥

यत्रास्ति [1]तेषह्नुवते नितान्तं
न यत्र ते ज्ञापयितुं यतन्ते ॥
तद्ब्रह्म विद्येयममन्दभाग्यैः
स्वर्णक्रियेवाधिगतास्ति कैश्चित् ॥ १०१ ॥

नृत्यगीतमिव जीवनहेतुः
शिल्प मे तदपि न क्षितिपाल ॥
कीर्त्यतां प्रभुजनस्य यदग्रे
त्वं सुधीरसि तदुक्तमिहेपत् ॥ १०२ ॥

गिरोगुरोश्चनः श्रुत्वा निःस्पृहस्येति भूपतिः ॥
कर्मठा यवनाः सभ्याः सर्वे मत्सरिणोऽभवन् ॥ १०३ ॥

कालेतीते तेऽवदन्भूमिपालं
सम्पत्या त्वं नानकं नातिशेषे ॥
ब्रह्माद्वैतं मन्यते स्वं त्वदीयै-
रिक्थैः ख्यातः कर्णवत्स्वर्णदाता ॥ १०४ ॥

श्रुत्वेति राजा प्रतिभापते स्म ता-
भाग्यस्य नाहं प्रभुरस्मि कस्यचित् ॥
जग्राह यत्किन्तु मदीयरूपकं
व्ययं ततस्तस्य विदन्तु लेखकाः ॥ १०५ ॥

अतिप्रवीणोऽखिललेखकाना-
मूचे ततो यादवरायनामा ॥

---

१. प्रुह्न—क.
२. गुरोपनः स्पृ—ख.
३. तस्तस्य—क० ।
1. उभयत्र ' ष + ह्" इत्यत्रायमेव पाठः । परन्त्वयं न युक्तियुक्त इति ।

पुण्यस्य मूल्यं नृपतेश्च वित्तं
राजाज्ञया नानक योजयस्व ॥ १०६ ॥

ओमित्युक्त्वा नानको लेखकैः स्वै-
स्तल्लेखानां स्वस्य लेखस्य चापि ॥
चक्रे सम्यग्योजनामिन्दुवह्नि[1]-
वह्नि[१]द्रव्यं[2] नानकस्यात्यशेत ॥ १०७ ॥

लेखकविद्यां यद्यपि यादवरायो[2] दुराशयस्तेने ॥
किन्तु न शेके भूते छलः पुरो धीमतां क्रमते ॥ १०८ ॥

धनखाननृपस्य पुरोऽकथय-
त्स च नानक एव महासुजनः ॥
विधुवह्निगुणास्त्वयि[4] तस्य न ते
नृप धारय तं सकदर्थमपि ॥१०९ ॥

निशम्य तद्भूमिपतिः प्रसन्नः
प्रसादवस्त्रैस्तमलञ्चकार ॥
ऊचे स्वकीयं च गृहाण सौम्य
द्रव्यं सहस्रत्रयमस्मदीयम् ॥ ११० ॥

ततो भवानीदासेन[3] कोशाध्यक्षेण तत्क्षणम् ॥
नानकाय नृपेणोक्तं द्रविणं प्रतिपादितम् ॥ १११ ॥

---

१. वह्नि—० ।
२. वह्निद्रव्यं—क० ।
1. इन्दुवह्निर्वह्निः—१११ ।
2. यादव रायः—लेखकः ।
3. भवानीदासः—लेखकः ।
4. विधुर्वह्निगुणाः—२११ ।

धूलिः खलानां मुख [1]आससज्ज
स्वभावविघ्नो[2] विरराज सम्यक् ॥
आकाशकल्पः किल कालसूनुः
यशः शशाङ्कप्रसरावदातः[3] ॥ ११२ ॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
नृपसम्प्रसादो नाम चतुर्थः प्रस्तावः ॥

---

१. प्राससज्ज—ख० ।
२. स्वभावविघ्नो—क० ।
३. प्रस एष—ख० ।

## पञ्चमः प्रस्तावः

हंसस्थिता कुमुदकुन्दहिमावदाता
वीणागुणेषु तरलाङ्गुलिराविरास्ताम् ।
भक्तस्य मे हृदि तमांसि विधूनयन्ती
शक्तिः सपुस्तककरा परमस्य पुन्सः ॥ १ ॥

कन्यां तुलादिचतुरः प्रविहाय कृष्णां
[1]भीमादिकानिव निरीक्ष्य हतं प्रतापम् ॥
पूर्वोत्तरां दिशमुपेत्य चिराय शीतं[1]
स्थानं युधिष्ठिर इवानुगतं[2] निनाय ॥ २ ॥

परागपिष्टातमरेण रञ्जयन्
दिग्वारनारीमुखमुन्मुखः परम् ॥
पिकालिगीतौ [2]सुरभिः समाययौ
कुसुम्भकौसुम्भपटो[3] विटो यथा ॥ ३ ॥

ताम्रैराम्रदलैरुदीतमुकुलैस्तत्पल्लवग्रन्थिभिः
मत्तानां परितः कुहूरिति मुहुः पुंस्कोकिलानां कलैः ॥
पुष्पेषु स्फुटरेणुराञ्जितमुखैर्गुञ्जद्भिरिन्दिन्दिरैः
स्वान्तं हन्त तपस्यतामपि तदा लोलं वसन्तो व्यधात् ॥ ४ ॥

---

१. मीनादि—स० ।

२. गमं—क० ।

1. शीतकालः उत्तरां दिशं गतः ।

2. वसन्तर्तुः समागतः ।

3. कुसुम्भो रागविशेषो येनोत्तमवसनसंस्कारे पटो रज्यते तेन रक्तः पट इव पीव इति भावः ।

आशासु गन्तुमनसा सहसोपगूढा
गन्धेन केरल वधूकुचकुङ्कुमानाम् ॥
गोदावरी विकचपङ्कजरेणुरक्ता
वाता वधुर्मलयशैलकृतावताराः ॥ ५ ॥

फुल्लैः पलाशविपिनैरपनीतपत्रै-
रङ्गारराशिरुचिरैर्हृदयानि दारात् ॥
ज्वालां मुहुर्विरहिणामलमन्त कान्ता
स्नेहेन हन्त नितरां परिभावितानि ॥ ६ ॥

[1]पाटलारुणकाञ्चनारजं
माधवीललितसप्तलाभवम् ॥
अत्यवर्तत सुगन्धमात्रजो
योगियूथमिव नानको वशी ॥ ७ ॥

कुसुमावचये मृगीदृशो
निचितास्याः श्रमवारिबिन्दुभिः ॥
विपिने विपिने विलोकिताः
पथिकानां हृदयान्यपाहरन् ॥ ८ ॥

स्मर नरपतिशासनं समन्ता-
त्पिकनिकटे परिघोषयत्यदोषम् ॥
त्यजतु किमिति मानिनी न मानं
[2]प्रविशतु किं न विलासवेश्ममुग्धा ॥ ९ ॥

---

१. कुंकुमाना—क० ।
२. रंगार—ख० ।
1. आतरण इति पाठो युक्तः ।
2. उदाहितमतप्रपञ्चप्रपञ्चनेप्यस्मिन् दृश्यतां शृङ्गाररसचेष्टा ।

आर्त्विज्यमुचममुपेत्य चिरायखिर्गैः[1]
[2]भृङ्गस्रुवानुपवहद्भिरनङ्गयज्ञे ॥
अश्लीलगीतिनिगमस्य निबद्धवर्गैः
पारायणं प्रवितथं पथि पथ्यकारि ॥ १० ॥

नवं देशमुपादाय राजेव सुदुरासदः ॥
क्रमेण कर्कशकरः प्रतताप प्रभाकरः ॥ ११ ॥

पांशुः स्पृशन्नपि पदे परितापहेतु-
र्व्याजेन दुर्जन इवातितरां सुशीलः ॥
सन्तापिनोऽपि दिवसाः परिणामरम्या[3]
दीर्घास्तपोऽप्यतिकरा इव ते बभूवुः ॥ १२ ॥

चर्चाचन्दनचन्द्रकर्दमकृता पुष्पद्रवैर्लक्षणं
मालामल्लिशिरीषपद्मरचिताः शाला उशीरोद्भवाः ॥
अस्त्वेतत्सकलं निदाघशमनं तत्कालतापापहाः ॥
कान्ताः किन्तु समुन्नतस्तनभरा नीता भुजाभ्यन्तरम् ॥ १३ ॥

आजीविष्यन्पान्थाः कथमिव वियोगानल शिखा
विधुन्वैर्हृत्पद्मैर्यदि किल कृपाक्रान्तमनसा ॥
प्रपापाली[१]लीलास्मितमतनुनेत्रा ध्वनिहितं
समीक्षिप्यद्धात्रा पथि पथि न जीवातु सुहितम्[२] ॥ १४ ॥

मेघार्यैर्हलितेन्द्रनीलमलिनैराकाशमाच्छादयन्
फुल्लैरर्जुनसर्जनीपकुटजैः सर्वा दिशो वासयन् ॥

---

1. भृङ्गैरिति युक्त पाठः ।
2. 'क" इत्यत्र "स्रु" इति पाठः "स" इत्यत्र 'स्रु" इति पाठः परन्त्वयुक्तिः ।
3. तुलना="दिवसा परिणामरमणीया."—अभि० शाकु०

१. पालोला—क०
२. विहितम्—ख०

मत्तांश्च तककेकिदर्दुरगणान्कुर्वन्नखर्वस्वरान्
आषाढः समुपेत्य सो धुरिवनं तापं जनस्याहरत् ॥ १५ ॥

अथ नानकस्य निरधारि शुभः
शुचि शुक्लवारणतिथी गणकैः ॥
करपीडनाय समयः सुखदः
कुलयोर्द्वयोः सुचिरमुत्सवकृत् ॥ १६ ॥

जयरामस्य पत्रेण तद्विज्ञापय हृष्टयोः
मातापित्रोर्नानकस्य हृदि हर्षो ममौ न स. ॥ १७ ॥

सम्बन्धिबान्धवसगोत्रनिमन्त्रणाय
दूतान्निदेश्य मुदितो निजगाद[1] कालः ॥
चोलाररायनिकटे तव किंकरस्य
भावी प्रभोः परिणयः शुचि शुक्लपक्षे ॥ १८ ॥

श्रुत्वा ततस्तद्गृणात्स किमेवमुक्त
श्रीनानको न यदिमं व्यपदेशमर्हेत् ॥
प्राणप्रियो गुणनिधि. स हि मे महात्मा
[1]कैकर्यमस्य सकलोऽपि जनो विदध्यात् ॥ १९ ॥

आनन्दथुर्गम महानधुना विवाहं
श्रुत्वा सुतस्य तव सज्जनसंसदिन्दोः[2] ॥
हस्त्यश्वपत्तिशिविकारथतूर्यभूषा
केत्वादिकं यदुचित तदितो गृहाण ॥ २० ॥

वरयात्रामहं कुर्यां किन्तु सैन्यस्य भूरिणः ।
सम्बाधे[3] सति बन्धूनां सत्कारे व्यग्रता भवेत् ॥ २१ ॥

---

१. मुदितान्निजगाद—क०
२. संसदिदो —क०
३. सम्बादे—क ।
1. किंकरस्यभावः ।

कालोऽवादीदजितरधाव:[1]
कन्यापक्षे सकलधुराणः ॥
अस्मत्पक्षे त्वमसि महात्म-
न्नन्यूनत्वं कथमपि मावि ॥ २२ ॥

कन्यापिता मूलचन्द्रः पक्षके[2] जितरक्षितः ॥
तलवन्द्यां[3] तव विभो बाहुच्छायाश्रिता वयम् ॥ २३ ॥

त्वमिह रक्ष पुरीमनुमन्यतां
व्रजतु जन्यजनो यदभीप्सितम् ॥
तदखिलं कलयामिभवद्यशः
शशधरस्य न कुत्र महोदयः ॥ २४ ॥

घोलाररावेण विसर्जितास्ततो
विचित्रवस्त्राभरणा समुज्ज्वला ॥
नानाविधं वाहनमाश्रिताः शुभं
प्रतस्थिरे कालपुरस्सराः शनैः ॥ २५ ॥

मृदङ्गमञ्जुध्वनिभिर्गीतिभिः कुलयोपिताम् ॥
वाडवानां शुभालापैः[4] सा यात्रा शुशुभेतराम् ॥ २६ ॥

इन्द्रसेनो नन्दलालः परसारामनामकः ॥
फिरंदाख्यो जगद्रायो लालचन्द्रो महामनाः ॥ २७ ॥

जटमल्लो जगन्मल्लो मल्ल शीतलपूर्वकः ॥
हरिपूर्वोदयालुश्च रायो लालो विनिर्गताः[5] ॥ २८ ॥

---

१. अजितरधावः = कन्यापितामहः ।

२. पक्षके = पक्षकपत्तने ।

३. तलवन्दी = ग्राम ।

४. लापै—क०

५. पिनिर्गता—क०

1. इन्द्रसेनः, नंदलाल, परसाराम, फिरंद, जगद्रायः लालचन्द्रः, जटमल्लः, शीतलमल्लः हरिदयालः लालरामः एते वरमात्रिका आसन् ।

## युग्मम्

सर्वे सुरत्राणपुरं प्रयाताः
समागमोभूत्स्वजनैः समग्रैः ॥
नानाम कालं जयरामवर्मा
स नानकोऽप्यानपि बन्धुवृद्धान् ॥ २९ ॥
कालं च कुलवृद्धांश्च जयरामः प्रमाणयन् ॥
सामग्रीं सजयामास वरयात्राविवाहयोः ॥ ३० ॥
हरिदयालुमवन्दत नानक-
श्चरणयोः सुचिरं धृतमस्तकः ॥
निनयमस्य विलोक्य स पिप्रिये
गुणगणांश्च पुरा स्वनिरूपितान् ॥ ३१ ॥
श्रीनानकस्य जयजीव चिराय वत्से-
त्याशीर्वचः स सुमना बहुशः प्रयुज्य ॥
[1]सौनस्तिकीर्विधिवदारभत क्रियास्ताः
वैवाहिकीश्च जयरामनियुज्यमानः ॥ ३२ ॥
मङ्गलप्रतिसरेण महात्मा
पाणिपङ्कजगतेन मनोज्ञः ॥
गीतिमिश्च मुरजध्वनिमिश्च
स्त्रीजनैः स्नपित उल्लसितोऽभूत् ॥ ३३ ॥
सम्यग्निनान्धवमनामिधरा सुरेभ्य.
श्रीनानको वसनमाभरणञ्च दिव्यम् ॥
पुंस्त्रीसमज्ञसमदादपि सेवकेभ्यो
वाञ्छानुरूपमुपनम्रनिचिन्तितार्थैः ॥ ३४ ॥

---

1. सौवास्तिकी = विवाहात्पश्चात्क्रियाविधि ।

१. सजुयामास—ख०

मणिमयाभरणो न परिष्कृता
कुलपुरन्ध्रिगणैरथ नानकी ॥
व्यधितमङ्गलगीतिमहोत्सवैः
परिणयोचितसंभृतिसज्जताम् ॥ ३५ ॥

वस्त्राणि सुमहार्हाणि विचित्राणि तनूनि च ॥
नानको धनखानाय ददौ स प्रासदत्परम् ॥ ३६ ॥

धनखाननृपः सहगन्तुमना
जयरामनिवारित आस्तनिजाम् ॥
ध्वजिनीं निदिदेश च दृष्यवरं[1]
नगरीव यदा वृणुतेऽस्य महीम् ॥ ३७ ॥

अनुक्त एव क्षितिपालवल्लभो
जनः समग्रोऽपि जगाम कौतुकात् ॥
विवाह शोभामवलोकितुं परे
सहस्रशो नानकवर्मणोऽद्भुताम् ॥ ३८ ॥

नटनर्तकवन्दिमागधा
बहुरूपे रमयन्ति ये[2] प्रभून् ॥
गणिका गुणिनस्तथापरे
शतशो जग्मुरथैन्द्रजालिकाः ॥ ३९ ॥

दध्यक्षतैस्तिलकितोधृत[3]मल्लिमाल्ये[4]
नीराजितः कुलवधूभिरुदीतगीतिः ॥
श्रीनानको हरिदयालुमुखैर्द्विजेन्द्रै-
[5]राशासितः श्रुतिपथैरथ सुप्रतस्थे ॥ ४० ॥

१. दष्ट—क०
२. ते प्रभून्—क०
३. धृतमल्ल—क०
४. माल्यं—क०
५. राशंसितः—ख०

कुलाचारादर्शां मणिपुरटपर्याणरुचिरां
समारूह शुभ्रां कनकनिलसच्छेखरधरः ॥
वसान· काश्मीरं वसनमतिसूक्ष्मं तनुरुचा
सुवर्णस्पर्धिन्या जननयनलेह्यः स शुशुभे ॥ ४१ ॥

तनुकौंकुमवस्त्रसंवृतो
मणिहेमाभरणैर्महोज्वल. ॥
निदिशन्नधिकारिणोऽखिलान्
जयरामः शुशुभे गजस्थित. ॥ ४२ ॥

करिणमतिमहान्तं संश्रितोरूपकाणि
प्रतिपथमयमुञ्चन् भिक्षुकेभ्यः कराभ्याम् ॥
तनयमनुगुणं त रामचन्द्रस्य पश्यन्
दशरथ इव कालो निर्भरानन्दमापत् ॥ ४३ ॥

स्वस्य यद्वसनमाभरणं च
तादृशं मम चकार महात्मा ॥
मत्तनागमधिरुह्य महान्त
सेवितोहमगमं बहुभृत्यैः ॥ ४४ ॥

मां विलोक्य मनुजाः प्रजजल्पु
कोपि याति वरसोदर एषः ॥
नानकस्य सचिवोयमतोन्ये
[1]सैन्यकोपमिति तत्र परे च ॥ ४५ ॥

अधिगत· शिविकां स हिरण्मयीं
हरिदयालुरशोभत पण्डितः ॥
परिणये दशकन्धर विद्विषो
गुरुवशिष्ठ इवातिप्रतिष्ठितः ॥ ४६ ॥

---

१. पन लेह्यः—क० लेत्व —ख०

२. सहि—क०

1. एकत्र "सैन्यगो" इति अपरत्र "सैन्यकोप" इति परन्तु "सैन्यप." इति युक्तः पाठ. ।

शिविकारथहस्तिवाजिनां
यदभीष्टं तदुपाश्रितास्ततः ॥
अचलन्मुदिताः स चामयः
सकन्नः कौङ्कुमवाससोज्ज्वलाः ॥ ४७ ॥
मर्दनो वैणिको वैणिकैर्भूरिभिः
सङ्गतो वादकाध्यक्षतान्यागतः ॥
वीणया वर्णयन्नानकीयं यशो
हस्तिना प्राचलत्स्वर्णपट्टोज्ज्वलः ॥ ४८ ॥
गजे क्रमेलके सेतौ ध्वादुन्दुभयोऽनदन्
काहलावेणुवीणाश्च मृदङ्गाश्च समन्ततः ॥ ४९ ॥
मत्तद्विरेफकलगीतिमनोहराणि
पुष्पैर्नतानि विपिनानि विलोकमानः ॥
ग्रामान्पुराणि रुचिराणि ययौ महत्या
श्रीनानको जनतया सहितः सुदूरम् ॥ ५० ॥
नृत्यद्भिः सद्गीतसक्तैस्तदन्यैः
विक्रीणद्भिः पण्यमन्यैरथेषु ॥
हर्म्याकारैर्हस्तिभिर्जन्यवृन्दं[1]
दृष्ट्वा[2] मेने जङ्गमं पत्तनं[3] तत् ॥ ५१ ॥
रागिरायः[4] पथिपथि वृक्षमासजन्त्यो
गुल्मिन्यो निपतमुपादिशन्नमुष्य ॥
संसारे किमु विरसोऽसि शीघ्रमेव
तारुण्यं सफलय कामकेलिभिस्त्वम् ॥ ५२ ॥

---

१. जन्य—क०
२. दृष्टा–ख०
३. पतनं—क०
४. रागीरायः—क०
रागिराय इति नाम ।

ग्रामे ग्रामे पत्तने पत्तने च
[1]वृद्धश्रेणिर्जन्ययात्रां दिदृक्षुः ॥
चित्राकारः सक्तचिचेक्षणत्वा-
ल्लोके लोकोऽलोक्यत प्रत्युतैभि. ॥ ५३ ॥

दृष्ट्वा महानगरसीम्नि नदी सुतीर्था-
मुत्फुल्लपङ्कजपरागपिशङ्गिताम्बु ॥
आज्ञापयन्नधिकृतान् जयरामवर्मा
स्थित्यै जनस्य करिणोवरुरोह धीरः ॥ ५४ ॥

पूर्वमेव स्तनकैः समीकृत
स्थापितोरुपटमंडपं[2] ततः ॥
संस्तृतं विविधरम्यसंस्तरै-
र्नानको गृहमिवाविशद्वशी ॥ ५५ ॥

गृहा [3]र्वभुर्वस्त्रमयास्तदंतरे
समन्तत. पङ्कजकोरका इव ॥
चिरन्तनीवात्र समस्तवस्तुभि-
र्वणिग्वरैः सद्विपणिर्व्यतन्यत ॥ ५६ ॥

[1]स्नातानुलिप्तेषु जनेषु तत्र
स्वस्थानसंस्थेषु [4]गतक्रमेषु ॥
भक्ष्यं च भोज्यं वसु गन्धमाल्यं
ददौ यथा स्वं जयरामवर्मा ॥ ५७ ॥

---

१. वृद्धवेणि—ग०
२. मंडपन्ततः—क०
३. बभुव—ग०
४. गृहीत—ख०

क्रय्यं क्रीणाति यः कश्चित्तस्मै दत्तयथेप्सितम् ॥
मूल्यं गृहाण मत्कोशात् जयरामोव्रदद्विग्रः ॥ ५८ ॥

आज्ञापयद्वारवधूकदम्बं
महाजनानां शिविराण्युपेत्य ॥
तथा हि तौर्यत्रिकमाचरेत
यथा मनो मोहमुपैत्यमोपाम् ॥ ५९ ॥

पानभोजननिवाससुखेन
प्राकृताश्च पशवश्च सुतृप्ताः ॥
अन्यतो जिगमिषन्न कदाचित्
तद्विहाय शिविरं सुवरीयः ॥ ६० ॥

नानाविनोदवचनै र्बहुभिः कथाभिः
तौर्यत्रिकेण रजनीमतिवाह्य तत्र ॥
प्रातश्चचाल बरयात्रिजनो गभीर-
भेरीनिनादपरिपूरितदिग्वितानः ॥ ६१ ॥

भेरीरवाकर्णनहृष्टचित्ता
ग्राम्या यथो दूरनिवासिनोपि ॥
जपादुपागत्य विलोक्य शोभां
स्वं मेनिरे जन्म जगत्यमोघम् ॥ ६२ ॥

वसतयः[1] पथि जन्यजनस्य ताः
समभवन्नधिकाधिकशर्मदाः ॥
प्रतिजनं जयरामनियोजितै-
रधिकृतैर्यदभीष्टमपृच्छत ॥ ६३ ॥

---

१. द्वारवधू–क०
२. तोजिगमि–ग०
३. विटोद–ग०
1. वसतिः ग्रामः वसन्तियत्रजना इत्यर्थः ॥

सरांसि सम्फुल्लसरोरुहाणि
सरस्वतीस्वादुजलाः सुतीर्थाः ॥
वनानि पुष्पैर्विचित्रामितानि
विलोकयन्तो मुदिता ययुस्ते ॥ ६४ ॥

योजनव्यवहितां वरयात्रां
मूलचन्द्रमवदन्नथ चाराः ॥
पक्षके समुपगम्य स ऊचे
[1]संन्यधात्स इह जन्यसमाजः ॥ ६५ ॥

आहूय सूनुमगृणादजितोरधाख्यो
वृद्धोऽस्म्यहं किमपि कर्तुमनीश एषः ॥
त्वं पुत्र मूलतनयोपयमे यतस्व
न न्यूनता भवति येन कथंचिदस्य ॥ ६६ ॥

हितः पितर्माचष्ट तेजस्ते तरुणं विभो ।
*साधयिष्यत्यशेषं यदहमभ्युदयस्ततः ॥ ६७ ॥*

हितोरधावः स्वजनानवादी-
दायातु सेना चतुरङ्गिणी मे ॥
अहं वरस्यानयनाय यामि
मूलेप्सितं यूयमिहाचरन्तु ॥ ६८ ॥

चातुर्वर्ण्यं पक्षकाधिर्जगाम
सेनायुक्तः सन् मनुष्यैर्हितश्च ॥
भेरीध्वानैर्धूनिताशा विताना
नानायानैर्जन्ययात्रां ययुस्ते ॥ ६९ ॥

---

१. सन्य—क०

[1]इतो नर्तयन्तो वराश्वान्प्रवीणा-
तत्तो वाहुला वाजिनः क्रीडयन्तः ॥
नमच्छेखरैस्ते शिरोभिः प्रणेमु-
समाजग्मुरन्योन्यमानन्दभाजः ॥ ७० ॥

[2]उष्णीषाग्रान् लम्बमानान् सुवर्ण-
दाम्ना सार्धं किञ्चिदावेष्टयन्तः ॥
आजानेयान्नर्तयन्तो युवानो
वक्रैर्वेषैः कोञ्चिदूहुः श्रियं ते ॥ ७१ ॥

नत्याश्लेषो क्षत्रियज्ञातिमुख्यै-
रास्तां प्रीत्या पक्षयोः सस्रजद्भिः ॥
संश्लेषोऽभूत्प्रीतिमात्रा हि तेन
सान्द्रानन्दं पारमानन्दिना च ॥ ७२ ॥

संगम्य जग्मतुः स्वच्छे वाहिन्यौ वितते ततः ॥
सुलक्षणी श्रियांभूमिं² मूलचन्द्रमहोदधिम् ॥ ७३ ॥

पत्तयः करिहयेषु पताका
वादकाश्च रथराजिरपूर्वा ॥
सादिनस्तदनु वारणवृन्दं
सा क्रमादिति ययौ वरयात्रा ॥ ७४ ॥

दद्गुः पदं सदश्वास्ते न न्यूनमधिकं चमूः
ययौ वेदिरिवाबद्धा निर्वाते तौ स्थितेव सा ॥ ७५ ॥

---

१. काचिदु—क.
२. श्री प्रभवं—स०
३. मादरा—स०
1. हितोरथावस्य वरमानेनु गच्छतो वर्णनम् ।
2. वरयात्रिकाणां वर्णनम् ।

भेरीणां मुरजानां वेणूनां काहलानां च ॥
नादः पक्षकनगरे वरयात्रामागतामगदत् ॥ ७६ ॥

बालकास्तरुणवृद्धवधूट्य[1]
प्रेक्षितुं निरगमन् गतसंख्याः ॥
हर्म्यमारुरुहुरुत्कलिकान्या
भूषिताः प्रतिगृहं कुलवध्वः ॥ ७७ ॥

वलभ्या सौवर्ण्या कनककुथसत्सारिगतया
ययुः[2] शुभ्रैर्दन्तैर्मणिवलयिभिर्दानकरिण ॥
मृगा मंदा भद्राः पथि पथि च मिश्राः करिवरा-
श्चलन्तः शैलेन्द्रा इव रुरुचिरे धातुरसनिभिः ॥ ७८ ॥

आरट्टाभिजनैर्वनायुजनितैः कम्बोजदेशोद्भवै
र्बाह्लीकैरथपारसीकजनिभिः सिन्धूद्भवैस्ताजिकैः ॥
सामुद्रैर्हरिभिः समीरगतिभिः पर्याणरत्नोज्ज्वलैः
धाराः पञ्चधृताः प्रपञ्चचतुरैः संसूचिताः सादिभिः ॥ ७९ ॥

कपोललोलन्मणिकुण्डलास्ते
गौराम्बराः सादिवराः सदश्वान् ॥
अनर्तयन्सम्यगुपेत्य वीथी
प्रत्यापयन्त्यः करकौशलं स्वम् ॥ ८० ॥

प्रेक्षकस्य गजवाजिनरेषु
यत्र दृष्टिरपतत्तदपोह्य ॥
नेतरत्र चलितुं किल शेके
को ददर्श सुषमामखिलां तत् ॥ ८१ ॥

---

१. [redacted] —रा०
२. पु—रा०

अद्भुतानि कुसुमानि वहद्भिः
कृत्रिमैः क्षितिरुहैर्बहुरूपैः ॥
जङ्गमान्युपवनानि बहूनि
पश्यतां नयनकौतुकमासीत् ॥ ८२ ॥

आजन्ययात्राशिविरान्मूलचन्द्रगृहावधि
नानास्फुलिङ्गतरवो दीपवृक्षाश्च रापिताः ॥८३॥

दीक्षा वेधो दीपिका पञ्चशाखा
चन्द्रज्योत्स्नासंज्ञिका भूरिशश्च ॥
दीप्रैरासीद्दीपवृक्षैः प्रकाशो
ध्वान्तं शिष्टं हृत्सु मात्सर्यभाजाम् ॥ ८४ ॥

[1]दीप्तैः क्रीडनकैस्स्फुलिङ्गनिवहं मुञ्चद्भिरत्यञ्चितै-
राग्नेयैर्गगने क्षितौ च विदधे नानाविधं कौतुकम् ॥
ज्योत्स्ना प्रादुरभूद्विधूतविधुरुङ्मेघागजाः कृत्रिमाः
प्रायुध्यंत च मुर्मुरौ घर्मभितः क्रुद्धा वमन्तो बहुम् ॥८५॥

[2]आग्नेयगोलानलमुत्सृजन्तः
सुवर्णपुष्पाणि परं किरन्तः ॥
सर्पान् क्षिपन्तो दिवि तैजसांश्च
दृष्टा जनैः शिल्पविशेषकल्पाः ॥ ८६ ॥

रजतकनकदण्डान्धारयन्त सुवाचो
नवपुरटपिशङ्गैः कञ्चुकोष्णीषकाद्यैः ॥
परिवृतवपुषोऽग्रे बद्धवर्गा प्रधावन्
जनमपगमयन्तो दर्शका नानकस्य ॥ ८७ ॥

---

१. घस्त्रौ—क० यद्यो—ख० ।
२. धर्मभितः—क०
1. दीप्तक्रीडनकम् = 'आतिशबाजी' इति भाषायाम् ।
2. आग्नेय गोलानलम् = 'आतिशबाजी' इति भाषायाम्

भोगावलीं पठन्तो नानकदत्तान् हयान् समारूढाः ॥
अगमन् मागधमुख्यैः प्रासकरा वन्दिनो विविधाः ॥८८॥

गायन्ति दीर्घस्वरमत्यपूर्वं
ये वैणिकाः सैन्धवसन्निविष्टाः ॥
वीणानिनादानुगतं जगुस्ते
मनांसि जहुः पथि संचलन्तः ॥ ८९ ॥

अनेकधूर्वाहकनीयमान-
विमानमाश्रित्य च वारवध्वः ॥
नृत्यं तथा चक्रुरभूतपूर्वं
पुरो यथैवाप्सरसो मघोनः[1] ॥ ९० ॥

विवाहकाले सकलस्य शोभा
स्वाभाविकी काचिदुदेति लोके ॥
किं वर्ण्यतां नानकवर्मणः सा
शरीरकान्त्या जयिनः स्मरस्य ॥ ९१ ॥

पूर्णचन्द्रवदनस्य तदानीं
फुल्लपङ्कजविशालदृशोऽस्य ॥
कौसुमं मुकुटमुद्वहतोऽभू-
द्दर्शने जननेत्रनिमेषः ॥ ९२ ॥

नृणां मनोरथं रथ्यां पूरयन्वसुभिर्वरः ।
समं विवेश नगरं हृदयं च मृगीदृशाम्[2] ॥९३॥

शिञ्जानमञ्जुमणिकाञ्चनभूषणानां
प्रत्यग्रयावकरसारुणपद्धतीनाम् ॥
आलोकनाय सुदृशामतिसत्वराणां
रोद्धुं वरं किमु मनांसि पुरः प्रजग्मुः ॥ ९४ ॥

---

1. मघोनोऽप्सरस इव वारवध्व इति व्यज्यते ।
२. चन्द्रपङ्कजयोरेकत्रस्थापनाद्विरोधस्त परिहारः स्पष्ट एव ।

पत्राङ्गुलीमेककपोल एव
कृत्वा ययौ काचन संभ्रमेण ॥
अनञ्जितेनैकविलोचनेन
कुतूहलाकृष्टमनाश्च काचित् ॥ ९५ ॥

प्रसाधनी पाणिरगात्सुकेशी
केशानसंस्कृत्य जनेन कापि ॥
आदर्शमन्या दधती करेण
गवाक्षमालिप्य परां रुरोध ॥ ९६ ॥

[1]सैरन्ध्र्याकृतविनया' प्रसाधनाय
धावन्ती धृतकरयानुगम्यमाना ॥
जालान्तः प्रणिहितकन्धरा मृगाक्षी
काप्यासीद्वरसुषमा निरीक्षणाय ॥ ९७ ॥

ललाटिकां काचन कण्ठ एव
ग्रैवेयकं रत्नमयं ललाटे ॥
धृत्वा द्रुतं सौधमुपारुरोह
स्वासोत्तरङ्गा हसिता सखीभिः ॥ ९८ ॥

विमानगाभिर्नलिनेक्षणाभिः
शोभाभिभूतस्मरसुन्दरीभिः ॥
व्यलोकि नूनं जितकामकान्तिः
कामं समागम्य वरोऽप्सरोभिः ॥ ९९ ॥

---

१. सौन्ध्रा—ख०
२. ग्रैवेयम्—क०
1. सैरन्ध्रः—प्रसाधनविशेषः ।

ताः क्षत्रियाण्यो मृगशावनेत्राः
सुवर्णवल्लीसुकुमारदेहाः ॥
अन्यत्र गच्छेदिति शङ्कयेव
कटाक्षदाम्ना वरमभ्यबध्नन् ॥१००॥
पार्श्वद्वये तत्र पुरे वधूषु
जालेष्वगूढाननलोचनासु ॥
सहस्रचन्द्रोदययौगपद्ये-
ऽप्यभूद्विकासः कमलाकराणाम् ॥१०१॥
आदर्शयन्नङ्गुलिभिर्वरं ता
परस्परं गन्धफलीसमाभिः ॥
अवाकिरन् लाजविमिश्रिताभि-
र्भृङ्गैः श्रिताभिः सुमनोभिरेनम् ॥१०२॥
पतत्सु पुष्पेषु वरो वरीया[1]-
न्कदाचिदुच्चैरवलोकमानः ॥
विस्फारिताभिः प्रसभं प्रगृह्य
दृग्भिर्हृदब्जे निहितो वधूभिः ॥१०३॥
यावच्च मूलभवनं जनता जगाम
सौधेषु तावदभितो वरवर्णिनीनाम् ॥
नेत्रैरधारि विपुलैः सुषमा समन्ता-
दिन्दीवरस्फुरितचन्दनमालिकानाम्[2] ॥१०४॥
शृङ्गारितेषु करिषु स्थितपूर्णकुम्भै-
रम्भाप्रकाण्डमणितोरणदामभिश्च ॥
आम्नायपाठपटुभिर्वटुभिर्मनोज्ञं
तन्मूलचन्द्रभवनं[3] वर आससाद ॥१०५॥

---

१. पतेद्वरीयान्—क०
२. स्फुरित चन्दनमालिकानाम्—क० स्फुरितवन्दनमालिकानाम्—ख०
३. वलभम्—क०

सम्पूज्य मूल उपचारपरः समग्रान्
ज्ञातीन्ननाम शिविराय च निर्दिदेश ॥
पूर्वं कृता नगरसीम्नि निवासशाला
जग्मुर्जनाः प्रमुदिताः पटमण्डनानि ॥१०६॥

अजितेन तत्र शतशोऽधिकारिणः
परिचारकाः प्रतिजनं प्रयोजिताः ॥
नरनागवाजिपशुपक्षिभक्षणं
क्षणमात्रतः समुपनिन्युरुत्तमम् ॥१०७॥

अथ मूलचन्द्र उपगम्य बन्धुभि-
र्वरवस्त्रभूषणवरैर्वरं कृती ॥
परिपूज्य बान्धवजनान्सभाजयन्
विनयादयाचत विवाहसज्जताम् ॥१०८॥

विप्रान्पुरस्कृत्य ततो जगाम
कालश्च लालो जयरामवर्मा ॥
पिता च तस्येतरबन्धुवृन्दै-
र्वरेण सार्द्धं करिभिः प्रभिन्नैः ॥१०९॥

सम्बन्धिनो द्वारि विशालदन्ता
दन्तावलास्ते मदवारिवर्यैः ॥
कृतं च सेकं पुनरुक्तपङ्क्ति-
कृताकृतं किं नु विदन्ति मत्ताः[2] ॥११०॥

---

1. ´अजितः—अजितोरघाव· मूलन्पपिना ।
१. स्म सेकं—ख० + च० इत्युनयत्र ।
२. विदनि मित्ता—च०

आनद्धतोरणमुदीतचतुष्कवेदि
सौवर्णकुम्भनवपल्लवरागरम्यम् ॥
उद्वाहमण्डपमुपेत्य वरः परे च
सिंहासनेषु रुचिरेषु सुखं न्यषीदन् ॥१११॥

तस्मिन्विशालनयने तपनीयगौर[१]-
विस्तीर्णवक्षसि विलम्बिभुजे स्मितास्ये ॥
नेत्रावलीं युगपदेव वरे विलोलां
नीलोत्पलस्रजमिव न्यदधुर्मृगाक्ष्य ॥११२॥

ततो वरं विष्टरपद्यपार्घ्यै-
र्यं ण मूलो मधुपर्कदानात्[1] ॥
आनर्च विप्रेषु पठत्सु वेदान्
स्त्रीणां मृदङ्गध्वनिमञ्जुगीतौ ॥११३॥

सा मङ्गलस्नानशुचिः कुमारी
समागता काञ्चनपुत्रिरेव ॥
सुवर्णसूत्रैः रचितं तनीयो
वधूनरो वस्त्रयुगं दधाते ॥११४॥

कुमार्यै वरवस्त्राणि मणिभूषणपेटिकाम् ॥
वितीर्य निदधौ विप्रो जयरामेङ्गितं विदन् ॥११५॥

समज्ञयामास च मूलचन्द्रः
[2]कुशाक्षताम्भोभिरदात्कुमारीम् ॥
प्रयुक्तपक्षद्वयनामगोत्रो
वराय तामेद्रसगोत्रभाजे ॥११६॥

---

१. विवरे—क.

1. विष्टर, पद्यम्, पाद्यम्, मर्घ, मधुपर्क च कन्यादाना वराय समर्पयति कन्यादाना पूर्वम् ॥

2. कुशाक्षताम्भसा कुमारीं निष्कन्यायायं ।

[1]कामस्तुतिं कामसमः पपाठ
　　वरः सुदायं श्वशुरो ददौ च ॥
स्थिते नरे पूर्णघटे व्यधत्तां
　　[3]वधूवरौ निष्क्रममीक्षणं[3] च ॥११७॥

प्रपद्य[१] मन्त्रांश्चतुरः परीत्य
　　ब्रूहि [२]वरोऽलंवितते जनीकः ? ॥
विवेश तद्दक्षिणतः कुमारी
　　होमं तदाचार्यवरश्चकार ॥११८॥

अथाघारा[३]वाज्यभागौ च महाव्याहृतिसंज्ञकम् ॥
सर्वप्रायश्चित्तसंज्ञं प्राजापत्यं तथैव च ॥११९॥

स्विष्टकृद्[4]राष्ट्रभृत्संज्ञं जयाभ्यातानसंज्ञकम् ॥
होमं हरिदयालुः स आचार्यो निरवर्तयत् ॥१२०॥

## युग्मम्—

लाजान् समीपत्रयुतान्[४] जुहाव
　　भ्रात्रा वितीर्णान्दहने कुमारी ॥
आरोहयत्तां दृषदं गृहीत-
　　करो वरो गायति च स्म गाथाम् ॥१२१॥

---

1. सिक्खसम्प्रदाये वरः कामस्तुतिं पठति ।
2. "परस्पर मदन्त्वेयाम्" इति मन्त्रः ।
3. वरवध्वोः परस्परनिरीक्षणं प्रायेण सर्वस्मिन्नेव सम्प्रदाये ।
4. जयाभ्यातानहोमः, स्विष्टकृद् होमः राष्ट्रभृद् होमश्च विवाहे दृश्यते ।

१. प्रपद्य—क०
२. वरोऽल वितते—क०
३. आघारा—ख०
४. समीमन्त्र—क०

आकारयत्सप्तपदीं सिषेच
दलैश्चैनां हृदयेऽस्पृशच्च[1] ॥
सिन्दूर[1]शोभामभिमन्त्र्य[2] कान्तः
सीमन्तमध्ये विदधे विधिज्ञः ॥१२२॥
समाप्य होमं धरणीसुरेभ्यो
ददौ सुवर्णानि च सौरमेयीः ॥
सन्दर्शयामास वरो वधूं स्म
ध्रुवं ध्रुवं कामवधूविजेत्रीम् ॥१२३॥
कालश्च मूलचन्द्रश्च दैन्यतापं द्विजन्मनाम् ॥
घनाघनाविव तदा [2]वसुवर्षैर्व्यपोहताम् ॥१२४॥
इत्थं जातविवाहमङ्गलविधि स्थानं गतो नानको
मा पृष्ट्वा जयरामवर्मविहितानुज्ञो वदान्याग्रणीः ॥
निष्प्रत्यं हि जनान्निजान्परिजनानप्रीणयत्प्रोन्नतै-
रघैराभरणैर्निशिष्य वसुभिर्वासोभिरत्युत्तमैः ॥१२५॥
ननाम रत्नाभरणानि दत्त्वा
वासांसि दीनारभृतं करण्डम् ॥
आचार्यमाह स्म वदस्व विद्वन् !
समीहितं किं विदधातु भृत्यः ॥१२६॥
हरिदयालुरतीव सुतोषितः
प्रमदवारिपरिप्लुतलोचनः ॥
अकथयत्ननु नानक वत्स हे
किमवशिष्टमतः परमीप्सितम् ॥१२७॥

---

1. सिन्दूरदानात्पश्च तु सप्तपदी भवति । ततो होम समाप्ते ।
2 वसुवर्षैर्धनदानैरिति भाव ।

१. हृदयस्पृ—ख०
२. मभिमन्त्र—ख०

न खलु वेदि कुलं भवता परं
वसुमतीवलयं सुविभूषितम् ॥
विनय एष विभूषणतामगा-
त्तव भवाभरणस्य किमुच्यताम् ॥१२८॥

मम मनोरथपूर्तिरभूत्प्रभो
तव पुरा कथितां श्रियमीप्सितुः ॥
परिणयोत्सव एव विलोकित-
स्तनयजन्म दिदृक्षुरथास्मि ते ॥१२९॥

अर्घैराभरणैर्वस्त्रैर्मर्दनं वणिक्तं ततः
अतृपन्नानकः कालकथितानाश्रितान् परान् ॥१३०॥

भरतस्य भरद्वाजो यथाऽऽतिथ्यमकल्पयत्
ससैन्यस्य तथा मूलचन्द्रो नानकवर्मणः ॥१३१॥

अजितेन डिण्डिमरवेण घोषितं
वरयात्रिणां ददतु पण्यमीप्सितम् ॥
मम कोशतः पणमुपाददत्वमी
वणिजो न किञ्चिदिह सन्दिहन्तु च ॥१३२॥

सूपाः सूक्ष्मकदुष्णभक्तसहिताः सन्मण्डका व्यञ्जनैः
नानाकल्पविकल्पितैर्बहुविधा वेढोवटाः कोमलाः
वह्वयः संधितजातयः सुलवणाः खाद्या रसालाः सिताः
आज्यं प्राज्यमभून्नवं सुरभितं दुग्धं च सान्द्रं दधि ॥१३३॥

मत्स्यैर्नानाविधैरन्यैः [1]श्रोष्ठी[2]पाठीन[3]रोहितैः ॥
जम्बीरनीरसरसैः प्रशस्तैः पिप्रिये जनः ॥१३४॥

---

१. त्वो—ख०
1. श्रोष्ठी = पोठी मछली हिन्द्याम् ।
2. पाठीनः = मत्स्यभेदः ।
3. रोहितः = सर्वश्रेष्ठोमत्स्यः

जलस्थलस्थायिविहङ्गमांसे
मृगाजयो रस्ययुतैश्च शूल्यै[1]॥
नितम्बिनीनां कलगीतिभिश्च
राजन्ययूनामतृपन्मनांसि ॥१३५॥

मांसौदनं सौरभमुद्गिरन्तं
बहुप्रकारं किल बाहुजास्ते ॥
अभुंजताकण्ठमकुण्ठजिह्वा
विलिह्य लेह्यं मरिचाम्लसिद्धम् ॥१३६॥

यद् येन स्वेष्टमाज्ञप्तं प्राकृतेनोत्तमेन वा ॥
तत्तस्य पुरतो न्यस्तमह्नाय परिवेषकैः ॥१३७॥

एवं खादतमोहता चिरमभूदाचम्य सुस्थो जनः
सर्वोचर्च्यत यक्षकर्दमरसैर्मालाभिराभूषितः ॥
ताम्बूलैर्मगधाहृतैः स्वमनसोपात्तैः परं प्रासदत्
भूपो वारवधूविलासविभवैस्तौर्यत्रिकैस्तोषितः ॥१३८॥

अजितो मूलचन्द्रश्च तदाप्ता नानकः कृती ॥
कालश्च जयरामश्च स्वजनैः ससदि स्थिताः ॥१३९॥

सिक्ताः पुष्परसैः सर्वे गन्धतैलेन वासिताः ॥
द्राक्षावादामखर्जूरमुन्मूलकमुपाददुः ॥१४०॥

लवङ्गजातीफलजातिपत्री
ताम्बूलवीटी त्रिपुटात्वचश्च[2]॥
न्यस्ताः पुरः स्वर्णकरण्डकेषु
महाजनास्ते जगृहुर्यथेच्छम् ॥१४१॥

---

१. मूल्यं—क०
२. त्वच दा —क०

ततस्ततानद्धघनस्वनेन
लयं गतैस्तैः सुषिरस्य शब्दैः ।
गीतैर्हरन्त्यो हृदयं सभाया
मुख्या अनृत्यन्नववारमुख्याः ॥१४२॥

न विवेद जनः स देशकालौ
न च देहादिविभावरीं समग्राम् ॥
कुतुकेन गृहीतचित्तवृत्तिः
परमानन्दमहोदधौ ममज्ज ॥१४३॥

प्रससाद सदा पश्यन्निन्द्रजालं जगत्तु यः ॥
स्वप्ने स्वप्नमिवालोक्य सिस्मिये स च नानकः ॥१४४॥

अनर्गलौदार्यगुणः प्रसद्य
ददौ स वस्त्राभरणार्थराशिम् ॥
एतेभ्यः परेभ्यो नटनर्तकेभ्यो
विदूषकेभ्यो बहुरूपकेभ्यः ॥१४५॥

इत्थं दिनानि कतिचित्परमोत्सवेन
प्रीत्योत्तरोत्तरपुरस्करणेद्धया च ॥
तत्र स्थितोऽजितमुपेत्य च मूलचन्द्रं
यात्रां ययाच विनयाञ्जपरामवर्मा ॥१४६॥

अनिच्छतोरपि तयोरनुज्ञा दापिता जनैः ॥
प्रापिता जन्यवासं च यौतकर्द्धिरनुत्तमा ॥१४७॥

मदकलाः करिणोऽनिलरंहसो
हयवरा मणिमौक्तिककाञ्चनम् ॥
भटजनैर्महिता बहुहेतयः
सदसि दत्तमशोभत यौतकम् ॥१४८॥

---

१. तान्यः-क०-ख०

1. यौतकर्द्धिरनुत्तमा—क० ।

व्ययं प्रयाणदिवसाद्दारभ्यानिच्छतोप्यलम् ॥
लेखमालोक्य निनयान्मूलो जामातुरर्पयत् ॥१४९॥
दत्त्वा बहुधनं मूलः कालस्य पदयोः पतन् ॥
सम्बन्धिना कृतार्थोस्मि त्वयेति विससर्ज तम् ॥१५०॥

अजितस्य मते स्थितः स मूल-
स्तनयां नूतनरत्नभूषणाढ्याम् ॥
व्यसृजद्बहुचेटिकानुयातां
नवयानेन जनोपवर्णितेन ॥१५१॥

पितरौ तनयामसागरोच्चां
कमलां कोमलवादिनीं विदूनाम् ॥
अवलोक्य न शेकतुर्न्नहीतुं[1]
नयनाभ्यां पतितां महाश्रुधाराम् ॥१५२॥

चन्दोराज्ञी बाष्पपूर्णायताक्षी
कन्यामश्रूण्युत्सृजन्तीमुवाच ॥
मा रोदीस्त्वं मे हृदिस्थासि वत्से
द्रक्ष्यन्ती त्वामागमिष्यामि शीघ्रम् ॥१५३॥

अस्या दास्याः क्षमेयास्त्वमित्युक्त्वा बद्धहस्तया ॥
जामाता दत्तधनया चन्द्रो[1] राज्ञा विसर्जितः ॥१५४॥

अजितेन हितेन हस्तिनोश्वान्
प्रतिपाद्याय विसर्जिता नताश्च ॥
प्रययुर्नयरामनानकाद्याः
पटहध्वाननिवेदितप्रयाणाः ॥१५५॥

---

१. अहीतुमितियुक्त- पाठ ।

1. चदो राया–क०
अथवा च॰ो नानच॰ राजा विसर्जित इति पाठ ।

नागान् सज्जयतां हरींश्च हरतां वाहान् रथे युञ्जतां
कीलान्युत्खनतां [1]कुलानि शतशः संहृत्य सम्बध्नताम् ॥
गोणीः स्थापयतां वृषेषु विततानुष्ट्रेषु भारान्गुरून्
शस्त्रं धारयतां प्रयाणपटहध्वानस्त्वरामातनोत् ॥१५६॥
संपिष्य[2] रज्जुमभिवध्य च पानपात्र-
मुष्णीषतश्च तिथिपत्रकमुत्प्रगृह्य ॥
किञ्चिद्विलोक्य धृतपुस्तकदेवपेटी-
भारा ययुः क्षितिसुराः कुशयष्टिहस्ताः ॥१५७॥
गत्वा सुरत्राणपुरं सभार्यः
श्रीनानको मङ्गलगीतवाद्यैः ॥
नीराजितः पङ्कजलोचनाभिः
प्रवेशितः सद्म गुरूनुनाम ॥१५८॥
पूज्येत देवस्तलवंडिकायां
पश्येज्जनस्त्वां च चिरं दिदृक्षुः ॥
उक्त्वेति वृद्धैर्दयितासहायः
श्रीनानकस्तां नगरीमनायि ॥१५९॥
मामुक्तवान्भारमिमं वहस्व
त्वं बालसिन्धो इति स प्रयास्यन् ॥
दानं विना क्वापि न दुर्वहा मे
धूरित्युरीकृत्य ततः स्थितोऽहम् ॥१६०॥
कालःस्नुषां पुत्रमपि प्रगृह्य
प्रसन्नचेता नगरीं प्रयातः ॥
भेरीरवैः सिन्धुरसंघघण्टा-
स्वनैश्च दूराद्विदितो जनेन ॥१६१॥

१. स्थूलानि-ख०
२. संपिष्य-ख०

सद्बान्धवास्तस्य विलोक्य ऋद्धिं
नन्नन्दुरन्ये परितापभृद्धः ॥
विशेषतः श्रीः परमेतदर्थं
सन्दर्शनीयाभिजने जनेन ॥१६२॥

रम्भास्तम्भयुगेन कुम्भयुगलेनोत्फुल्लपङ्केरुहैः
फलैस्तोरणदाममिश्र रुचिरे द्वारे चतुष्काश्रिते ॥
कामिन्यः कुलरीतिचारुमतयो नीराज्य तौ दम्पती
स्फूर्जन्मञ्जुमृदङ्गनादमतयन्नभ्यन्तरं नन्दिताः ॥१६३॥

सर्वाङ्गरत्नाभरणानि मात्रे
निवेद्य चित्राणि वराम्बराणि ॥
श्रीनानकः पादयुगं स्वमूर्द्ध्ना
पस्पर्श लोकैरभिनन्यमानः ॥१६४॥

स्नुषां दलत्कोकनदानुकारि-
कराब्जपादां प्रणतां विलोक्य ॥
आलिङ्ग्य रत्नाभरणाम्बराणि
प्रसूः प्रसन्नाऽदित नानकस्य ॥१६५॥

दिष्ट्या वर्द्धस इत्युक्त्वा जामिभिर्नानकप्रसूः ॥
नमन्ती फलितं मेने भाग्यभूरुहमात्मनः ॥१६६॥

दासीभ्यः पूर्णपात्राणि ददौ मणिगणान्वियम् ॥
पार्श्वे नानकचन्द्रस्य तारका इव ता बभुः ॥१६७॥

सवयसः खलु नानकमागताः
सपरिरम्भमनेन समाजिताः ॥
कथितपूर्वकथा विहितोपदाः
सविभवस्य नतेर्मुदिता ययुः ॥१६८॥

योलाररायमुपगम्य विशिष्टवस्त्रं
स्वर्णोपदामुपनिधाय ननाम हृष्टः ॥

उत्थाय तेन हृदये विनिधाय पृष्टः
स स्वाधिकारदिवसादखिलं जगाद ॥१६९॥

श्रुत्वाखिलं मोदमदभ्रमाप-
द्दोलाररायो निजगाद चेदम् ॥
तवोदये शारदशीतरश्मे-
श्चकोरवन्नानक निर्वृतोऽस्मि ॥१७०॥

कालं बहुमिह स्थातुं न युक्तं किन्तु नानक ॥
राज्ञो विपरिवर्तन्ते स्तोकेनैव मनांसि यत् ॥१७१॥

विसृष्टो नानकस्तेन तथेति कथयंस्ततः ॥
समाप्तदेवपूजादिक्रियो मासोत्तरं ययौ ॥१७२॥

आदाय चेतांसि ययौ जनानां
शीलेन सर्वस्य हि वल्लभोऽयम् ॥
सत्सङ्गतिः कस्य सुखाकरोति
परन्तु दैवेन विना न लभ्या ॥१७३॥

सुरत्राणपुरं गत्वा स्वाधिकारं बभार सः ।
प्रजावतीमतिमीत्या[1] स्थापयामास नानकी ॥१७४॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
परिणयो नाम पञ्चमः प्रस्तावः ॥

---

१. स्वाधिकार स—क०

1. प्रजावती = नानकपत्नी । सुलक्षणी

# षष्ठः प्रस्तावः

या स्फोटवर्णपदवाक्यपदाभिधेया
स्थूलत्वमागतवती भवति क्रमेण ॥
तेजोयदस्य जगतो व्यवहारहेतुः
सा निर्विकल्पचितिरस्तु मयि प्रसन्ना ॥ १ ॥

सुलक्षणी सुरूपापि पत्युर्नारमयन्मनः ॥
यथा हंसस्य रुचिरा बध्नती स्वर्णशृङ्खलाः ॥ २ ॥

चन्द्रोराज्ञी कन्यकां द्रष्टुमागा-
न्निर्विण्णां तां साश्रुनेत्रां विलोक्य ॥
नानक्याऽतिप्रीतिभाजा गृहीता
नातिप्रीता तामुपालेभ उग्रा ॥ ३ ॥

कन्या न तिष्ठन्ति गृहे स्वकीये
सर्वा व्रजन्त्येव परस्य वेश्म ॥
यद्येवमेव व्यययेज्जनस्ता—
स्तदा विलीयेत विधेर्हि पन्थाः ॥ ४ ॥

मयैव कन्या जनिता यदि स्या-
त्तदापराध्यास्म्यहमेव[2] लोके ॥
अन्याः स्त्रियश्चेज्जनयन्ति कन्या
विचारिते मे न तदापराधः ॥ ५ ॥

---

१. पंथा—क०
२. ध्याम्यहमेव—क

श्वश्रूजनः शास्ति वधूः कुशीलाः[3]
कामं तदा नास्ति गिरोवकाशः ॥
प्रयाति मार्गेण सता सदश्वे
कशानिपातोऽतितरामसह्यः ॥ ६ ॥

श्वश्रूः क्षमा ताडनलालने या
मातेव सा ते नहि सन्निधिस्था ॥
प्राक्कर्मणस्त्वं खलु दुर्विपाका-
ननान्दृहस्ते[1] पतितासि वत्से ॥ ७ ॥

अन्तेवासिन्युपाध्यायः प्रजावत्यां च नन्दिनी ॥
निसर्गेणैव वहतश्चण्डिमानमकारणम् ॥ ८ ॥

सुलक्षणी तामऽवदन्नार्योपालम्भमर्हति ॥
नार्यो यत्कृतसौभाग्याः स एव विरसो मयि ॥ ९ ॥

चन्दोराज्ञी व्याजहाराथ खिन्ना
कस्माद्दोषान्नानकस्तेऽप्रसन्नः ॥
निर्विण्णश्चेज्जीवलोकस्य सौख्ये
किं ते पूर्वं हन्त जग्राह पाणिम् ॥ १० ॥

नानकी मतिमती तदावद—
न्नानको न कलहेन सुग्रहः ॥
प्रार्थनैव समये करिष्यते
या महाजनमनोनुकूलिनी ॥ ११ ॥

---

३. वधू कुशीला—क०
१. न नान्यहस्ते—ख०
१. ननादृ—क०
१. ला—ख०
२. सुपालेन "या" क०

निक्षिप्य तनयामङ्के नानक्याः सा ययौ गृहान् ॥
आश्वासिता तयात्यर्थं प्रससाद सुलक्षणी ॥ १२ ॥
समागतं गतरुपं हतरागमथैकदा
मनुजं[१] मनुजव्याजदेवमेवं स्वसाऽवदत् ॥ १३ ॥
त्वं सर्ववेत्तासि विचक्षणोसि
कः शिक्षयेत्त्वामपरावरज्ञ. ॥
[1]तथापि नारीजनचापलेन
यदुच्यते तत्सदसत् क्षमस्व ॥ १४ ॥
देवर्षिभूतात्मनृणां पितॄणां
न किंकरो नायमृणीति सह्यम् ॥
अर्वाग्दृशः शिक्षयितुं तथापि
[२]सन्त. पुराणेन पथा चरन्ति ॥ १५ ॥
निक्षिप्य जायां तनये वनाय
[2]व्रजेत्तया वा समभित्युशन्ति ॥
जानन्ति सन्तो वनिता लतेव
विनावलम्बं कथमेव तिष्ठेत् ॥ १६ ॥
न ज्ञानिनो हानिकरी गृहस्थ–
चर्या हि पथ्यं विकृतेन सेव्यम् ।
गतेऽगदे[३] हन्त समूलमेव
वदन्ति सर्वं बलिनस्तु पथ्यम् ॥ १७ ॥
तवेन सर्वस्य जनस्य नास्ति
जगत्यनास्था तमसावृतस्य ॥

---

१. इन्दुज—र॰
२. सद्या—क॰
३. गजे—क॰
1 तुलना—"मां वत्तुमिच्छा पुनरोचरोति—नि॰ ।
2. भव तस्तु सत्त एव मेमरे इत्यर्थान्तरन्यास ।

धनं सुताः सद्विषयोपभोगः
संसारिणस्तत्त्वमिदं विदन्ति ॥ १८ ॥

तयैवं व्यञ्जिते सौम्यः[1] संजगाद स्मिताननः ॥
किं नोक्तं तव मान्यायाः कृतं किं न करिष्यते ॥ १९ ॥

त्वस्या उपालम्भमपोहयन्त्या
अवश्यवक्तव्यमिदं भवत्याः ॥
लतां य आरोपयते सयत्नं
फलावधि प्रौढतरं करोति ॥ २० ॥

ततो नवोढामनुरञ्जयन्सदा
सुलक्षणीं नायकतागुणेन सः ॥
अरीरमन्नूतनकामकेलिभिः
कलासु सर्वासु समुल्लसन्मनाः ॥ २१ ॥

मुहुर्मन्द्रध्वानैर्दिवि परिलसन्तो जलधरा
वितन्वन्तः केकाः प्रमदवनवीथीषु शिखिनः[2] ॥
विनिद्राः कन्दल्यो भुवि हरितशष्पाङ्कुरलताः
स्मरोन्मेषं यूनोर्नवनवमतन्वन्ननुदिनम् ॥ २२ ॥

मलयजरससेकान्मालतीदामतश्च
वरतनुपरिरम्भस्तेन सम्भावितोऽभूत् ॥
मुखमपि मदिराक्ष्या वीक्ष्य तस्याः प्रियेण
न किमपि बहु मेने शारदः पूर्णचन्द्रः ॥ २३ ॥

कालेन साथ कियता बिभराम्बभूव
गर्भं शितिस्तनमुखा शरकाण्डपाण्डुः ॥
मृद्भक्षणेऽकृत रुचिं श्रमकर्शिताङ्गी
पत्युः सुखाय सुषुवे समये सुतं च ॥ २४ ॥

---

१. सौम्य–ख०
२. ना–क०

जाते सुतेऽतिमुदितो जयरामवर्मा
श्रीनानकस्य विदधेऽखिलजातकर्म ॥
यद् येन याचितमभूद् व्यतरत्स तस्मै
तत्स्वर्णभूषणवराम्बरसैन्धवादि ॥ २५ ॥

द्वात्रिंशदब्दवयसाऽजनि नानकस्य
श्रीचन्द्र इत्यभिहितः प्रथमः स सूनुः ॥
तुङ्गस्थितैर्ग्रहवरैरविगीतभाग्यो
लोके महामहिमभाक् स इव प्रसिद्धः ॥ २६ ॥

साध्वी दधार खलु सार्धचतुर्थवर्षे
गर्भं पुनस्तदनु नानकधर्मपत्नी ॥
आलीजनस्य रुचिरादभिलप्यमाण-
मुक्षंतमक्षिकमलान्यमृतच्छटाभिः[१] ॥ २७ ॥

ज्ञानी प्रव्रजितः कश्चिदेकदा नानकं गतः ॥
पाण्डुरं कृशमालोक्य तमपृच्छत्स कारणम् ॥ २८ ॥

राजकार्यनियोगेन पारतन्त्र्यादनारतम्[२] ॥
स्नानभोजनकालस्य वैषम्यं नानकोऽब्रवीत् ॥ २९ ॥

स्नातः प्रभाते नवनीतयुक्तां
सितोपलां भुंक्ष्व ततोऽन्यवार्ता ॥
नोपेक्ष्यमर्थादिचतुष्टयस्य
वपुः समं साधनमाहुरार्याः ॥ ३० ॥

तेनोपदिष्टो दययेति धीर-
स्तथा प्रतिश्रुत्य तदादि चक्रे ॥

---

१. छटा–ग०
२. पारतंथ्या–ग०

अतिप्रभाते हृदङ्कस्वरायां
स्नानं स वेईं[1] मृगशीतलायाम् ॥ ३१ ॥

एकदाहर्मुखे[2] गत्वा वेईं कृतनिमज्जनः ॥
नोन्ममज्जेति चिखिदे सर्वोऽस्य प्रीतिमज्जनः ॥ ३२ ॥

हाहेति चुक्रोश ततस्तदर्थे
सर्वः सुरत्राणपुरस्य लोकः ॥
सुलक्षणी सा च नानकी च
सन्तापवशोऽरुदितामजस्रम् ॥ ३३ ॥

[3]आनायमानीयमहान्तमन्तरा
विलोडयामासुरितस्ततश्च ॥
दाशास्तदस्थेन मया प्रयुक्ताः
खिन्नेन भूयो जयरामनाम्ना ॥ ३४ ॥

ग्राहा महान्तो मकराश्च मत्स्या
जाले निबद्धा न स दृश्यते स्म ॥
निगीर्य तं कोपि गतः सुदूरं
ग्राहः किलेत्याह ततः स्म लोकः ॥ ३५ ॥

भक्ताधिकारी निममज्ज नद्या-
मुक्त्वेति राजा पिशुनैः प्रयुक्तः[२] ॥
आहूय दूतैर्जयराममूचे
त्वं बोधयाशु व्ययमस्य नूनम् ॥ ३६ ॥

---

१. स्नाति-क०
२. मधमस्य-ख० ।
1. वेई = नदीनाम ।
2. अहर्मुखे = प्रातरि ।
3. आनायम् = जालम् ।

भीतस्ततस्तस्य मनस्यवेक्ष्य
टान स घीरो ष्यराम ऊचे ॥
कृत्वा क्रियामस्य मृतस्य राज-
न्नावेदयिष्यामि समग्रमेव ॥ ३७ ॥

स्वार्थप्रवणतां राज्ञां निस्नेहत्वं निरास्पदम् ॥
विनिनिन्द ततः सर्वो लोकः शोकसमाकुलः ॥ ३८ ॥

यन्युग्रुवं प्राप्स्यति बालसिन्धुः
चिरस्य चौरो जयरामकश्च ॥
वैलेः प्रयुक्तामिति किंवदन्तीं
श्रुत्वास्मदीयां निभयास्त्वभूवुः ॥ ३९ ॥

पश्चात्तपन्निति जनो विनिनिन्द विश्वं
मृत्योर्न किञ्चिदपि सज्जनपक्षपात ।
जीवन्ति हन्त पिशुनाः परमर्मघाताः
[1]सन्त परोपकृतिसक्तधियो [2]म्रियन्ते ॥ ४० ॥

मूर्खो वा पण्डितो वापि पापो वा धार्मिकोऽपि वा ॥
असिद्धोप्यथवा सिद्ध कालः कश्चिन्न मुञ्चति ॥ ४१ ॥

वैरी न वैरी ध्रुवमेव सन्त
या [2]मज्जयामास तथाविधं तं ॥
यद्वा प्रकृत्या जडतायुतानां
वैचृत्वमप्यर्थकरं न किञ्चिद् ॥ ४२ ॥

साध्वीं विहाय वनितां तनयं शिशुं च
वृद्धौ प्रमह्य पितरौ वत दूरसंस्थौ ॥

---

१. म्रियन्ते पाठ—ह० ३० सत-रा०

२. प्रज्ञयामास इति पाठ—ह०

I. जनानां परिताप ४२ त ५० पावन वर्णित

अस्मान्भवत्प्रणयबद्धधियः किमेवं
हा नानक त्वमगमः परिहीणहार्दः ॥ ४३ ॥

स्मेराननो विकचपङ्कजपत्रनेत्रः
शीलेन सर्वजनवल्लभतामुपेतः ॥
नातः परं स भविता सुकृतव्ययेन
श्रीनानको गुणनिधिर्नयनातिथिर्नः ॥ ४४ ॥

तीर्थे तस्मिन्प्रातरुन्मज्ज्य दृष्टो
लोकैः प्रातः स्नायिभिः कौतुकेन ॥
[1]तार्तीयोके वासरे साश्रुनेत्रान्
सानन्दाश्रूनागतः स व्यधत्त ॥ ४५ ॥

विलक्षणुपरतानामेष वेषं[2] दधानः
परिहृतगृहमेध्याकल्प आविर्बभूव ॥
धृतयति वपुषा स्वं लोकमानीय पत्नी
स खलु समुपदिष्टो [5]वारिनाथेन पन्थाः ॥ ४६ ॥

केचिन्मोहवशेन दृश्यत इति प्रोचुः परे प्रत्ययं
नाजग्मुस्त्वपरे नवं जनुरिति प्राकीर्तयन्विस्मिताः ॥
मायावीति जजल्पुरल्पमतयः सिद्धं परे वर्णयन्
विद्वांसस्तु वयं प्रभावमतुलं तस्येति तूष्णीं स्थिताः ॥ ४७ ॥

---

१. तार्तियोरे—क०
२. मेषवेष—ख०
३. तृतीयस्याय तार्तीय ।
४. "तानामेषवेषम्" इत्येकः पाठ ।
"तानाम् मेषवेषम्" इति द्वितीय पाठ ।
"तानाम् एषवेषम्" इत्यपि पाठ- ।
५. वारिनाथो वरुण ॥

जीवेन देहा इव देहिनस्ते
तेनागतेनोद्गतचेतनास्तु ॥
वस्त्राणि मौलौ परिवर्त्य तस्य
ददुः प्रसन्नाः परिचारकेभ्यः ॥ ४८ ॥

नानक्या चरणे निपत्य रुदितं तस्य स्मितं कुर्वतो
नेत्राभ्यां दयिता निपीय निभृतं दूरादमुं निर्वृता ॥
आलिङ्गन् जयराम इत्यकथयन्मोहाय किं नः कृतम्
राज्ञो दुर्विनयं वदन्तमथ मां दृष्ट्वाऽहसत्तोचकैः ॥ ४९ ॥

बोधयामास लेखेन धनखानस्य लेखकान् ॥
[I]खतर्कतुरगा मुद्रास्तस्य तत्राधिकाः स्थिताः ॥ ५० ॥

प्रदापयितुकामे ताः [1]पृथ्वीपाले प्रसीदति ॥
देहि प्रयजितेभ्यस्त्वमिति नानक आलपत् ॥ ५१ ॥

प्रसादवस्त्रं नृपतिः स दातु-
माकारयन्नाथमुरीचकार[2] ॥
विसृज्य सर्वं विपिनस्थितेषु
देवालयेषु स्थितिमातवान ॥ ५२ ॥

आपन्नसत्वा दयितास्य साध्वी
परस्य गेहे तनयः शिशुश्च ॥
नानर्जयत्तस्य मनो नृपात्वा-
त्त्वाप्तस्य बन्धोदयते न कश्चित्[3] ॥५३॥

---

I. ततरतुरगा = ७००
१. पृथिवीपाले—ख०
२. उररीचकार—ग०
३. कश्चित्—ग०

स्वार्थोपाधिः प्रीतिरत्राखिलस्य
सर्वश्रेष्ठो धन्य एको धनी यत् ॥
भोग्याः सर्वे यद्येदापातरम्या-
स्तद्विद्वांसः किं भवेऽस्मिन् रमन्ताम्[1] ॥ ५४ ॥

मूढा यथातिममतानिगडेन बद्धाः
कुर्वन्ति कृत्यमिह तद्वहवो बुधाश्च ॥
काले विवेकमुभये कलयन्ति किन्तु
तोये गभीर इव बाहुकवारिमीताः ॥ ५५ ॥

नानकोखिलमुत्सृज्य व्यरच्यत वने स्थितः ॥
श्रुत्वेति मूल. श्यामेन गुरुणा सह तं ययौ ॥ ५६ ॥

परः शता जृम्भितमस्य लोका
यदाङ्गुलीनां ध्वनिताम्यनन्दन् ॥
तदा यथासीत्सुखितस्ततोपि
वने स एकाकितया ननन्द ॥ ५७ ॥

गत्वा तौ विजने वने दृढशतुर्देवालये संस्थितं
सन्त्यक्ताखिलभूषणाम्बरमघं वस्त्रद्वयाच्छादनम् ॥
श्यामोऽभापत हन्त नानक कुतो वेपः किमेप त्वया
नाश्रौषीः स कपायपाकविधुरैर्दुर्योगिभिर्दुर्लभः ॥ ५८ ॥

निर्वेदान्सहसोत्थितो परिणतात्पड्भिः[2] सपत्नैर्युतो
भीतिं याति वनेपि वश्यकरणे गेहेपि भो नन्दति ॥

१. यात—क०

२. द्रव-क०

1. ईदृशस्य जगत प्रीति क्व भजतु कश्चित् इति भाव.। यतोस्मिन् भवे रमणं न युक्तियुक्तमिति भाव.।

2. कामक्रोधलोभमोहमदमात्सर्याणि ।

षट् शत्रून्विजिगीषवो नयविदो ये गेहदुर्गाश्रिता
युध्यन्तेऽथ विजित्य तान्विहरता तेषां क्वचिन्नापदः ॥ ५९ ॥
व्याप्तस्त्रिलोक्यां यदि लोकनाथो
वनेषु लभ्येत गृहे कुतो न ? ॥ ६० ॥
भक्तिप्रियश्चेज्जगदन्तरात्मा
नग्ने प्रसीदेन्न पटावृते किम् ? ॥ ६१ ॥
श्रुत्वा ध्यानं जनादन्धो यथा पश्यन् प्रबोधयेत् ॥
बोधयन्तं तथा श्यामं सस्मितो नानकोऽब्रवीत् ॥ ६२ ॥
यो वै कषायी स कषायपाकं
प्रतीक्षतां श्याम ? न मे कषायः ॥
पुरीमपक्वामवधेहि तत्र
बालं नृपालं खलसम्परीतम्[I] ॥ ६३ ॥
वने न जय्याः षडमी सपत्ना
गृहान्धकूपे सुतरां सुमेधः ? ॥
जन्मान्तराराधनतोपि तस्मै
विना मुरारेः करुणाकटाक्षम् ॥ ६४ ॥
वह्निर्दारुषु सन्ततोपि मथनप्रावीण्यतो लभ्यते
व्याप्तं वारि धरातले च खननादासाद्यते यत्नतः ॥
ईशो विश्वविसृत्वरोपि जगतो ध्यानादिदीपैर्यथा
तुच्छं सन्त्यजताऽखिलं मतिमता निर्गृह्यते केनचित् ॥ ६५ ॥

१. षड्नु—क०
२. वितस्य—क०
३. करुणाकटा–ख०
४. तुच्छं—क०
५. निगृह्यते—क०
I. श्लो० ६४ तः ६६ यावत् नानकदर्शनस्य वर्णनांशः प्राप्यते ।

एकं मनः पुत्रकलत्रमित्र-
धनानि यद्धावति धावमानम् ॥
वदस्व उग्रागिभिरप्यगम्यं
कथं प्रपद्येत पदं मुरारेः ? ॥ ६६ ॥

स्नेहनिर्यासबद्धानां जीवानां पक्षिणामिव ॥
परब्रह्ममहोत्तुङ्गमाकाशमिव दुर्गमम्[1] ॥ ६७ ॥

मूलोऽब्रवीदग्निरयं यदीद्धः
पूर्वं किमासीर्गृहमेधिधर्मा ? ॥
सोऽब्रूत लोभोग्निरनिर्वृतानां
भुक्त्वा त्रिलोकीमपि वो न तृप्तः ॥ ६८ ॥

विक्षिप्तोऽयमभून्नूनं न वाचं प्रतिपत्स्यते ॥
इति मूलः कृपाकृस्य श्यामेन[2] सह निर्गतः ॥ ६९ ॥

धनखाननृपद्वारि मूल आवेदनध्वनि-
मुच्चैश्चकार तच्छ्रुत्वा कोऽयमित्यब्रवीन्नृपः ॥ ७० ॥

[3]मित्रखानोऽब्रवीन्मूलो नानकश्वशुरो नृप ॥
आवेदयति जामातुर्धनं मे दुहिताऽर्हति ॥ ७१ ॥

धनखानस्ततोऽब्रूत नानकेन पुरोदितम् ॥
मुद्रा मदीया दातव्याः परिव्राड्स्य इति स्फुटम् ॥ ७२ ॥

मूलचन्द्रस्ततोऽवादीद्राजानो न्यायवादिनः ॥
तस्य विक्षिप्तचित्तस्य न प्रमाणं वचः खलु ॥ ७३ ॥

---

१. प्रदीप्त —स० ।

1. यथा पिञ्जरेबद्धपक्षिणां कृते आकाशं दुर्गमम् तथैव स्नेहे बद्धाना जीवाना कृते ब्रह्म दुर्गमम् ।

2. श्यामः = मूलानुगतः ।

3. मित्रखानः = धनखानानुजीवी ।

जयरामं नृपोऽपृच्छद् ब्रूहि कोऽर्हति तद्धनम् ॥
अवोचत्स पुनः पृष्टो नानकः पृच्छ्यतामिति ॥ ७४ ॥
जनैर्नृपो नानकमाजुहाव
पुनः पुनः क्रोधवशात्प्रणुन्नः[1] ॥
आगत्य तस्थावनमत्समाया
सन्दीपयिष्यन् धर्नखानमन्युम् ॥ ७५ ॥
आकारितस्त्वं बहुवारमार्गाः
कुतो न मो नव्यविरक्तिशालिन्[1] ॥
द्रव्यं तवायं श्वशुरो जिघृक्षु-
रास्ते ततो देयमिदं नु कस्मै ॥ ७६ ॥
तं नानकोऽभाषत ते न भृत्यो
भृत्योऽधुनाहं जगतां[2] नियन्तुः ॥
किमर्थमाकारितवानसि त्वं
द्रव्यं तु तत्प्रव्रजितैकभोज्यम् ॥ ७७ ॥
पत्नी विमुक्तापि[3] लभेत भर्तु-
र्धनं सपुत्रा न कथं नु राजन् ॥
न्यायानुरोधाद्वदतीति लोके
विचिन्त्य राजेति पुनर्जगाद ॥ ७८ ॥
पश्यन्त्वमुं मन्त्रविदो विचेता
यथेप जाया धनभागिनी स्यात् ॥
चेत्स्वस्थचित्तोऽस्य[4] वचः प्रमाणं
तदा धनं प्रव्रजिता भजन्तु ॥ ७९ ॥

---

१. प्रणुन्ने—ख०
२. जगती नियन्तु—ख०
३. विमुक्ता—क०
४. स्वस्य—ख०
I. सद्यो पूनम यासिज्नहृदयम !

अथागमन्मन्त्रविदस्तुरुष्काः[1]
सिद्धार्थविक्षेपकृतः पठन्तः ॥
क्रूरैरुपायैः परिपीडयन्तः
त्वं कोऽसि कोऽसीति मुहुर्जजल्पुः ॥ ८० ॥

तान्नानक उवाचेदमसिद्धान् सिद्धमानिनः ।
देवनामाङ्कितैर्मन्त्रैर्भूतोच्चाटनजीविकान् ॥ ८१ ॥

कृपिः समूलैव विनाशिता यैः
खलाः खलार्थं किमु ते यतन्ते ? ॥
विक्रीणतां नाम महेश्वरस्य
सिद्धिःकिमेषां परकार्यकृत्स्यात् ? ॥ ८२ ॥

[2]उन्मादवानस्मि जनार्दनस्य
प्रेम्णा निजानन्दनिरञ्जनस्य ॥
तृणाय मन्ये सकलां त्रिलोकीं
प्रतिक्षणं क्षीणतरत्वभाजम् ॥ ८३ ॥

मन्त्रस्य देवं परिचिन्वते न
न ते प्रकुर्वन्ति जनस्य कामान् ॥
नृत्यन्तमारुह्य शिरांसि मूर्त्सु
नोच्चाटयन्तेऽपि [illegible] भूतसङ्घान् ॥ ८४ ॥

अहो महाभूतनिबद्धदेहा
भूतं किमुच्चाटयथा प्रभूतम् ॥
लोभं निगृह्णीत महापिशाचं
यूयं यदावेशवशाद्विमूढाः ॥ ८५ ॥

---

१. विजेय–क०
२. विलोकीं–क०
३. देव–क०
४. तदा–क०

I. तुरुष्का मन्त्रविदः = तुर्कतान्त्रिक इति भाषायाम् ।
2. श्लो० ८३ तः ८७ यावत् नानकस्य तुरुष्कमन्त्रविदं प्रति ईशोपदेशः ।

त्वं कोसीऽति किमत्र पृच्छथ जडा देहेन्द्रियादीतरं
नित्यानन्दमगाधबोधजलधिं जानीत मामद्वयम् ॥
देहं केचन भूतयोगजनितं चैतन्यमन्ये परे
विज्ञानं क्षणिकं वपुः परिमितं मामाहुरेके धिया ॥ ८६ ॥

केचनोचुरिमा वाचः श्रुत्वास्य म्लेच्छमान्त्रिकाः[1] ॥
नाविष्टो न च विक्षिप्तो ज्ञानवानेष निश्चितम् ॥ ८७ ॥
अर्घं प्रव्रजितेभ्यस्तदर्घं नानकयार्पितं ॥
धनखानो घनमदात्तदा[2] स्वमतिमाश्रितः ॥ ८८ ॥
आर्यम्लेच्छोपास्यदेवे न भेदं
ज्ञानी यस्मान्मन्यते नानकोऽयम् ॥
वन्देशास्तं साधमस्माभिरद्य
तस्मात्‌ाजित्याग्रहादेनमूचे[3] ॥ ८९ ॥
यवनदेवगृहे यवनैः समं
नतिमुरीकृतवानथ नानकः ॥
किमपि नार्यजनो नृपभीतितोऽ—
वददपासरदार्ततरस्ततः ॥ ९० ॥
धनखानादिभिर्म्लेच्छैर्म्लेच्छमन्त्रानुवादनात् ॥
नानको म्लेच्छतां नीत इति कोलाहलोऽभवत् ॥ ९१ ॥
विशालनेत्रक्षरिताश्रुधारो
म्लानाननोऽगाज्जयरामवर्मा ॥
[1]निधिं द्विजं द्वारि नियुज्य वार्ता—
बोधाय गाढं[4] हृदि दूयमानः[5] ॥ ९२ ॥

---

१. केचिनो—क०
२. मादत्त—क०
३. मूचं —क०
४. गाढ़—क०
५. दूयमान—क०
1. निधिः कश्चिद् ब्राह्मणः ।

तमप्रसन्नं वनिता विलोक्य
पप्रच्छ किं म्लानमुखोऽस्यकस्मात् ॥
ऊचे स ते भ्रातरमद्य राजा
म्लेच्छो चिकीर्षत्यहह प्रसह्य ॥ ९३ ॥
आश्वासयनमास तु नानकी तं
न नानकस्याभिभवाय कश्चित् ॥
शक्नोतु को नाम सहस्ररश्मि
पिधातुमीष्टे करसंपुटेन ॥ ९४ ॥
अनीतिरेषा यवनस्य राज्ञो
विनाशिनीति ब्रुवतां सरोषम् ॥
सतां सुरत्राणपुरस्थितानां–
मभूद्विषादः प्रति सर्वं भूयान् ॥ ९५ ॥
अनुशोचति नानकं सहाये–
जयरामे प्रतिकारशक्तिशून्ये ॥
निधिरागतवान् द्विजः प्रवृत्त्यै
नृपति द्वारि नियोजतः स पूर्वम् ॥ ९६ ॥
स पृष्टो जयरामेण निजगादेदमादृतः ॥
म्लेच्छाः सन्तो विनिष्क्रान्तास्तदुक्तिमनुवच्म्यहम् ॥ ९७ ॥
देवोपस्थितये स्थितो नृपतिना नोपस्थितिं नानकः
चक्रे तं नृपतिर्जगाद कुरुषे किं नात्र देवानतिम् ॥
तं सम्प्रत्यवदत्त्वया सह मया कार्या सुरोपस्थिति–
स्त्वं गान्धारगतो नियोजितमनाः क्रीणासि भो घोटकान् ॥९८॥

१. प्रतिसप्र–ख०
२. सदार्य—ग०
३. प्र पूर्वम्—क०
४. माहृत—ख०

1. हास्यरसस्य केवलं द्विशा एवामीयाद्लोकाः समापतन्ति दृष्टिपथमत्र सम्पूर्णे महाकाव्ये ।

[1]कार्यस्तदोवाच[1] मया समं कुतः ।
कृता न देवानविरत्र तिष्ठता ॥
ऊचे स तं गर्तनिपातवारणं
कर्तुं किशोरस्य, गतो भवानपि ॥९९॥
परिचितज्ञतामस्य स-तदा ज्ञात्वा नराधिपः ॥
किञ्चिद्भीतो जगादामुं विचर-त्वं यथासुखम् ॥१००॥
इति संलपतां तेषां दूरस्थः, श्रुतवानहम् ॥
आयाति नानको नूनं, स्वेन धर्मेण रक्षितः ॥१०१॥
जयरामादयस्तस्य वाग्भिराश्वासमाययुः ॥,
यथार्थत्वं याचमानो देव[3]ताभ्यस्तदुक्तिषु ॥१०२॥
विदार्यमासा यवनान्ध[4]नानि
प्रभाकरो नानक उद्गतस्ततः ॥
विलोक्य, हर्म्यात्तुलसी[2] तमालप-
द्वर्धस्वं भोः स्वामिनि धन्धुलामतः ॥१०३॥
यथास्थितं नानकमागतं तं,
विलोक्य सर्वे मुहुरीक्षमाणः ॥,
क्षणं प्रमोदाश्रुभिरास्रवद्भिः
कृतान्तरायाः परितापमापुः ॥१०४॥
जयरामस्ततोऽपृच्छत्किमभूत्तत्र कथ्यताम् ॥,
यदभूत्तदभूद्देव मुदा, तिष्ठतु नानकः ॥१०५॥
निर्बन्धपृष्टः पुनराबभाषे
मामुक्तवान्म्लेच्छनृपो न भेदम् ॥
ज्ञानी कश्चिद् ब्रह्ममतिः करोति
सहोपतिष्ठस्व मया ममेत्थम्[2] ॥१०६॥

---

१. रायंस्व—क०
२. महीत्थम्-र०

1. रायं —र० इव व्यक्तिवाचक नाम ।
2. तुलसी—नानकस्य सखी ।
3. देवताभ्य इति चिन्त्यं व्याख्यानेऽविमर्शत्वात् ।
4. अन्धयतीत्यन्धनमन्धो वा ।

स्वीकृत्य तूष्णीमपि वर्तमाने
न॰ वन्दसे किं पुनरित्युवाच ॥
अवादिदं त्व तुरगान् ग्रहीतुं
गान्धारगः केन ततोऽनुमेयम् ॥१०७॥

धर्मोपदेशाय जगाद कार्यो
मिथ्या कुतो वक्षि नृपे स्थितेऽत्र॰? ॥
नृपाल एवंमुवाच सत्यं
ब्रवीति गान्धारगतं मनो मे॰॥१०८॥

पुनर्बभाषे कुपितोथ कार्यो
मया स्थितेनात्रन वन्दसे किम् ? ॥
तमब्रवं त्वञ्च गतोसि कार्यिन् !
गृहं स्वकीयं, वडवा मृता, ते॰॥१०९॥

लालः किशोरस्तव चित्रतुल्यो
गर्ते पतेत्तद्विनिवारणार्थम्॥॰
यन्थादियत्नाननुतिष्ठतस्ते
त्वमेव साक्षी॰ श्रुतधर्मशास्त्रः ॥११०॥

हीणः किञ्चित्तदा कार्यो॰सत्यमित्यवदन्नृपम् ॥
नृपस्तु माह्वयचेदं पन्थानस्तेऽकुतोभयाः[1] ॥१११॥
प्रभावं तस्य राजर्षेः श्रुत्वाऽतुष्यन्द्विजा जनाः ॥
जिहासां वीक्ष्य सर्वस्य नातुष्यन् साश्रुलोचनाः ॥११२॥

---

१. ततो [illegible] मेयम्—क०
२. गर्ते तद्वि—क०
३. नरम्—क०
४. नियोजनः—ख०
1. नास्ति कुतो भयं यस्मात स अकुतोऽभयः ।
2. हातुमिच्छाम् ।

हित्वा कुटुम्बं सहसा यियासुं
निर्मोकमुत्सृज्य यथा भुजङ्गम् ॥
न कोऽपि तं रोद्धुमलंबभूव
स्वसा तु साश्रुः सदयं जगाद ॥११४॥
भ्रातस्तपस्यां त्वमिहैव कुर्या-
स्तत्रान्तरायो भविता न कश्चित्[१] ॥
दूरादपि त्वामवलोक्य लक्ष्ये
सरोजिनी सूर्यमिव प्रमोदम् ॥११५॥
तवानुरागो न बभूव पित्रो-
र्मय्येव[२] ते प्रीतिरतीव बाल्यात् ॥
ममत्वशून्योऽसि तथापि दीने
[1]दयालवः साधुजना भवन्ति ॥११६॥
नानकस्तामुवाचेदं त्वं मोहार्त्ति प्रलापिनी ॥
एको जातो मृतश्चैकः सम्बन्धः केन[2] कस्य कः ॥११७॥
ज्ञात्वापि संयोगवियोगजन्म-
जरामृतिप्रायमिमं प्रपञ्चम् ॥
नारीस्वभावात्कृपणासि यत्त्वं
द्रक्ष्यामि तत्त्वां पुनरेधि तुष्टा ॥११८॥
चन्दोरात्री क्रोधमूर्च्छामुपेता
क्रूरैः शब्दैः कर्कशाक्रोशयुक्तैः ॥
ऊचे स्वस्याः कन्यकाया रुदन्त्या
दैन्यं दृष्ट्वा दूयमाना दुरन्तम्[३] ॥११९॥

---

1. सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ।
2. जगतो मिथ्यात्वप्रतिपादनम् ।
१. कश्चित्—ख०
२. मप्यव—ख०
३. दुरन्तम्—ख०

किं नावमारोह्य कुटुम्बमेत-
दरित्रमङ्गं कृतवानसि त्वम् ॥
हातुः सुतां बालसुतां मदीयां
दया न ते चुम्बति चित्तमीषत् ॥१२०॥

परात्मजायावनवर्त्मपातं
कर्तुं विरक्तोऽयमभूतपूर्वः ॥
न शैशवे नापि च वार्धके हा
तारुण्यमाविष्कृतवान् विडम्बम्[1] ॥१२१॥

किं नैष्ठिको ना भवितुं तदेवं ?
चिकीर्षितं चेत्तव हन्त जाल्म ?
कुटुम्बपोषे किल कातराणां
विरक्तिमार्गः[2] सुगमो नराणाम् ॥१२२॥

दैवादुपेतैर्विषयैरजीर्णे जाते
विरक्ता बहवो भवन्ति ॥
त एव तेभ्यः स्पृहयालवो हा
दृष्टा धनिद्वारि पुनर्भ्रमन्तः ॥१२३॥

नेयं विरक्तिर्दुरदृष्टवेगो
यन्मोहितो हा सकलं विहाय ॥
[3]तुम्ब्या च यष्ट्या मलमल्लकेन
भिक्षिष्यसे भोः कृपणान् कणांस्त्वम् ॥१२४॥

अयं यशः साधुकुटुम्बपोषं
दानादुदीतं महिमानमुज्झन् ॥
सुखं च दैवोपनतं त्वमेत-
द्विरज्यसे ब्रूहि फलाय कस्मै ॥१२५॥

---

१. निर्दंवम्—क०
२. मार्गसुगमो—ख०
३. तुंम्यां च—ख०

सत्सङ्गतस्ते परिणाम एषः
सन्तो दरिद्राः स्वसमञ्चरन्ति[1] ॥
जनं समाविश्य विशस्य तूर्णं
पिशाचमेवातनुते पिशाचः ॥१२६॥

अजातपक्षाः शिशवो रुदन्ति
व्रताय तस्यास्य कृते च पत्नी ॥
अनन्यपुत्रौ पितरौ जरन्तौ
सुश्लाघ्यमेतस्य तपः कथं न ? ॥१२७॥

न कोपि रोद्धा सकलैरुपेक्ष्ये
गृहाश्रमे ते चरतस्तपस्याम् ॥
नाकर्णिताः किं जनकादयस्ते ?
गृहे स्थिता मुक्तिमुपागताश्च ॥१२८॥

न क्षत्रियाः क्षोणितले किमासन्
भविष्यदुन्मत्तममुं यतिमे ॥
जागातरं हा[2] श्रुतवान्सुताया
दुर्दैवतो मोहमुपेत्य नूनम् ॥१२९॥

तां नानकः शान्तमना बभाषे
मोहेन रूक्षाणि समालपन्तीम् ॥
लोष्टैर्हतो वा कुसुमैर्धृतो वा
ज्ञानी विकारं न मनागुपैति ॥१३०॥

क्षणे क्षणे [3]भज्यमानां नावमेतां समाश्रिताः ॥
मग्नाः सर्वेऽपि नियतमात्मानं नोद्धरन्ति चेत् ॥१३१॥

---

१. समाचरन्ति—क॰
२. हामृत–क॰
३. भज्ञमाना–ख॰

दया हरेरर्थकरी जनस्य
परस्परं किं दययाऽप्यदूनाम् ॥
व्याधस्य जाले पतिताः पतन्तः ॥
कुर्वन्ति किं वा दयया रुदन्तः ॥१३२॥

[1]ऊढा दिवोम्येत्य सुता त्वदीया
केनापि दैवादजरामरेण ॥
कालं कियन्तं सुखिनी तदास्या-
द्भूता जनेनेति तु वर्त्मयातम् ॥१३३॥

जायापती रोगवियोगमृत्यु-
शुक्रावनेकान्तमुखौ प्रसिद्धौ ॥
बद्धौ यदैवावमरं लमेत
तदा पलायेत विशृङ्खलः सन् ॥१३४॥

ये नैष्ठिकास्ते दुरदृष्टयः स्वीं
शुनोमनुश्वान इव भ्रमन्ति ॥
कुटुम्बपोषे विधृतप्रतिज्ञा
[5]ग्लायन्ति पोषाय[6] निजोदरस्य ॥१३५॥

उत्क्रान्ति कालेप्यभिलप्यमाणै-
र्भवेदजीर्णं विषयैर्नुकस्य ॥
विडम्बयेत्किं न जनं विरागा-
भासः ? क्षदाभास इव ज्वरार्तम् ॥१३६॥

---

१. पऊादिवो—ख०
२. दजगमरेण—ख०
३. जनेनीति—ख०
४. पैनेष्टिका—ख०
५. ज्ञायन्ति—ख०
६. पोर्षाप—क०

त्यक्त्वा स्वतोऽहं सकलां समृद्धिं
भिक्षां चरिष्यामि कुबुद्धियोगात् ॥
ये नीतिमन्तो निपुणा यतन्ते
राज्याय ते भैक्षभुजः किमर्थम् ? ॥१३७॥

अर्थादयस्ते सुखयन्ति साध्वि[1]
विध्वंसमाना हि सुरक्षिता ये ॥
तद्दूरदृश्वानमनश्वरस्य
सुखस्य लाभाय कृतप्रयत्नम् ॥१३८॥

सन्तः स्वयं स्वस्य समाचरन्ति
यं भाग्यवन्तं जननी प्रसूते ॥
गङ्गाम्बु[2] सन्तो मलयोद्भवश्च
वितन्वते स्वाश्रितमात्मतुल्यम् ॥१३९॥

प्रारब्धयोगेन[3] निजेन सर्वः
सुरक्षितो रक्षति कः कमत्र ?
रक्षाक्षमश्चेदितरस्य कश्चित्
स्वस्यैव रक्षां न कुतः करोति ? ॥१४०॥

अनेकजन्मार्जितपुण्यपुञ्जा
मुक्ता[4] गृहस्था जनकादयस्ते ॥
अन्योपि गार्हस्थ्यवरो न मोहा-
न्मुमुक्षमाणः परिहासमेति ॥१४१॥

दौहित्रकौ वीक्ष्य सुखं लभस्व
मामुन्मदिष्णुं विजहीहि भद्रे ॥

---

१. स्मार्गिव—क०
२. गंगांबु—क०
३. भोगेन—क०
४. मुक्ता—क०

समाहिता त्वत्तनया विपत्ति-
स्त्वयैव दुर्दैववशादुदीता ।१४२।

मग्नायां तरणौ यथा प्रतरणे शक्ता अशक्ता जनान्
धृत्वा रागवशेन तैर्नियमिता मज्जन्त्यमीभिः सह ॥
एवं स्वार्थपरैरनर्थमतुलं जानन्नपि स्वं जनः
संसाराम्बुनिधौ निमज्जति महामोहात्कुटुम्बैर्वृतः ॥१४३॥

स्वप्नेन्द्रजालोपममाशु विश्वं[१]
विहाय मुक्त्यै सुमतिर्यतेत ॥
चिन्ता कुटुम्बस्य वृथैव दैवं
न कोपि कस्यापि निवर्तयेत[1] ? ॥१४४॥

एवमुक्त्वा रुदत्येव परिवारे महत्यपि ॥
नानक्या प्रार्थितः किञ्चिदुक्त्वा प्रवव्राज नानकः[2] ॥१४५॥

तलवण्डीगतश्चाहं तमामन्त्र्य चिरागतः[२] ॥
पित्रादीन्वीक्षितुमना नानकानुगतीच्छया ॥१४६॥

विरक्ते नानके मासत्रयादूर्ध्वं सुतोऽभवत् ॥
लक्ष्मीचन्द्र इति ख्यातश्चन्द्रवत्प्रियदर्शनः ॥१४७॥

नानक्या प्रार्थितं दत्वा श्रीचन्द्रं दीनमानसा ॥
लक्ष्मीचन्द्रं गृहीत्वागाचन्दोराज्ञी सुलक्षणीम्[३] ॥१४८॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
वनगमनं नाम षष्ठः प्रस्तावः ॥



---

1. श्लो० १३० तः १४४ यावत् नानकस्य चन्दोराज्ञीं प्रति जीवनविषये व्याख्या ।
2. नानकस्याभिनिष्क्रमणं बुद्धस्य महाभिनिष्क्रमणाद्भिन्नम् । बुद्धः शयान परिवारं त्यक्त्वा गतो नानकस्तु रुदन्तं परिवारमिति ।

१. स्वप्नेन्द्र—क०

२. चिराङ्गत.—क०

३. सुलक्षणी—क०

# सप्तमः प्रस्तावः

यस्याः कटाक्षकलया सकलाप्यकस्मा–
त्स्वर्गापवर्गसुरधेनुरुपैति विद्या ॥
डिण्डीरपिण्डधवला परिधावतीह
कीर्तिश्च सा मयि सुतुष्यतु वागधीशा ॥ १ ॥

निर्गत्य नानको गेहात् वनेषु व्यचरद्वशी ॥
वृत्तिं[1] वन्यफलैः कुर्वन्ननिश्चितनिकेतनः ॥ २ ॥

क्वचिद्वृक्षस्याधः क्वचिदपि लताकुञ्जनिलये
क्वचिद्दर्यां सिंहैर्[2]द्रुतपरिहृतायां सविनयैः ॥
क्वचित्तुङ्गे शृङ्गे तपति तपने द्वन्द्वरहितः
स[1] तस्थौ स्वस्थात्मा विगतभयरागव्यतिकरः ॥ ३ ॥

श्रुत्वा कालःस्तनयनिगम खेदमापत् सभार्यो
मामप्राक्षीत्कथितमखिलं दीनदीनोऽशृणोच्च ॥
तं विक्षिप्तं स्वमतिसुमतिर्नालसिन्धो किमौज्झो ?
व्याहृत्यैवं विकलहृदयो मर्दनो[2] प्राहिणोत्तम् ॥ ४ ॥

मर्दनः समुपागत्य नानक्याः सविधे नमन् ॥
नानकस्य प्रवृत्त्यर्थमागतोस्मीत्यकीर्तयत् ॥ ५ ॥

नानकी साश्रुनयना निजगादानुतापिनी ॥
विहाय निवसत्यस्मान्नानको विजने वने ॥ ६ ॥

---

१. वृत्ति—क०

२. सिंहेर्द्रुत—क०

1. नानकस्याशानिश्चितनिकेतनत्वं प्रतिपादयति कविः ।

2. शिष्येषु मर्दनस्य नाम 'मर्दाना' इति प्रसिद्धोऽस्ति । मर्दनो मिरासी नानकमभूदित परिचर्तुमियाय ॥ स च नानकी नानक विनोदयितुं प्रेषयत् ।

अहं गमिष्यामि तदीयपार्श्व-
मित्युक्तवन्तं तमियं जगाद ॥
त्वं गच्छ तस्यान्तिक[1]मावसेय
विनोदयन्वैणिकतागुणेन ॥ ७ ॥
वेद् दूरदेशान्तरमेष[2] गच्छे-
द्यथा तथा त्वं सुमते ! पतेथाः ॥
मौलोसि[3] नस्तातकुलस्य कार्य-
मिदं त्वया कार्यमिहार्यबुद्ध्या ॥ ८ ॥
भोजितो भूरि सत्कारं नानक्या च विसर्जितः ॥
अन्विष्येऽहं वनान्तेषु भ्रातो[4]ऽप्येष धृतिं वहन् ॥ ९ ॥
जगत्यसारे जगतीनिवासं
भक्तो यथा भक्तिवशादुपैति ॥
तथा स तं प्राप वने वसन्तं
क्वचित्तरोर्मूलमलङ्करिष्णुम् ॥ १० ॥
विरुदमस्य पपाठ ननाम स
स्मितमुखस्तमथापत नानकः ॥
मम किमु[5] द्रुममूलनिवासिनो
[1]विरुदवर्णनया तव मर्दन ? ॥ ११ ॥
कुशल्यसि कुतः सौम्य स्मृतमात्रः समागतः ?
कच्चिन्मे वनवासस्य सचिवस्त्वं बुभूषसि[6] ? ॥ १२ ॥

---

१. तस्यान्तिकमाव—ट०
२. नदूरदेशान्त—ख०
३. मौलितो —क०
४. तान्तो—ष०
५. पयं—ख०
६. बनूपनि—ट०
1. विरुदवर्णनं नान्दियन गानवेन। विन्दो राजस्तुतिः। नानको राजविरतस्तस्य विरद॥

राजर्षिणा तेन तथाऽनुयुक्तो
वाग्मिर्जनानां हरतानुतापम् ॥
अवोचदुच्चैर्विनयावनम्रो
वचः स कालोचितमाप्तवाच्यम्[१] ॥ १३ ॥

स्वामी सर्वास्ववस्थासु पत्न्या परिजनेन च ॥
सम्माननीयः सततमेष धर्मः सनातनः ॥ १४ ॥

न न्यूनतां ते कलये महात्मन्
नाधिक्यमेवाधिगतं समीक्षे[२] ॥
पूर्वं नमस्यः किल कैश्चिदेव
साधोऽधुना सर्वजगत्प्रणम्यः ॥ १५ ॥

ज्ञातः पुरा योगिवरोऽधुना तु
पर्यंव्रजो ज्ञानसिराविरासीत् ॥
त्वत्सत्यसंकल्पतयानुकृष्टः
समाश्रितोऽहं तव पादपद्मे ॥ १६ ॥

पित्रा प्रवृत्यै प्रहितस्तवास्मि
स्वसाऽन्वदत्तेन सहैव तिष्ठेः ॥
कर्ता यथा सम्भवमेतयोश्च[३]
प्रोक्तं प्रसादं च तवाश्रयिष्ये[५] ॥ १७ ॥

मर्दनेनैवमुक्तस्तु नानको व्याजहार तम् ॥
वीणामानय भोः सौम्य ! गुणान्गायत ईशितुः[४] ॥ १८ ॥

---

I. १४ त: १७ यावत् नानकं प्रति कालस्य नानकयात्र सन्देशो मर्दनेनोक्तः ।

१. वाक्यम्—क०

२. समीचे—क०

३. मेतयोश्चं—क०

४. येशितुः—क०

५. क्यंविवक्षया न दुगो वर्तिन सन्धिरत्र ।

ओमित्युक्त्वा वैणिकानां निकाये
[1]वीणां [2]लिप्सुं मर्दनं पर्यटन्तम् ॥
विक्षिप्तं तं क्षत्रियं सेवमानः
किं त्वं वीणामिच्छसीत्याक्षिपंस्ते ?॥ १९ ॥

आक्रुश्यमानः परिभाव्यमानो
मूढैरविज्ञाततदीयतत्त्वैः ॥
निवृत्य बाढं[1] विमनायमानः
श्रीनानकं मर्दन इत्युवाच ॥ २० ॥

निन्दन्ति लोका नितरां भवन्तं
हसन्ति मां वैणिकदुर्दुरूढाः ॥
वदन्ति विक्षिप्तमनु प्रवृत्त-
स्त्वं किन्न विक्षिप्ततरोऽसि मन्द ! ॥ २१ ॥

निशम्य नानकोऽब्रूत व्रज वीणां समानय ॥
लोकस्तु सर्वथा भद्रं न कमप्याह मत्सरी ॥ २२ ॥

लोकानुरञ्जनरतं
[2]भगवन्तं जानकीपतिं निन्दन् ॥
कं मुञ्चति प्रपञ्चः ?
प्रपञ्चचञ्चुश्चिरंतनो हन्त[3] ॥ २३ ॥

---

1. "सारङ्गी" गुरुग्रन्थसाहिबे ।
2. लिप्सुम् प्राप्तुम् ।
१. बाढं–क०
२. भवन्तं–क०
३. हंत–क०

मर्दनः पुनरगात्स्वसज्जाति
वल्लकीविचयतत्परचेताः ॥
रंजयन्तमवलोक्य विपञ्च्या
वैणिकं यवनमेकमुवाच ॥ २४ ॥

कश्चित्प्रव्रजितो वने निवसति स्वच्छन्दसर्वक्रियः
शुश्रूषुः स च [1]वल्लकीरवमतो मां वैणिकान्वेषिणम् ॥
तस्यार्थे कलयस्व सौम्य ! यदि ते चेतः प्रसादो भवे-
देतं प्रेषय तद्विनोदविषये वीणाध्वनौ[२] दक्षिणम् ॥ २५ ॥

यवनः प्रणम्य मम भाग्यमिति
प्रशशाम तं झटिति गच्छ सखे ! ॥
सह मर्दनेन स जगाम वने
प्रणनाम नानकमुदीक्ष्य कृती ॥ २६ ॥

स्थित्वा गुणेषु [2]कोणं घटयन्तं[३] नानकस्तमाचष्ट ॥
अस्मै प्रयच्छ वीणां त्व मर्दन ! वादयस्वैनाम् ॥ २७ ॥

नाहं तथास्मि कुशलः शृणु सौम्य ! सम्यग्
वीणां प्रवीण इह वादयतामयं हि ॥
एवं वदन्तमपि मर्दनमेव वीणा-
वादे न्ययोजयत नानक आग्रहेण ॥ २८ ॥

आदाय मर्दनो निम्यद्वादयामास वल्लरीम् ॥
श्रुतिस्वरग्रामवाला आमूर्च्छन् मूर्च्छनास्ततः ॥ २९ ॥

---

१. ज्ञानीन्–क०
२. ध्वनौ–ख०
३. घटयत–ग०
४. विपञ्ची–वीणाभेदः ।
1. वल्लकी–वीणानाम ।
2. कोण घटयन्त = तार दृढ कुर्वन्तम् ।

वनजन्तवश्च विहगाश्च विलोलाः
[1]परिशुश्रुवुर्गतभया हृतचित्ताः ॥
इतरेतरं व्यरुदघेत्यसमन्ता-
दहिबभ्रुकाककरटादि न किञ्चित् ॥ ३० ॥
अखण्डचैतन्यमिदं समग्रं
स नानको नात्र विकल्पबुद्धिः ॥
वीणागुणैरेव रवः प्रतेने
स्पष्टाक्षरो बालककण्ठकल्पः ॥ ३१ ॥
किमुत चैतन्यमवाप्य भूयः
स वैणिको व्याहृतवान् विलक्षः ॥
नाश्रौपमेतादृशनादतत्त्वं
वीणाध्वनौ वीतवयाः कदाचित् ? ॥ ३२ ॥
गन्धर्वराजः किमु [1]तुम्बुरुस्त्वं ?
मां मोहयस्येतदुपेत्य रूपम् ॥
मनीषितं हन्त मुनेरुताहो
[2]यच्छन्दतत्वस्य तवात्रसिद्धिः ॥ ३३ ॥
प्रत्यर्पितां तेन ततो विपञ्चीं
स वैणिको नानकपादपद्मे[2] ॥
निधाय बद्धाञ्जलिरित्युवाच
तवोपहारः[3] परिकल्पितोऽयम् ॥ ३४ ॥
तं नानकोऽभाषत सुप्रसन्न-
स्त्वय्येव तिष्ठेदियमङ्ग ! वीणा ॥

---

१. तम्बुर—ख०
२. युग्मे—ख०

1. महंतस्य वीणावादनं श्रुत्वा वनजन्तवोऽपि मोहमापुः ।
2. वीणावादने सततरतस्य सिद्धिः = वीणया बालकण्ठध्वनिरिव ध्वनिरयादिति भावः ।
3. 'प्रत्यर्पिताम्' इत्यारभ्य 'तवोपहारः' इति पर्यन्तं 'क' पुस्तके नास्ति ॥

सद्योपयोगो भवतो यदस्या
नावश्यकस्त्वत्र यतस्तदर्थः ॥ ३५ ॥

कृताग्रहस्यापि न वैणिकस्य
वीणाप्रवीणो जगृहे गतः सः ॥
भूयोविपञ्च्यानयने स चित्तं[1]
श्रीनानको मर्दनमाबभाषे ॥ ३६ ॥

स्वसुः समीपं मम गच्छ याचे-
द्रव्यं विपञ्चीक्रयणार्हमङ्ग ! ॥
दद्यात्तदा तेन तदा तु वीणां
क्रीणीष्व नोचेत्कथयेस्तदुक्तिम् ॥ ३७ ॥

नानक्या पार्श्वमगमन्मर्दनो भ्रातृवत्सला ॥
भ्रातुः पप्रच्छ कुशलं सा भूयः साश्रुलोचना ॥ ३८ ॥

भ्राता भद्रे वसति विपिने वीतरागस्त्वदीय-
स्तातः स्वेनाप्रतिममहसा माननीयो मुनीनाम् ॥
वीणां क्रेतुं स्वरपरिमितां[2] मुद्रिका देहि मह्यं
तस्यादेशादुपगतवते श्रोष्यतः पुण्यगीतीः ॥ ३९ ॥

उक्ता तेनेत्यवितथगिरा नानकी तं बभाषे
कामं मुद्राः कलय सुकृतान्भ्रातरं मे कदाचित् ॥
नीत्वा गच्छेर्यदि तव यशो यावदायुः पठेयं
तेनाप्युक्तं भगिनि भवतीं भूय आलोकयिष्ये ॥ ४० ॥

---

१. चित्त–ख०
२. स्वरयति—क०
I. स्वरपरिमितामुद्रा—७ मुद्राः

ओमित्युक्त्वा मर्दनो निर्जगाम
गत्वा पार्श्वे नानकस्येति चख्यौ ॥
दत्ता मुद्रास्ते भगिन्या भवन्तं
द्रष्टुं भूयस्तप्यते वत्सलत्वात् ॥ ४१ ॥

पुनरागमन प्रतिश्रुतं भवता तत्सफलं विधीयताम् ।
तरुणानवकेशिनाहृतं कुसुमानामिव मण्डलं पुरः ॥ ४२ ॥

करुणावरुणालयस्त्वदीयां
गिरमाकर्ण्य जगाम तं निकेतम् ॥
तुलसी[1] तमुदीक्ष्य तुङ्गसौधा–
दवदत्स्वामिनि ! नानकोऽयमेति ॥ ४३ ॥

नानकी परमहर्षनिर्भरा
द्वारमागतवती दिदृक्षया ॥
चीरधारिणमुदीक्ष्य नानकं
नीरनिर्झरमुवाह नेत्रयो. ॥ ४४ ॥

पादयोर्निपतिता तपस्विनः
पावनस्य करुणाविलोकितैः ॥
सोऽब्रवीत् भगिनि किं विलप्यते ?
त्वं ममासि सहजा युगे युगे ॥ ४५ ॥
भ्रातृभावमधिगम्य यत्तु[1] मां
चिन्तयस्यनुदिनं दयातुरा ॥
तेन ते गतिरतीव शोभना
भाविनी जगति भूतिरत्र[2] च ॥ ४६ ॥

---

1. तुलसी=तन्नाम्नी दासी नानक्या ।

१. यतु मां—क०

२. भूरि—क०

सा भोजयामास ततः प्रसन्ना
प्रीत्या सदन्नं परिवेषयन्ती ॥
स्वयान्धर्व मर्दनमत्युदारा
क्षुत्क्षाममापृच्छ्य[१] पुनः पुनश्च[1] ॥ ४७ ॥

भ्रातरत्र वस पञ्चपाणि[२] वा
वासराणि हृदयं प्रसादयन् ॥
प्रार्थितः सहजयेति नानक-
स्तामुवाच परिसान्त्वयन्[३] वचः ॥ ४८ ॥

वियोगो दुर्वारो भगिनि सह जीवेन वपुषः
किमु प्रष्ठैरन्यैः स्थिरमिह न किञ्चिल्लसति यत् ?
अतः स्नेहं मन्दं कुरु विविधदुःखाकरममुं
मुकुन्दं[४] सेवेथाः स्वजनसुखकन्दं शुचिमति ॥ ४९ ॥[2]

प्रभावचक्रैर्हृदये भगिन्या
वचोभिराधाय सुधो विवेकम् ॥
स्नेहार्द्रचित्तान् जयरामकादीन्
सम्मानयन्नेष ततः प्रतस्थे ॥ ५० ॥

विलोकितो यैर्गजवाजिपत्ति-
धृतोर्मिसार्थैर्द्रविणानि वर्षन् ॥
तैर्मर्दनेनानुगतः स दृष्टः
सार्धं सुरत्राणपुरस्य लोकैः ॥ ५१ ॥

---

१. पृच्छ—क०
२. पंचधा—क०
३. परिभावयन्—ख०
४. प्रेष्टं—क०

1. सर्वत्र काव्येऽत्र मर्दनस्य बुभुक्षा वर्णिता क्षिप्ततेऽत्रापि नानको तं पुनः पुनरापृच्छ्य भोजयति । इत्थमत्र काव्ये मर्दनस्य बुभुक्षा हास्यमुत्पादयति कवाधिवरम् ।
2. स्वसुर्निवेदनं श्रुत्वा पुनर्नानकस्तस्यै उपदिशति "मुकुन्दं सेवेथा" इत्यादिना ।

कनकपञ्जरगोमधुराशनः
शुक इव प्रियमालपिता नृणाम्[२] ।
विधिवशाद्विगतः स ततोऽधिकं
सुखमवाप वने निरवग्रहः ॥ ५२ ॥

नानकोथ निजगाद मर्दनं
वल्लकीत्रिचयलोमचेतसम् ॥
ग्राममासिकपुरं[1] प्रयाहि भो
निम्नगा द्वितयमध्यगे वने ॥ ५३ ॥

तत्र फेरुरिति[2] कीर्तितो जनै-
र्वैणिको वसति वीतबन्धनः[४] ॥
प्रायशः स भगवज्जनान् वशी
पश्यति प्रणयतः स्वबान्धवान् ॥ ५४ ॥

मुद्रिका वितर तस्य ताः करे
नानकेन वनवासिनार्पिताः ॥
वल्लकीक्रयणकारणादिति
स्पष्टमस्य कथयेथ कोमलम् ॥ ५५ ॥

आज्ञां गृहीत्वा हनुमानिवोमिरां
रामस्य राजर्षिवरस्य तस्य सः ॥
सीतामिवान्वेष्टुमगाद् वनाद्वनं
वीणाप्रवीणः कृतभूरिसाहसः ॥ ५६ ॥

१. पजर—क०
२. नृणां—क०
३. वल्लकी—क०
४. बंधन—क०
५. वलकी—क०
1. "आसिकपुर" इति ग्रामनाम ।
2. फेरु = वैणिकः ।

नद्योर्मध्ये संकटे काननानां
दृष्टो ग्रामो मर्दनेनातियत्नात् ॥
पृष्टो भ्रातः ! कोऽसि कौतस्कुतोऽसि
नोक्तः केऽप्यस्तत्र केनापि तिष्ठन्[2] ॥ ५७ ॥
श्रान्तो भ्रान्तो मर्दनो निर्जगाम
ग्रामाचस्मादप्युदासीनचेताः ॥
अन्ते सीम्नः सौम्यरूपं सुवेषं
वीणापाणिं पूरुषं सददर्श ॥ ५८ ॥
अनन्तमिव[1] कौण्डिन्यस्तं दृष्ट्वानन्तशर्मभाक्[2] ॥
अयं स्यादिति सञ्चिन्त्य जगाम मृदुमर्दनः ॥ ५९ ॥
कोऽसि सौम्यवपुरन्तरधारी ?
नारदो भ्रमसि भूमितले त्वम् ॥
वीणया हरियशः किमु गायन् ?
नानकेन कथितः[3] किमु फेरुः ? ॥ ६० ॥
तेनोक्तमन्ते कथितोस्मि साधो
को नानकः पृच्छसि मां किमर्थम् ? ॥
सोऽब्रूत संसारविरक्तचेताः
श्रीनानकः प्रव्रजितो वनेऽस्ति ॥ ६१ ॥
तद्वैणिकोऽहं प्रहितोऽस्मि तेन
भवत्समीपं दिवसत्रयेण ॥
लब्धोऽसि वीणामथ देहि मह्यं
गृहाण मुद्रा मुनिनार्पितास्ते ॥ ६२ ॥

---

१. भ्रांतः प्रत्यगारस्नेहेण—क०
२. ष्टन्—क०
1. कौण्डिन्यो मुनिः । यथा कौण्डिन्योऽनन्तदृष्ट्या शान्तो मुदायैव मर्दन इति भावः ।
2. अनन्तशर्मभाक् = अत्यानन्द प्राप्त ।
3. यस्य विषये नानकोऽप्यपृच्छत एव त्वमन्यो वेत्ति ?

इत्युक्त्वा सप्तमुद्रा ददति करतले मर्दनो स्मेरवक्त्रः
फेरुः प्रोचे कृतोर्वः सुनिपुणमतिना नानकेन स्वराणाम् ॥
प्रत्येकं मुद्रिकैकापणलघिमहतं पण्यमेतन्महीयो
नाहं दास्ये तदीयं यदि समधिगतो दर्शनं शेवधिर्नै ॥ ६३ ॥

वाङ्माधुर्यान्मर्दनः सुप्रसन्न-
स्तं व्याजह्रे त्वं मया सार्धमेहि ॥
भूयान्मायी योगिनः पश्यतस्त्वां
प्रेमाक्षेमाधायकस्यावलोकात् ॥ ६४ ॥

ततो यशोर्थाविव पुण्यवन्तं
तं जग्मतुर्वैणिकसत्तमौ तौ ॥
प्राप्तः कृतार्थो नवमे दिने च
नैमे स फेरुः किल मर्दनाख्यः ॥ ६५ ॥

फेरुं नमन्तं विनिवेद्य वीणां
स्पर्धां महत्याः सततं दधानाम् ॥
सन्तर्पयत्स्नेहदयावलोकै-
र्योगीश्वरो वाक्यमिदं जगाद ॥ ६६ ॥

कोऽसि कुत्र च विलोकितश्चिरं ?
बन्धुबुद्धिमवगाहसे कुतः ?
सज्जते विगहते तु कुत्रचि-
[1]न्मानसं हि परलोकबन्धुषु ॥ ६७ ॥

अन्यापि वीणा महतीमतिक्रान्ता कुतोऽर्जिता ॥
रागैः पूर्णोपि विविधैर्वीतरागो विलोक्यसे ॥ ६८ ॥
मर्दनेन कृता पूजा गृहीताङ्क ? मवेद्यदि ॥
तदा प्राप्ता मया वीणा प्रवीणानां शिरोमणे ॥ ६९ ॥

1. केन्नानकपूर्वजन्मवृत्तान्तस्मरणम् ।

उवाच वाचं वचसो विरामे
योगीशितुः फेरुरुदारचेताः ॥
अन्ते गभीरस्तनितस्य केकां[1]
बर्हीव वर्षासु विनोदयन्तीम् ॥ ७० ॥

सर्वज्ञतां बिभ्रणन्ति न सर्वज्ञा महाधियः ॥
अतोऽहमेव कथये श्रीपादैर्ज्ञातमप्यदः ॥ ७१ ॥

ग्रामोऽस्ति स ज्ञानपुराभिधानो-
ऽन्वर्थः स सज्ञानजनैर्वसद्भिः ॥
तत्रानसरकश्चन प्राणनाथः
सुतौ सुता तस्य विभो ? बभूवुः ॥ ७२ ॥

भवानभूत्सुन्दरनामधेय-
प्रेमाभिधोऽहं भवतोऽनुजश्च ॥
स्वसावयोर्जन्मनि तत्र जाता
ख्याता सुशीला खलु सुन्दरीति ॥ ७३ ॥

पित्रानुशिष्टावपि तस्य कर्म
विहाय संसारविरक्तचित्तौ ॥
आवामगायाव गुणान्मुरारे-
र्बालौ विनीतौ पिकचारुकण्ठौ ॥ ७४ ॥

श्रोतुं जनानामभवत्समाजो
दिने दिने द्वारि विवर्द्धमानः ॥
स्वार्थस्य हानिं जनको विलोक्य
विनासयामास तदा स्विलावाम् ॥ ७५ ॥

1. केका वाणी मयूरस्य ।

क्रोशात्परं काननमस्ति रम्य-
मावामगासीष्व गतौ च तत्र ॥
तपस्विना तोषकरी मृगाणां
मोहाय नौ गीतिरभूत्सुभव्या ॥ ७६ ॥

तपस्विना प्रीततरेण दत्ता
सेयं विपञ्ची विपिने वरिष्ठा ॥
ग्रामतानाः[1] किल वाहितायां
सप्तस्वरा यत्र समुन्मिषन्ति ॥ ७७ ॥

निक्षेप एषा भवतोर्पिता ते
जन्मान्तरस्य स्मृतिसाधनं च ॥
जातिस्मरत्वादिगुणा यदस्मिन्
पदाब्जयोस्ते स परं प्रसादः ॥ ७८ ॥

असागरोत्थं किल रत्नमेत-
द्भवन्तमर्हत्यपरं न कश्चित् ॥
सैषावतारान्तरमाश्रितं त्वां
सुदर्शनः कृष्णमिव[2] प्रपेदे ॥ ७९ ॥

जातिर्निकृष्टापि भवादृशां न
दोषाय विष्णोरिव[1] सूकरत्वम् ॥
कर्मापि मालिन्यकरं न किंचित्
[2]हरेरिवाभीरवधूविलासः ॥ ८० ॥

---

1. ग्रामतानाः = रागो द्विविध । तानप्रधानः मूर्च्छनाप्रधानश्च । तत्र ग्रामः "यथा कुटुम्बिनः सर्वेऽप्येकीभूताभवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते" इति । इत्थं स्वरसन्दोहोग्रामः स च द्विविध इति प्रोक्तः ॥
2. विपञ्ची सुदर्शन इव सुगुने कृष्णस्य इव नानकस्य।
१. विष्णोरिव–क०
२. हरे–क०

त्वमीश्वरांशोऽसि मनुष्यजन्म
गृह्णन्विनोदेन युगे युगे यत् ॥
अज्ञैर्न विज्ञेयगतिस्तवः किं
भ्राम्यन्तु विज्ञा अपि ते चरित्रे ॥ ८१ ॥

कः प्राकृतो नाम जनो विरज्ये-
त्स्फीतां समुत्सृज्य समृद्धिमद्धा[1] ॥
आविर्भवेयुः सह योगसिद्ध्या
[1]तत्त्वावबोधा हि गुणाश्च कस्य ॥ ८२ ॥

अस्मिन्कलौ मन्दमतीनशक्तान्
शास्त्रोक्तचर्यासु किलानुकम्प्य[2] ॥
भाषाप्रबन्धैर्भगवद्यशांसि
त्वं ग्राहयिष्यस्यथ मोक्षमार्गम् ॥ ८३ ॥

एवं फेरो निगदति स्मेरः श्रीनानकोऽब्रवीत् ॥
अस्त्वप्रस्तुतवार्तेयं वल्लकीं वादयस्व भोः ॥ ८४ ॥

वीणायां वाद्यमानायां फेरुणा नानकाज्ञया ॥
"नानकोयं निराकार" इति प्रादुरभूद् ध्वनिः ॥ ८५ ॥

विश्वावसुर्वा किमु चित्रसेनः
किं तुम्बुरुर्नानक एव वायम् ॥
फेरुं विपञ्चीं रणयन्तमन्त-
[3]र्व्यकल्पयन् काननचारिणस्ते ॥ ८६ ॥

---

1. भद्रा इत्यप्ययं निश्चयार्थं ।
१. नाद्धा–क०
२. कम्प्यम्–ख०
३. र्व्यकल्पयन्—ख०

वीणानादेन मुदितो नानकः फेरुमब्रवीत् ॥
"फेरो तत्त्वज्ञना[1] तेऽस्तु" गच्छ सौम्य यथासुखम् ॥ ८७ ॥

फेरुं ततः प्रापयितुं गतः कृती
श्रीनानकादेशमवाप्य मर्दनः ॥
पप्रच्छ[1] वार्तां जनुरन्तगेऽध्वाम्
क्रोशार्धमार्गे स तिरोदधेऽद्भुते ॥ ८८ ॥

आगत्य मर्दनमिदं समुदीरयन्तं
चित्रं विहस्य निजगाद स योगिवर्यः ॥
चित्रं जगत् सकलमेव न पश्यसि त्वं
कालं महान्तमसदप्यनुवर्तमानम् ॥ ८९ ॥

तस्मिन्नरण्ये कतिचिद्दिनानि
निन्ये तरोर्मूलमुपाश्रितः सः ॥
अनुक्षणं मर्दनवाद्यमान-
वीणानिनादेन विनोदितात्मा ॥ ९० ॥

भूमौ[2] चतुर्थ्यामवतिष्ठमानो-
विक्रान्तभाव्यो वशवायुचित्तः[3] ॥
स एकदा स्वासनमाश्रितः स-
न्नवाप निर्बीजसमाधिनिद्राम्[4] ॥ ९१ ॥

---

1. 'फेरो तत्त्वज्ञना तेऽस्तु" इत्याशीर्वचनं नानकस्य ।
१. प्रपच्छ—ख०
२. "स एकदास्वासनमाश्रित सन्—
नवाप निर्बीज समाधि निद्राम्"
श्लोकार्धोऽयं "क" इत्यत्र नास्ति ।
३. योगसाधने सलग्नो नानकः परज्योति पश्यन्नानन्द ।
४. 'क' इत्यत्रास्ति ।
ख' इत्यत्र नास्ति ।

सुषुम्नया प्राणसमीरमुच्चै-
निरुध्य नष्टत्रिपुटीविभागः ॥
स तीव्रसंवेग उदीतमेकं
पश्यन्परं ज्योतिरहो ननन्द ॥ ९२ ॥

दिनत्रयं तस्य तथा जगाम
[1]कल्पत्रयामं[2] किल मर्दनस्य ॥
तातप्यमानस्य बुभुक्षया च
व्याघ्रादिभीतस्य वने च घोरे ॥ ९३ ॥

अहं म्रिये नानक ! भोः क्षुधार्तो
व्याघ्रादिभक्ष्यत्वमुपाश्रये च ॥
इत्थं वराको बहुधा विलप्य
पलायतालं कलयन् विपञ्चीम्[2] ॥ ९४ ॥

कथं पतङ्गो गरुडेन सार्ध-
मुड्डीयतां मोहगृहीतमार्गः ॥
प्रद्योतकेनापि[3] समं तपस्वी
द्योतेत खद्योतक उन्मदः किम् ॥ ९५ ॥

स भिक्षमाणो नगरेषु गत्वा
नष्टं जनुः स्वस्य च मन्यमानः ॥
ययौ सुरत्राणपुराय दीन-
स्तं नानकं वीक्ष्य परं रुरोद ॥ ९६ ॥

---

१. त्रिपटी—ख०
२. प्रयाम—ख०
३. प्रद्योतने नापि—ख०
1. कल्पत्रयामः कल्पत्रयपर्यन्तः ॥
2. महती, विपञ्ची, इति वीणायाः पर्यायौ। तत्र विपञ्च्याः न पृथक् महत्त्वम्।

आश्वास्यमानापि ऋतैर्वचोभिः
श्यालप्रभावं विदता धवेन ॥
नारीस्वभावोपचिताशु मोहा-
[1]द्पायशङ्कां मनुजस्य चक्रे ॥ ९७ ॥

भ्राता ममास्ते कुशली न वा त्व—
मेकः किमायात इहातिदीनः ॥
तया रुदत्या बहुधेति पृष्टः[2]
स्वस्यस्तनो मर्दन इत्युवाच ॥ ९८ ॥

भ्राता भवत्याः कुशली स योगी
दिनत्रयं बद्धसमाधिमुद्रः ॥
अहं वराकस्तमनुव्रजेयं
कथं बुभुक्षादिनिपीडितात्मा ॥ ९९ ॥

विक्रोशतो मे न यदाशृणोत्स
व्याघ्रादिसत्त्वैरतिभीपितस्य ॥
अपासरं[1] जीवितरक्षणार्थी
भिक्षां चरन्नत्र तदाहमागाम् ॥१००॥

परिदेवितमस्य नानकी
ऋतमेवेत्यवसाय चेतसा ॥
महतीं करुणामुपेयुषी
[2]नखसंख्यां वितवार मुद्रिकाम् ॥१०१॥

---

१. दयादरा—क०

२. पृष्ठः—क०

1. अत्र मर्दनस्य चरित्रं दृष्टिपथमायाति । स नानक इवोपवासं कर्तुं न शेके ।

2. नखसंख्या = विंशतिः ।

जगाद चेदं यदि पार्श्वगे वने
तिष्ठेश्चदेहोपगतस्त्वमत्स्यसि ॥
नो चेदभूमिश्चरितान्नसंग्रह--
स्त्वस्यानुसारी न विपत्स्यसे क्षुधा ॥१०२॥

चिरन्तनस्त्वं मम तात ! लोक-
हिताभिकाङ्क्षी न च दृष्टदोषः ॥
तस्यानुकूलस्त्वयि सन्निधिस्थे
मच्चित्तमाश्वासमुपैति[1] सौम्य ! ॥१०३॥

आश्वास्य तां स निजगाद न नानकस्य
त्यक्ष्यामि सङ्गमहमामरणं न कालम् ॥
एष व्रजामि विपिने विपिने भ्रमन्तं
तं धैर्यवाननुसरामि विनोदयिष्यन् ॥१०४॥

वने व्युत्थितं नानकं स प्रपेदे
[2]रेवमासीः कुतो मर्दनेति ब्रुवन्तम् ? ॥
अवोचत्क्षुधा क्रन्दतो नाभ्रृणोमें
दिनानां त्रयं सर्वतो भीतिभाजः ॥ १०५ ॥

व्यतर्कयं षोडशघस्रलङ्घनैः
[I]प्रयान्ति यत्प्राणकलाः श्रुतोदितम् ॥
भवेत्तदन्यत्र दिनैस्तु [3]पञ्चपैः
प्रयान्ति मे प्राणकला न संशयः ॥ १०६ ॥

---

१. मयंति—ख०

२. रवमारगी—क०

३. विलोटित—ख०

I. षोडशघस्रलङ्घनैः प्राणकला प्रयान्ति इति तु अन्यत्र भवेत् मम तु पञ्चभिरेव दिनैः प्राणकला प्रयान्ति इति भावः ॥

समाधिनिष्ठे त्वयि भूरि वासरान्
मृते मयि प्रोद्धतजाठरानलात् ॥
स गृध्रगोमायुवृकैर्विलोडितं
वपुर्विडम्बास्पदतामिदं व्रजेत् ॥१०७॥

इत्यालोच्य सुरत्राणपुरं यातो दयार्द्रया ॥
नानक्या विंशतिर्मुद्रा मद्व्ययार्थं[१] समर्पिताः ॥१०८॥

अधुना त्वं समाधत्स्व वने वा भ्रम निर्जने ॥
अहं त्वनुगमिष्यामि [1]स्कंधसंबद्धशृम्बलः ॥१०९॥

पूर्वं जहास चिरमस्य वचो निशम्य
श्रीनानकस्तदनु वाक्यमिदं जगाद ॥
प्रत्यर्पय द्रुतमिदं वसु मे भगिन्याः
नाकर्णयः किल ददाति [२]यदायुरत्नम् ॥११०॥

जगाम नानकत्रासादनिच्छन्नपि[2] मर्दनः ॥
मुद्राः प्रत्यर्पयामास नानक्यै पुनरागमत् ॥१११॥

त्यक्त्वेदं विपिनं व्रजेयमितरद्योगीव जीर्णं वपु-
स्त्वं वा ब्रूहि कुतो यियासुरसि ? भोः सत्यं वचो मर्दन ? ॥
उक्ते नानकयोगिनेति करयोः कृत्वा पुरं सोऽब्रवी-
त्पृथ्वी तावदियं तवैव सकला यत्रेच्छ तत्र व्रज ॥११२॥

अहं विपद्ये प्रथमोर्मिणैव
षड्र्मयस्त्वां व्यथयन्ति नैव ॥
सङ्गस्त्वदीयो न मया विहेय
स्तन्मां विभो ? द्वन्द्वमहं विदध्याः ॥११३॥

---

१. मद्यार्थं—ख०

२. पदात्तुरत्नम्—ख०

1. स्कन्धसम्बद्धशृङ्खलः=स्कन्धे पाशेपनीता ॥

2. आनच्छन्नपि मर्दनो नानकत्रासाज्जगामेति स्पष्टं मर्दनस्य त्रासं चक्षुषी प्रथमवन्ति ॥

नानकोऽब्रूत याचस्व मर्दनेदं महेशितुः ॥
स मेरुमणुतां नेतुमणुं शक्तश्च मेरुताम् ॥११४॥
सोऽब्रवीत् किन्न जानीमः पामराः परमेश्वरम् ॥
विना त्वदुपदेशेन देशिकेंद्र ! दयानिधे ! ॥११५॥
अथ नानक उक्तवान्प्रबुद्धो
यमनाबादकृतास्पदोऽस्ति तक्षा ॥
जतुरन्तरसङ्गिनं तमेत्र
व्रज लालेति समाख्यया प्रसिद्धम् ॥११६॥
उक्त्वा तथेति तमनुव्रजताऽथ तेन
वीणाधरेण पथि वागियमभ्यधायि ॥
ज्ञानानलो दहति कर्म समूलमेव
नारुणित वदसि किं विदुषोऽपि जन्म ॥११७॥
तमब्रवीन्नानकयोगिवर्यः-
प्रारब्धतो यद् दहति प्रबोधः ॥
कर्मेति सत्यं खलु तज्जयाय
चरन्ति योगं कृतबुद्धयो ये[2] ॥११८॥
अभ्यासवैराग्यमहोद्यमेन
महेश्वरस्य प्रणिधानतो वा ॥
द्रष्टुः स्वरूपे स्थितिरेव तस्य
मुख्यं फलं सिद्धिगणास्तु[3] गौणम् ॥११९॥
यः सिद्धयोगो बहुनिष्णुरेव
योगी स लीलाकलितेष्टदेहः ॥
मुञ्चन् शरीरं समये न किंचि-
त्स्कर्णीव निर्मोकमुपैति दुःखम् ॥१२०॥

---

१. मण्डनो—क०
२. योगे—क०
३. गणस्तु—ख०

सिद्धीः कथंकारमुदीरयेयं
योगस्य सिद्धौ[1] जगदीशकृत्ये ॥
प्रागल्भतः क्रोधमुपेत्य योगी
स कौशिकः शक्तिभिरिद्धचेताः[2] ॥१२१॥
न ज्ञानिनो हन्त ! भवप्रवाहो
ज्ञातस्वरूपो विदधाति दुःखम् ॥
चोरः परस्यातिभयप्रदोऽपि
स्वं जानते प्रीत्युपदां ददाति ॥१२२॥
वहेन्निमज्जे सरितः प्लवेत्र
भजेन्न भीतिं तरणे प्रवीणः ॥
यस्तन्न जानाति स वार्यगाधे
त्रिधादरं [3]प्राज्यतरं प्रयाति ॥१२३॥
उपासते कामनया सुरान् ये
फलं न कर्मापरिपाकतश्च ॥
व्रजन्ति तस्मिन् जनने परोक्ष-
ज्ञानाज्जनुर्यान्ति च ते तदर्थम् ॥१२४॥
यो न शोके न विपदि न हर्षेण न संपदि ॥
युक्तः स योगी जगति [1]लीलाकलितविग्रहः ॥१२५॥
नानकोदितमिद स निशम्य
प्रासदत्प्रचुरधीरवदश्च ॥
ईदृशस्त्वमधुना विधिना मे
दर्शितोसि न परो वरयोगिन् ॥१२६॥

---

१. सृष्टर्च–ख०
२. तेजा –ख०
३. न्यतर–ख०
1. लीलाकलितविग्रह स एव भवति यस्य विग्रह शरीर सुखे दु खे च समान भाव रखति ॥

परस्परालापसुखेन खेद-
मवापतुस्तौ न पथि प्रयुक्तम् ॥
अत्यष्टिसंख्यैर्दिवसैः पुरं तत्-
प्रजग्मतुर्लम्बितभूरि देशौ ॥१२७॥

लालस्तु दूरात्तमुदीक्ष्य हृष्टः
उत्थाय साष्टाङ्गनतिं चकार ॥
निशाकरं पूर्णमुपेत्य तूर्णं
समुद्रवद् वृद्धिमतीव दध्रे ॥१२८॥

किं नाम ते कुत्र विलोकितोसी-
त्युदीरयन्तं तममी जगाद ? ॥
त्वं स्वाश्रमे नाम मदीयमुक्त्वा
पृच्छस्यहो ? विस्मरणस्वभाव.[2] ॥१२९॥

अनेकजन्मनां वार्तां जैगीषव्य इव स्मरन्[3] ॥
परीक्ष्यसे मां किमहो कुत्र दृष्ट इति ब्रुवन् ॥१३०॥

स्मेरस्य तस्य वचसा स च नानकस्य
प्रक्षाल्य पादयुगमासनमुत्ससर्ज ॥
चाम्पादिकीलपटने कलयन् यदास्त
तन्न्यस्तवान्सपदि भोज्यममुष्य चक्रे ॥१३१॥

उपानयत्सर्षपशाकयुक्ताः
सा वाजरी पिष्टजरोटिकास्ताः ॥
साग्रूपमालोक्य मर्दनस्तु
स्मेरस्ततो योगिवरो बभाषे ॥१३२॥

---

१. प्रजग्मतुर्लंबिप—क०
२. विस्मरणस्वभाव—क०
३. अंगीकृत्यस्मरमाम्—ख०

आनीतं भज सुजनेन भोज्यमेत-
त्साम्यां वितर न मर्दनेह दृष्टिम् ॥
श्रीदाम्नः पृथुकमिवेश्वरः कृतज्ञा
भक्तानां लवमपि भूरि भावयन्ति ॥१३३॥

तयोरश्नतोर्मर्दनो वाचमूचे
पृथिव्यामिदं स्वादु नैवोपलब्धम् ॥
सुधामाहृता स्वर्गतः किं निविच्य ?
ययाचे द्रष्टुं लालसिद्धः स्वशक्त्या ॥१३४॥

भुक्त्वोत्थितं जिगमिषुं लालो नानकमब्रवीत् ॥
मामभास्वेह नावज्ञा यदि ते यतिसत्तम? ॥१३५॥

स्वीकृत्य तस्थौ यतिवर्य एत—
त्तं मर्दनो विज्ञपयाम्बभूव ॥
दृष्ट्वा कुटुम्बं पुनरत्र शीघ्र-
मागन्तुमिच्छामि भवन्निदेशात् ॥१३६॥

कृतानुज्ञो गतस्तेन मर्दनस्तलवण्डिकाम् ॥
अपृच्छन्नानकोदन्तं कालस्तं क्लान्तचेतनः ॥१३७॥

मर्दनः स्पष्टमाचष्ट त्वचो विरहितोऽपि सः
उदयाद्रेरिव रविर्न शोच्यः[2] प्रस्फुटन्महाः ॥१३८॥

किं वर्ण्यतां वेदिकुलावतंसः
स नानको यस्य तपस्विनोऽपि ॥
तपःप्रतापस्तप भानुभास्वान्
यशः शरच्चन्द्रमरीचिशुभ्रम् ॥१३९॥

---

१. विज्ञापयां—क॰
२. शोच्यप्रस्फु—क॰

कलौ कलावान्क इवेदृश. स्याद्-
अहो वशीकारविरक्तियुक्तः ॥
श्रद्धा[1] दधानोपि च योगसिद्धोः
साधारणः सर्वजनेषु भाति ॥१४०॥

कालेन तदुपाकर्ण्य सुतशोकादुदीरितम् ॥
[1]मृषैव चाटुकारत्वं स्वज्जातिप्रकृतिः किल ॥१४१॥
नानको यमनावादे यमेन नियमेन च ॥
दिने वनेऽनयत्कालं रात्रौ लालगृहेऽवसत् ॥१४२॥

अध्यात्मवादबहुलाःकथयन्कथास्ता[2]
रात्री स पञ्चदश लालगृहे निनाय ॥
याभिर्जनस्य मलिनेपि मनस्युदञ्चे-
अन्मादिदोषविदुषो[3]ऽस्य जगज्जिहासा ॥१४३॥

तद्देशपालयवनाधिपतेरमात्य-
स्तं दाहुदो मलिक[4] इत्यभिधीयमान. ॥
भूदेवभोजनदिने यतिमाजुहाव
विप्रेण पञ्चम इति प्रथितेन भोक्तुम् ॥१४४॥
आहूतोऽपि न सोऽगच्छत्तं[5] च मेने मुहुर्मुहुः ॥
मलिकः क्रोधताम्राक्षः पुनरेव तमाह्वयत् ॥१४५॥

---

1. मर्दनस्य वंणिग्जातिगतसामान्यदोष चाटुकारत्वं निन्दति बाल ।
   चाटुकाराणां मृषावादित्व सकलजनाभिज्ञमेव ॥

१. श्रद्धा—क॰
२. स्ता —क॰
३. विदुरस्य—ज॰
४. दत्त पाठ—ज॰
५. मलिजा—ग॰
६. गच्छेत् ॥ च—ग॰

गतो नानकस्तत्र तं वीक्ष्य रोषा-
दवोचत्स शूद्रस्य न क्षत्रियस्य ॥
त्वमत्स्यन्नमेतादृशः कस्तपस्वी ?
धराधर्मसेतुः कुतो वाऽगतोऽसि ? ॥१४६॥

देहि भोज्यमिति नानक ऊचे
शष्कुलीः स च ददावतिमृद्वीः ॥
अग्निना यनवकोद्रवजाता
रोटिका युगपदेव चचाल[१] ॥१४७॥

वामेन हस्तेन दधार शष्कुली[२]-
र्दक्षेण दत्तः स च रोटिकास्ततः ॥
[I]रक्तप्लुताः शष्कुलिका विलोकिता-
स्ता रोटिकाः किं च तदा पयःप्लुताः ॥१४८॥

नानको मलिकमेतदवोचद्
भोजयस्यहह लोहितमेव ॥
तं निशम्य चकितोऽखिललोको
लज्जितस्तु मलिको मलिनास्यः ॥१४९॥

म्लेच्छाधिपस्य तनयोऽस्य बभूव रुग्णः
काले गते कियति तं सहसा प्रबोध्य ॥
आरोग्यमस्य कुरुतेत्यखिलानवम्रा-
त्सिद्धानसौ च मलिको धृतपूर्वरोषः ॥१५०॥

---

१. चलालः—क०

२. सस्कुलि—क०

I. या रोटिकाः पयः प्लुता आसन् ता एव रक्तप्लुता अवलोकिता नानकमाहात्म्यात् ॥

सिद्धाभासास्तेन बद्धा विपत्तिं
नानारूपां नीयमाना नितान्तम् ॥
[1]अग्रौढत्वान्निग्रहेऽनुग्रहे वा
सर्पभ्रान्त्या रज्जवो[2] दण्डितास्ते ॥१५१॥

तेषां विपत्तिमवलोक्य दयार्द्रचित्तो
लालो विलप्य बहु नानकमेतदाख्यत् ॥
बद्धा म्रियन्त इह हा ! यवनस्य गेहे
सिद्धास्त्वमेवमसि निर्दयतां गतश्चेत् ॥१५२॥

नानको यवनराजमवोच-
न्मुञ्च सिद्धनिवहं यदि सूनोः ॥
[2]वार्तमिच्छसि न चेद्धुनैव
पश्यसि '[3]स्वकृतमप्रतिकार्यम्' ॥१५३॥

मुक्ताः सिद्धा म्लेच्छराजेन सर्वे
नत्वा भूयो नानकः प्रीणितश्च ॥
सूनोस्तस्यारोग्यमासीदकस्मा-
ज्जाता कीर्तिर्योगिनोऽस्याभदाता ॥१५४॥

इति श्री जगद्गुरुनानकथायां नानकचन्द्रोदयसमाख्यायां
सिद्धविमोचनं नाम सप्तमः प्रस्तावः ॥

---

१. अप्रौढ़त्वा—क॰ २. रज्जिना—क॰
३. कृतप्रतिकार्यम्—ख॰
I. सिद्धनिवह् यवनराजसाला मोचयित्वा मानक धरो एवाभिमतार्थोऽस्ति भाव ।
2. वार्तं कुशलमिति ।

## अथ अष्टमः प्रस्तावः

हंसासनां स्फटिकमालिकयाम्बुजेन
राजत्करां सितशुकेन च पुस्तकेन ॥
कुन्देन्दुचन्द्रशरदभ्रसगोत्रभासं
चेतः समुल्लिखति काञ्चन देवतां मे ॥ १ ॥

बोलाररायस्तलवण्डिकाया-
माकर्णयन् मर्दनमागतं तु ॥
अवोचदाहूय ममावसानं
जरापरीतस्य न दूरमस्ति ॥ २ ॥

नानकमानय मर्दन !
[1]दिदृक्षते मे मनो नियतम् ॥
साधोस्तस्य विलोकन-
मन्ते मम तारणायालम् ॥ ३ ॥
मर्दनोऽब्रूत राजेन्द्र ! बालसिन्धुं मया सह ॥
प्रेषयस्व स तन्मित्रमानेष्यति न संशयः ॥ ४ ॥
बोलारराय आहूय[1] बभाषे कृतसत्कृतिः ॥
त्वदेककृतिसाध्यं भो ! नानकानयनं द्रुतम् ॥ ५ ॥
वृद्धस्य तस्य प्रणयं यतीन्द्रे .
निर्व्याजमालोक्य मयाभ्युपेतम् ॥
समर्दनोऽहं निरगां च तूर्णं
तद्दर्शनोत्साहविकृष्यमाणः ॥ ६ ॥

---

1. आर्यानिदेऽत्र श्लोके जरापरीतस्य बोलाररायस्य नानकं प्रति सद्भावना सौहार्दं च लोचनपथमश्नतः ।

१. हूय-क०

गतो दिनैर्भूरिभिरस्य पार्श्वे
निषेवितं सूरिभिरात्मनिष्ठैः ॥
[1]साष्टाङ्गमानम्य फलैश्च पुष्पै-
रपूजयं लालगृहे यतीन्द्रम् ॥ ७ ॥

आलोक्य मां [1]प्रेमविशेषरम्य-
मिदं बभाषे करुणाविधेयः ॥
किं बालसिन्धो ? कलितः कुटुम्बै-
रस्मान् विसस्मार भवान्[1] नितान्तम् ॥ ८ ॥

अवादिषं तं चरणौ निपीड्य
[2]निस्मर्यते यो बहिरस्ति लोकः ॥
[2]चित्तशय्यामधिशय्य दीव्य-
त्यसौ कथं विस्मरणस्य पात्रम् ? ॥ ९ ॥

मलीमसानि[3] त्वदद्दर्शनेन
दिनान्यतिष्ठन्त्यपि दुष्टदैवात् ॥
आयान्ति तीर्थे सलिलस्य वेगाद्
यथा चिताङ्गारवितानकानि ॥ १० ॥

यशांसि शृण्वंस्तव जातहर्षः
प्रतिक्षणं ध्यानपरस्तवैव ॥
बोलाररायो जरया श्लथाङ्गो
निश्रापयामास पदाब्जयोस्ते ॥ ११ ॥

---

1. प्रेमविशेषरम्य बालसिन्धु 'भवान्' इति पदेन सम्बोधितवान् ॥
2. म चित्तशय्यामधिशय्य दीव्यति स न विस्मर्यत इति भावः।
3. मलीमसानि = पापानि ।

१. साष्टांग-ख०
२. विस्मर्यतेयो-ख०
३. मलोम-ख०
४. जयपो-ख०

ग्राहेण हस्तीव दुरत्ययेन
ग्रस्तोऽस्मि कालेन जरापरीतः ॥
इच्छामि मोक्षं तव दर्शनेन
विष्णोरिव स्वेषु दृढं दयालोः ॥ १२ ॥

देवा विगेहा इव पूजकान्स्वा-
न्वैराग्यभाजोऽपि भजन्ति भक्तान् ॥
तस्मान्मुमूर्षोः मनुजस्य[1] तस्य
मनोरथं पूरय पूर्णकाम ? ॥ १३ ॥

भोगापवर्गावव्यक्तमिव जीवस्य संसृतौ ॥
मर्दनोऽहं च नियतौ गतौ प्रत्यपर्ययाव[2] तम् ॥ १४ ॥

ततो मया वाद्यधरेण युक्तो
गतो "गुरुर्नानक" इत्युदीर्य ॥
बोलारराय: सुजनः प्रकृत्या
विलोकितव्यो विषमे विशेषात् ॥ १५ ॥

लालं रुदन्तमापृच्छ्य चलन्नित्यवदद् गुरुः ॥
अभेद आवयोः सौम्य ! को वियोगो विषादकृत् ? ॥ १६ ॥

समयो मयाक्रियत मासमासितुं
तव संनिधौ दिवसपञ्चविंशतिः ॥
अतिवाहितैव दिनपञ्चकं पुनः
समुपागतेन वसतिर्विधास्यते ॥ १७ ॥

नानावनानि नगराणि च खेटवाटीः
पश्यन् ययौ स सुजनैः परिपूज्यमानः ॥

---

१. मुजवस्य–क०
२. प्रत्यर्पयाव–ख०

वीणाधरेण च[1] मया च तमोरजोभ्यां[2]
युक्तो रराज खलु सत्त्वगुणो यथैव ॥ १८ ॥

दृष्टः प्रविष्टस्तलचण्डिकायां
शिष्टैस्तु हृष्टैरभिनन्दितोऽभूत् ॥
अज्ञैरविज्ञातमहासमज्ञै-
रुक्तेऽस्य विक्षिप्तधियो दशेयम् ॥ १९ ॥

चोलारराघस्य गृहाय यान्तं[1]
कालश्च लालश्च स चन्द्रभानुः ॥
विलोक्य हाहेति गिरा रुदन्तः
कारुण्यपूर्णानि वचांस्यवोचत् ॥ २० ॥

न युज्यते नानक ! ते शरीरे
प्राचीनचीरस्य विधारणोऽयम्[2] ॥
निकामरूक्षैर्भसितैश्च लेपः
खेदावहः श्मश्रुजटाग्रहश्च ॥ २१ ॥

कः क्षत्रियो हा तरुणः सचेता ?
जुगुप्सितं वेषमिमं बिभर्ति ॥
वयोऽवसाने वनवासचर्या
कृतास्ति कैश्चिद् नृपवैरदृष्टै ॥ २२ ॥

कस्योपदेशस्तव किं नु दुःखं ?
यस्मात्समग्रं प्रविहाय सौख्यम् ॥
अस्मांश्च दुःखाम्बुनिधौ निमज्ज्य[3]
त्वया कृतो हा सहसा विडम्बः ! ॥ २३ ॥

---

1. वीणाधरेण-मर्दानेन मया=बालसिंधुना ।
2. सत्त्वगुणो मानक तमोरजोभ्यां बालसिन्धुमर्दानाभ्यामिन्द्र इव ।

१. यान-ख०
२. विधारणेयम्-ख०
३. विमज्ज-ख०

पूर्वे न किं नो यतिमन्त आसन्
वाराणसी[1] वा शिवरामवर्मा ॥
स्थिता हि ते क्षत्रियधर्म एव
कृता न कैश्चित् स्वविडम्बनेयम् ॥ २४ ॥

रोरुद्यते ते जरया परीता
मातैकपुत्रा कुररीव[2] दीना ॥
आशा च पितृप्रमुखैस्त्वदीयै-
रस्माभिरासादि चिरात्कृतायाः ॥ २५ ॥

प्रारब्धयोगेन विमोहितस्य
नूनं विपर्येति जनस्य बुद्धिः ॥
अकार्यकारी मतिमानतश्चे-
त्कस्मादुपालम्भपदं[3] वराकः ? ॥ २६ ॥

माताऽब्रवीदश्रुनिरुद्धकण्ठा
जीवामि यावद् 'वस तावदेव ॥
पुरो गृहेर्वत्स ? कुटीं विधाय
द्रक्ष्याम्यहं त्वामपरे यथैव ॥ २७ ॥

उद्वर्तनैः[4] स्निग्धसुगन्धशीतै-
रङ्गानि यान्यङ्ग ? विपोषितानि ॥
अरुन्तुदं मे विदधासि तेषु
क्षारैर्विरूक्षैः क्षरणं किमर्थम्[5] ? ॥ २८ ॥

---

1. वाराणसेयः शिवरामवर्मेति युक्ततरः पाठः स्यात् ॥
2. कुररीव मातैकपुत्रा नानकमाता ।
3. तरुणस्य तपस्योपालम्भपूर्णेव ।
4. उद्वर्तनः=उबटन इति भाषायाम् ।
5. श्लोकेष्वेषु मातुः एकमात्रं पुत्रं प्रति सशोकालापः ॥

१. दृशा—क॰
२. वियोषितानि—क॰

प्रकोष्ठयोः काञ्चनकङ्कणाभ्यां
किणः कृतो हीरमनोहराभ्याम् ॥
उल्लिख्यते सम्प्रति धार्यमाण-
विरूक्षरुद्राक्षविघर्षणेन ॥ २९ ॥

इदं वपुः काञ्चनगर्भगौरं
शोभाकरं राजसभासु भूयः ॥
अनुक्षणं दुःश्रवनासितासु
किं स्थाप्यते श्वापदमण्डलीषु ? ॥ ३० ॥

क्षामः क्षुधा नैष भवेन्मयेति[1]
प्रातः सदन्नं किल भोजितो यः ॥
कथं स कालेऽनियते निरीहः ?
कटूनि वन्यानि फलानि भुङ्क्ते ॥ ३१ ॥

तातस्त्वदीयो नृपतीमवादीद्
यान्येऽपराध्यामि ततस्तु नाहम् ॥
विहाय मां देहमिवेह वत्स ?
त्वं जीववद् भ्राम्यसि कस्य हेतोः? ॥ ३२ ॥

वन्ध्या वरं स्नेहगुणैरबद्धा
वियुक्तपुत्रां सुतिनीं तु धिग्धिक् ।
न निन्द्यते नम्रशिराः सदैव
निपातितोष्णीषक एष हास्यः ॥ ३३ ॥

प्रणम्य दूरादथ नागकेन
कुटुम्बकं स्वं जनकादि सर्वम् ॥
स्वयं समाधायि भवद्भिरेतन्
न चोत्तरापेक्षकमित्यवादि ॥ ३४ ॥

---

१. नैषविभवेन्मयेति—श०

प्रद्युम्नवादीद्धितये किमेवं ?
पुत्रादिसर्गे घृतनिश्चयाऽसि ॥
समीपसंस्थेऽपि मृते तनूजे
शक्नोति कर्तुं जननी किमस्य[1]? ॥ ३५ ॥

पान्था यथा रात्रिषु धर्मशाला-
माश्रित्य तिष्ठन्ति पुनः प्रभाते ॥
स्वां स्वां दिशं यान्ति तथा कुटुम्ब-
सार्थः स्वकर्मानुसृतः स्थिरो न ॥ ३६ ॥

जानन्त्यनित्यं तनयादियोगं
ये ते वियोगे न समुद्विजन्ते ॥
प्रागेव निम्नोन्नतपिच्छिलज्ञा
न ह्यन्धकारेऽपि पथि स्खलन्ति ॥ ३७ ॥

तस्मात् स्वपुत्रस्य विहाय सङ्गं
त्वं देवकीपुत्रमुपाश्रयस्व ॥
पुत्रात्पितुर्बन्धुजनात्किलाप्तः
स एव भक्त्या हृदि भाव्यमानः ॥ ३८ ॥

प्रभावादिव तदभूत्तस्याज्ञानकलोदयः ॥
उपदेशेऽपि[१] शतधा न जानन्ति हि योषितः ॥ ३९ ॥

बोलाररायस्य गृहं जगाम
समागतं वीक्ष्य समं च मञ्चात् ॥
उत्थाय पादावभिवन्द्य तस्य
हृदालिलिङ्गोच्चलिताश्रुधारः ॥ ४० ॥

---

1. नानकस्य जीवनदर्शनमस्मिन् श्लोके। यदा ध्रुवमेव वियोगस्तदा वियोगस्य दुःखेनालमिति भावः।

तुलना —जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेति।

१. पि–ख०

पल्यङ्क एनं कशिपूपधान-
युक्ते नवे स्थापितवानधश्च ॥
तिष्ठन्नुरासीदथ नानकेन
संस्थापितस्तत्र करं प्रगृह्य ॥ ४१ ॥

उवाच राजा मम पूर्वपुंसा
पुण्यस्य पाकोऽद्य मयाऽन्वभावि[1] ॥
यद्वीतरागस्त्वमरण्यचारी
तीर्थत्त्वमागत्य गृहान्नैषीः ॥ ४२ ॥

न चित्रमेतद्भगवज्जनेषु
न ध्यानतस्तत्प्रकृतिं गतेषु ॥
स वै शनर्या विदुरादिकानां
जगाम गेहं स्वजनानुरागात् ॥ ४३ ॥

शास्याम्यहं त्वां प्रथमावलोके
सुप्तं वने सर्पकृतातपत्रम् ॥
[2]स्मरस्यदः सम्प्रति ते गुणौघाः
पुरा मयोक्ताः प्रकटीभवन्ति ॥ ४४ ॥

जरातुराणां परलोकभीति-
रनुक्षणं बुद्धिमतामुदेति ॥
अपैति सा तत्त्वविबोधभाजां
भवादृशानां सुहृदां प्रसङ्गात् ॥ ४५ ॥

कथं गतिः स्यादतिमोहितस्य ?
मिथ्यैव रम्यैर्विषयाभिषैर्मे ॥
केशा बभूवुः शणतन्तुतुल्या
नवो नवो वा विषयाभिलापः ॥ ४६ ॥

---

१. न्वभावि-क०
२. स्मरन्नय-क०

लोभादयोऽन्ये न तथा जनस्य
यथा खलीकारकरः स्मरस्तु ॥
नरो वलीभिः पलितैः कुरूपो
मां कामयेतेत्यनुयाति मुग्धाम् ॥ ४७ ॥

दन्ताः न सन्त्येव न वारनारी-
कपोलदन्तक्षतवासना तु ॥
जागर्ति चित्ते करयोश्च कम्प-
स्तथापि तुङ्गस्तनयोर्जिघृक्षा ॥ ४८ ॥

इत्थं विषीदन्तममुं दयालुः
गुरुर्गरीयांसि वचांस्यवोचत् ॥
आजन्मनस्त्वं सुकृती कृतज्ञो-
न शोचनीयं [1]भवताऽन्तकाले ॥ ४९ ॥

यदैव दोषान् विषयेषु [2]बुद्ध्वा
हितो निजः सम्प्रतिमो मुकुन्दः ॥
तदैव जीवो भवपाशमुक्तः
खट्वाङ्गवत् को नु विलम्बहेतुः ? ॥ ५० ॥

आयासलभ्यैः क्षणसौख्यदैश्च
पापावहैरस्त्ययशस्करैश्च ॥
अतृप्तिदैः किं च विबुद्धसारैः
भोगादसारैर्विषयैरलं ते ॥ ५१ ॥

छन्दानुवर्ती निजसेवकानां[1]-
[3]सेव्यः कथं नैष विभुर्वदान्यः ? ॥

१. भववान्तकाले-क०
२. बुद्धा-क०
३. सेवनासे-ख०
1. विभुर्निजसेवकानां छन्दानुवर्ती, नेदेन स वैकुण्ठपदं ददाति अभेदेनाखण्डमानन्द-मातनोति ।

भेदेन वैकुण्ठपदं ददाति
ध्यातः किलात्मानमभेदतो यः ॥ ५२ ॥

[1]उपास्य बुद्धयात्मधियाऽथ वेशो
भक्तैः स्मृतः शर्मकरोत्यवश्यम् ॥
खण्डोऽप्यमिश्रः किल केवलो वा
[1]जुष्टः सृजत्येव जनस्य तुष्टिम् ॥ ५३ ॥

यथा यथा भेदधियं विहाय
भजन्ति भक्ता भगवन्तमीशम् ॥
तथा तथा सन्निधिमीयमान-
स्तेषां स आत्मैव भवत्यखण्डः ॥ ५४ ॥

यदा मनस्ते [1]सगुणेऽनुरक्तं
तदा मयोक्तं हृदि भावयस्व ॥
विहारशय्यासनभोजनेषु
पुरः स्फुरन्तं हृदयाम्बुजे वा ॥ ५५ ॥

महीवतंसमरविन्ददलायताक्षं
[2]पूर्णेन्दुसुन्दरमुखं तनुतुङ्गनासम् ॥
विस्तीर्णवक्षसमुदारसुवृत्तबाहुं
फल्गूदरं कनकगौरवराम्बरञ्च ॥ ५६ ॥

---

१. सगुणोतुर—स॰

1. अत्र द्वैताद्वैतयोर्विवेकमनुरस्सरं सारतम्यमुपदेशमुपदिशति उपास्य बुध्या आत्मधिया वा स्मृतो विभुः शर्मकरोत्येव ॥ तथा च प्रथमं भेदबुद्धया स्तुतः शिवः अभिन्नः सन्ध्यानेन-ध्यानेऽभेदबुद्ध्या ॥
2. सगुणे ईश्वरे मनोभावयितुमुपदिशति तदापु ॥ तत्र चिन्तने गुरुणा सगुणरूपस्य वर्णनं 'पूर्णेन्दु' इत्यादिना ॥

[1]आकुञ्चितेषु चिकुरेषु गवां रजोभि-
वन्यस्रजा मधुरवेणुरवेण सायम् ॥
गोपीमनांसि मदयन्तमनुव्रजन्तं
धेनूर्व्रजस्य विशिखासु[2] च वेत्रपाणिम् ॥ ५७ ॥

स्मेरातसीकुसुमकान्तिमयातपात्र[१]-
कैशोरविस्फुरदनङ्गविलासरम्यम् ॥
काश्मीरचर्चिततनुं मदनाभिरामं
मुक्तावलीमकरकुण्डलकङ्कणाढ्यम् ॥ ५८ ॥

आताम्रपल्लवनवाङ्कुरचारुमौलिं
स्वेदाम्बुभिर्विरलबिन्दुभिराचशोभम् ॥
आविष्कृतोत्तमविभूतिमनन्तशक्तिं
भक्तेषु वत्सलमधीशमुपाश्रयेत ॥ ५९ ॥

## चतुर्भिः कालापकम्

रूपेऽस्मिन्धारणादार्ढ्यात्सूक्ष्मग्राहिणि मानसे ॥
विलाप्य सकलं विश्वं ब्रह्मात्मानं विभावयेत् ॥ ६० ॥

जगत्परब्रह्मविवर्त एतत्
पृथङ् न तस्मात्पृथगीक्षमाणम् ॥
स्वापस्य विश्वस्य यथैव निद्रा
माया तथास्य प्रतिभासहेतुः ॥ ६१ ॥

---

1. सगुणरूपमुपासता कविनात्र कृष्णस्यैव रूपमाद्रियते ।

2. विशिखा = High way गमनमार्गः ।

१. तयाम—क०

२. दार्ढ्यात्—क०

न बन्धमोक्षौ मयि निर्विकारे
सदा सदानन्दचिदात्मरूपे ॥
अभ्यासदार्ढ्यादिति पक्वबोधः
कृताकृते शोचति नैव साधुः ॥ ६२ ॥

यदस्ति भाति प्रियनामरूप-
स्वरूपमेतत्सतत प्रतीतम् ॥
मायात्र मिथ्या किल नामरूपे
ब्रह्मास्मि भाति प्रियमत्र सत्यम् ॥ ६३ ॥

चैलाजिनादिरचिते स्थिरे आसने सन्
प्राणान्नियम्य मनसा स्वमनश्च बुद्ध्या ॥
बुद्धिं नयेत्प्रकृतिमात्मनि तां च धीर-
स्तां शुद्धबोधजलधौ परमात्मतत्त्वे ॥ ६४ ॥

पार्ष्णिप्रपीडितगुदः पवनं निरुद्धं
चक्रेषु षट्सु शनकैरुपनीययोगो ॥
रुद्धेन्द्रियो विगतवासन उन्नयेत
तं ब्रह्मरन्ध्रममिमिव विमुक्तिकामः ॥ ६५ ॥

श्रीचन्द्रशेखर ! सदाशिव ! पार्वतीश !
सीतापते ! दशरथात्मज ! रामकृष्ण ! ॥
गोवर्द्धनोद्धरण ! कंसहरेति शब्दः
कश्चित्स्मृतो भवति योगयुताधिकान्ते ॥ ६६ ॥

एवं गुरुर्गुरुमुखौरमृतायमानै-
र्वचोभिरस्योद्धतकल्मलः सः ॥

---

१. दार्ढ्या—क०
२. स्थित—ख०

पदाञ्जयोस्तस्य शिरो निधाय
ननाम मेने कृतकृत्यतां च ॥ ६७ ॥
विज्ञापयामास धरासुरेण
पाकः प्रणीयेव गवां निकेते ॥
भुङ्क्ष्वाभिलाषोऽस्ति चिरान्मदीय-
स्तथेति तेनाभिहितो जगाद ॥ ६८ ॥
उन्मेद[1] ! आयाहि विशोधयस्व
गोष्ठं द्रुतं गोमयगोमुखेन ॥
शुद्धाभिधं[2] ब्राह्मणमानयस्व
करोतु पाकं स च नानकाय ॥ ६९ ॥
आकारितो नरपतेर्वचसाऽविलम्ब-
मुन्मेदमाप्गुरुमुखश्रुतपाकशास्त्रः ॥
आशीर्वचः [2]प्रयुयुजे क्षितिपाय शुद्धो
भाण्डानि भृत्यशिरसा स नयन् उपेत्य ॥ ७० ॥
शुद्धं पुरः स्थितमभाषत भूमिपालः
पाकव्रताय तव विप्र ! ममोपयुक्ता ॥
भोज्यं द्रुतं कुरु रसै रससंख्यकैस्त्वं
युक्तं विशिष्य मधुरं च मनोहरं च ॥ ७१ ॥
कुर्वे यथाज्ञापितमेव देव !
शुद्धोऽभिधायेति चकार पाकम् ॥
आमोदमात्रेण नृणां मनांसि
हरन्तमास्वादनतो ब्रुवे किम्-? ॥ ७२ ॥

---

1. उन्मेदः = पाचकस्य नाम ।
2. शुद्धाभिधं = शुद्धनामकम् ।
१. पदान्तयो—ख०
२. प्रयुयुजे—ख०

त्रयो बुभुजिरे तत्र नानकोऽहं[1] च मर्दनः॥
कवले कवले स्वादं वर्णयामास वैणिकः ॥ ७३ ॥

संयावमोदकमहोत्तमकुण्डलिन्यः[2]
सत्पूपपायससुशष्कुलिकारसालाः ॥
जिह्वातले विनिहिताः किल मर्दनस्य
वन्दित्वमेत्र विदधुर्यतिहासहेतुम् ॥ ७४ ॥

किमयं नलः ? पुनरुपात्तशरीरः
किमु भीम एव वपुरन्तरधारी ? ॥
द्विजरूपमाप किमु पाकरहस्य-
मिति ? तस्य वाचि विजहास यतीन्द्रः ॥ ७५ ॥

कृतभोजनं जिगमिषुं यतिवर्यं
नृपतिः पितृप्रभुरवोस्य[१] नियुक्तः ॥
विधृताञ्जलिर्बहुविधैरुपचारैः-
स्थितये जगाद विविधानि वचांसि ॥ ७६ ॥

वाणिज्यं तु विधास्यति प्रतिनिधिस्ते त्वं तपस्यां कुरु
स्थित्वा वा कृषिमाचरन्तु मनुजाः कूपत्रयं दीयते ॥
तूष्णीं वाऽथ तपस्यतस्तव जनाः कुर्वन्तु सत्र सदा
धान्यं दास्यति सेवकस्तव दयासंपन्नसंवर्द्धिकः ॥ ७७ ॥

वोलारराये विनयादित्युक्त्वा विरतेऽब्रवीत् ॥
"श्रीनानकनिराकारो" गिरं श्रोतृ-मनोहराम् ॥ ७८ ॥

---

1. अहम्=बालसिन्धु ॥
2 जलेबी इति भाषायाम् ।
१. तोस्य—क०

विक्रीयेदं शरीरं मलमयमदढं लभ्यते ब्रह्म येन
वाणिज्यं तन्मतं मे कृषिरपि निहिते तत्त्वमस्यादिबीजे ॥
[1]चेतः क्षेत्रे समुस्यामल-मनन-जलैर्ज्ञानदिव्याम्बुराशि-
र्यस्यां लभ्येत सैवोत्तमकृषिकजनैस्तन्यते नाम नान्या ॥ ७९ ॥

कृमिकीटसरीसृपान् पतङ्गा-
नगणेयानसुरान् सुरानरांश्च ॥
परिपोषयते य एष स्त्री-
पुरतस्तस्य करोतु सन्निवाङ्कः ॥ ८० ॥

उत्थाय स [2]जगामैव रुदत्स्वेव कुटुम्बके [3] ॥
ततस्ततस्तेन योगी कस्य मित्रमिति स्फुटम् ? ॥ ८१ ॥

पुनर्लालगृहं गत्वा स्थित्वा पञ्चदिनानि सः ॥
जगाम गौरान् बङ्गांश्च [4]सत्यसंघा हि साधवः ॥ ८२ ॥

ताम्बूलवल्लिपरिवेष्टितपूगसान्द्रा
रम्भादलैरुपचितैः परिवीज्यमानाः ॥
एलाफलैः [1]सुरभयो बहुनारिकेरा[2]
ग्रामा मुदं विदधिरे पतिनोऽस्य रम्याः ॥ ८३ ॥

---

1. नालभ्यते सैव कृषिर्यस्यामलमननजलैर्ज्ञानदिव्याम्बुराशिर्लभ्यते । सा च तदस्त्येव लभ्यते ।
2. एवकारोऽत्र गमनाधारयन्तेच्छाबनकः ॥
3. अनादरे सप्तमी न तु भावे ॥
4. अर्थान्तरन्यासोऽलङ्कारः ॥
5. सत्नी इति युक्तः पाठः । गृहस्थामीत्यस्यार्थः ।
१. समुत्स्यामल—क२
२. नालिकेरा—ख०

साधाङ्गभणतिषु पेशला जनास्ते
नातिथ्येष्वतिथिजनस्य वङ्गदेश्याः ॥
अध्वश्रान्तिचतुरवासरास्तदा स्म
क्षुत्क्षामो गुरुमिति मर्दनो जगाद ॥ ८४ ॥

नृणां मनांसि रूक्षाणि देशा एवेह चिक्कणाः ॥
ग्रीष्मैव बृहती सार्थोदया तुच्छैव लक्ष्यते ॥ ८५ ॥

तपस्यतस्ते सङ्गेन जायते गवसंशयम् ॥
ध्मायमानस्य वर्णस्य मलस्येव गतिर्मम ॥ ८६ ॥

अयाचितव्रतधरो याचितेप्यप्रयच्छताम् ॥
देशान्भ्रमसि दुष्टानां मृतिमिच्छसि मे स्फुटम् ॥ ८७ ॥

एवं क्षुधा क्रन्दति मर्दने तु[1]
विशिष्य हासापजहास योगी ॥
जगाद चार्कस्य फलान्यमूनि
त्वमद्धि तूर्णानि च सङ्गृहाण ॥ ८८ ॥

मर्दनोऽमृतकल्पानि फलान्याखाद्य कानिचित्
धारयित्वा ययौ दृष्टिं[2] ग्रन्थौ निक्षिप्य बद्धवान् ॥ ८९ ॥

अन्येद्युस्तानि भुञ्जानो जिह्वातालुगले द्रुतम् ॥
स्फोटान्यवाप कटुकान्युद्वमन् विलज्जितः ॥ ९० ॥

बङ्गान्विगाह्य निखिलानथ कामरूपान्
स ब्रह्मपुत्रमवतीर्य ययौ यतीन्द्रः[3] ॥

---

१. दंपो—क०
२. ष्टी—क०
३. स्य—क०

प्राग्ज्योतिषं पुरमगादवलोकयिष्य-
न्वीयाधरो यतिवरेण निवारितोऽपि ॥ ९१ ॥

तत्रोपजग्मुः प्रमदास्वनस्तो
विलोमयन्त्यो वचनैर्मनोज्ञैः ॥
[1]निचिक्षिपुस्तं तु मनुष्यकण्ठे
स मेषतामेत्य भृशं ननाद ॥ ९२ ॥

एष मेषत्वमानीतः कश्चिद् वैदेशिको बलात् ॥
प्रमदाभिरिति श्रुत्वा तत्रागानपि सद्गुरौ ॥ ९३ ॥

ता एव प्रमदास्तं तु मत्कण्ठे क्षेप्तुमुद्यताः ॥
मेष्यः कृता नानकेन मर्दनो मनुजः कृतः ॥ ९४ ॥

उत्कलांश्च कलिङ्गांश्च आन्ध्रकर्णाटकेरलान् ॥
उल्लङ्घ्य द्रविडान् योगी सिंहलद्वीपमागमत् ॥ ९५ ॥

मुक्ताफलानि विपुलानि महोज्ज्वलानि
दिग्दन्तिवंशजनुषः करिणो विशालाः ॥
अम्भोजसौरभजुषः प्रमदाः सुरूपा
द्वीपे महर्द्धिमति तत्र सुरो विशालः ॥ ९६ ॥

[2]सिद्धंमन्यस्तत्र बभूव क्षितिपालो
विश्वेषां सङ्कल्पितदायी शिवनाभः ॥
योगीन्द्रे तद्द्वीपमुपेते गतसिद्धिः
चिन्तां चक्रे किं मम वाचो वितथायाः ? ॥ ९७ ॥

---

1. प्रमदया मर्दनो मेषः कृतः [illegible] शक्तिमत्त्व एव प्रमदासु इति श्रूयते ।
2. सिद्धंमन्यः=वस्तुतोऽसिद्धः ॥

आरामस्तस्य रम्यो हृदयसुखकरो शुष्यदासिच्यमान-
स्त्वचिन्ताम्लानचित्तो निजपुरनिलयं क्षत्रिवंशोऽन्वयुक्तम् ॥
पूर्वावस्था कथं स्यान्मृदुपवनवटस्येत्यसौ तं न्यगादी-
दागच्छेन्नानकश्चेदुपवनमखिला योगसिद्धीर्दधानः ॥ ९८ ॥

रुद्धद्वारे तदुद्याने दैवादागस्य नानकः ॥
प्राविशत्तदभूत्तूर्णं नन्दनस्पर्द्धि नूतनम् ॥ ९९ ॥

परशुराम इति प्रथितोऽभव-
स्सचिव उत्तमबुद्धिरमुष्य सः ॥
अवदद्त्र समागतवान् यति-
र्नियतमस्य तपस्तव सिद्धिदम् ॥१००॥

तस्य प्रवेशमात्रेण चित्रं चैत्ररथोपमः ॥
आरामस्ते रमयते मनो नूतनपल्लवैः ॥१०१॥

तमानयेह योगिनं
नृपो जगाद मन्त्रिणम् ॥
न मन्त्रिणार्थितः परं
जगाम नानकः कृती ॥१०२॥

राजाज्ञया भोज्यमतीव रम्यं
स्त्रियः सुरूपावसनं महार्घम् ॥
निनाय मन्त्री स च लोमयिष्यं-
स्तृणाय मेने यमिनां वरिष्ठः ॥१०३॥

---

१. क्षत्रियं मोन्वयुक्तं—क०
२. कृत्—क०
३. योगीनं—क०
४. कृता—क०
५. यतिनां—क०

1. मापहीरिरथंथः । "मन्यवमे" ति पतुर्षो ।

कामकेलिकलाभिज्ञाः
पुरस्तात्तस्य योगिनः ॥
स्तम्भा इव जडीभूता
[1]रम्भासम्भाविताः स्त्रियः ॥१०४॥

जानासि [2]कुक्षिम्भरयो भ्रमन्ति
काषायवस्त्रेण यथा जटाभिः ॥
तपस्विनो नाम तथायमेव–
मयं यतिः कश्चिदपूर्व एव ॥१०५॥

स्वसिद्धतागर्वमुपेत्य दूरे
तदेनमावर्जयतार्जवेन ॥
त्वयाधिगम्यो महिमा महीयां–
स्तेनेति राजाकथितो जगाम ॥१०६॥

चरणे पतितः सचिवेन समं
नृपतिर्यतिमेतदुवाच वचः ॥
मम पुण्यभरेण समागमितः
क्षपयामनयं स भवान् क्षमताम् ॥१०७॥

तममापत नानकस्तपस्वी
पुरुषार्थो नहि [3]सिद्धिरङ्ग ! कश्चित् ॥

---

1. रम्भासम्भाविताः=:=रम्भाया जाता इव रम्भा इव वा स्त्रियः ॥
2. कुक्षिम्भरिः=उदरनिमित्तं बहुरूतवेषः ॥
3. सिद्धिरङ्ग=नाम सम्बोधने ॥

मनुजस्य जनुः प्रपद्य विद्वान्
भवरोगस्य चिकित्सिते यतेत ॥१०८॥

बालसिन्धुरिति सभ्यसमाजे
नानकस्य चरितं वदति स्म ॥
अङ्गदोऽथ गुरुभक्तिभवेन
प्रेमपूरविभवेन मुमूर्च्छ ॥१०९॥

सप्तविंशतिदिनानि समाधिः
प्रेमतोऽभवदमुष्य विचित्रः ॥
व्युत्थितेऽथ पुनरेव कथास्मिन्
प्रावृतत्सुजनकर्णसुधा सा ॥११०॥

[1]अपृच्छन्नृपो नानकं त्वं [3]नु योगी ?
द्विजः क्षत्रियः सार्थवाहोऽथवाऽसि ? ॥
उताहो भवान् सौम्य ? गोरक्षसिद्धो
धरामण्डपे भ्राम्यसि छद्मरूपः ॥१११॥

वयं सिद्धिलेशेन गर्वायमाणा
न मन्यामहेऽन्यं विशिष्टं धरायाम् ॥
न दासेरको यावदीक्षेत शैलं
[2]स्वतस्तुङ्गमन्यं न मन्येत तावत् ॥११२॥

---

1. समाधितः समागते अङ्गदे पुनस्तं बाल्याः कथा कथयितुमारेभे ॥
२. यद्यपि कश्चित् विशिष्टं कञ्चित्साक्षात्करोति प्रत्यक्षं तद्यपि वस्तुलेशेन गर्वायमाणः स न मन्यतेऽन्यं विशिष्टम् ।
१. तु—स०

तदस्माकमेतर्हि यद्विद्धि पथ्यं
तदेवोपदिश्योद्धरेर्वाऽस्मित्वम् ॥
कृपाप्रेरितो दैवतो दैवतो मे
त्वमागत्य कल्याणकारी भवाऽस्तु ॥११३॥

राजानं निजगाद नानकयतिर्धर्मैः क्रियाभिर्गुणैः
[1]ज्ञात्वा दूरसमुज्झिताचिविरहं बोधात्मिका वस्तुतः ॥
सत्या मे मयि नानरूपमखिलं संस्थापितं लीलया
तत्ते सौम्य ? विक्षिप्य किं नु कथयेः सर्वोस्मि [2]सर्वाश्रयः॥११४॥

मायामयेऽहं संसारे प्रीत्यप्रीतिविवर्जितः ॥
उदासी नानको नाम वेदितव्यस्त्वयाधुना ॥११५॥

यदा जनोऽयं जानाति सर्वस्मादस्म्यहं नतः ॥
उन्नतत्वं तदा धत्ते विश्वस्मादिति निश्चितम् ॥११६॥

उपदिदेश ततोऽमुमनुत्तमं
नरपतेर्विनयेन[3] वशीकृतः ॥
सुकृतिनां कलिकल्मषहानये
क्षितितले किल नानकसम्भवः ॥११७॥

[4]सेव्यमानो नृपतिना योगजिज्ञासुना स्वहम् ॥
द्वौ वर्षौ पञ्चमासांश्च तस्थौ तत्र यतीश्वरः ॥११८॥

योगसारैरुपचितां तमूचे प्राणशृङ्खलाम् ॥
अक्लेशाज्ज्ञायते योगी यया विज्ञातया गुरोः ॥११९॥

---

१. दर—क०
२. गुणः—क०
३. विजयेन—क०
४. योगी—क०

द्वीपमस्पर्शनायस्य प्रतस्थे नानकस्ततः ॥
मर्दनो भृशमुद्विग्नो न यास्यामीत्यमापत ॥१२०॥

बोधितोऽपि बहुधा मया यदा
न न्यवर्तत तदा यतीश्वरः ॥
मागमः पथि खलैरुपद्रुते
बोधयन्निति न तेन वीक्षितः ॥१२१॥

तस्मिन्गते योगिवरो न्यपीदत्[2]–
मयोक्तमस्यानुशयः किमर्थम् ? ॥
न मन्यते यो हितमुक्तमाप्तैः
स्व कर्मणः पाकमसौ हि भुंक्ताम् ॥१२२॥

पुनरूचे दयासिन्धुर्बालसिन्धो ! यथार्थवाक् ॥
सार्थागतस्य तदपि चिन्ता भवति भूयसी ॥१२३॥

तत्रैव रात्रिं विगमय्य योगी
प्रभातकाले निजगाद खिन्नः ॥
इतो नवक्रोशमिते प्रदेशे
पचत्यमुं रात्रिचरः[3] कटाहे ॥१२४॥

उपेक्षणीयो न च वैणिकोऽयं
मूढोऽप्यलं प्राकृतजातियोगात् ॥
तदेहि यावो यदि जीवयेतं
कर्ता त्रिलोक्याः कुशलं तदा स्यात् ॥१२५॥

---

१. परपर्श—क०
२. न्यपीदत्—क०
३. रात्रिचरः—क०

आवां तत्र गतौ करालदशनः केशैः महाकर्कशै-
र्व्याप्तो रक्तनिमग्नघोरनयनो दीर्घः शिराः सन्ततः ॥
वैयाघ्रैरिव भीषणैः कररुहैर्व्यापादयत्प्राणिनः
श्यामः [1]क्रोडमुखो व्यलोकि विकृतः क्रोडाऽभिधो राक्षसः ॥१२६॥

पक्त्वा महाकटाहे कटुतैले मर्दनस्य वपुः ॥
शिशिरीकुर्वन्भोक्तुं निशाचरो नानकेनोक्तः ॥१२७॥

किं रे क्रोड ! कुबुद्धे !
मनुष्यमांसाशनव्यसनम् ॥
अधुनैधितं तवेदं
बिभेषि न स्वामिनो जगतः ॥१२८॥

सङ्कल्पो योगिनस्तस्य यथैव चपलं तथा ॥
अवर्तत स्थिरचराश्चिन्नं न लवमन्यथा ॥१२९॥

तर्जितो व्याघ्रपालेन व्याघ्रो भीतः पतेत्क्षितौ
यथा तथा नानकस्य निपपात स पादयोः ॥१३०॥

[1]आयाहि मर्दन ! जवात्परिवादयस्व
वीणां कुतस्त्वमिति ! तस्य वचस्यकस्मात् ॥
उत्प्लुत्य मांसमखिलं महतः कटाहा-
द्रोणाचरस्य वपुषा रणयद् विपञ्चीम् ॥१३१॥

रात्रिंचरस्तु कृतमन्तुरतीव भीतो
बद्धाञ्जलिर्मुहुरुवाच गुरो ! क्षमस्व ॥

---

1. क्रोडः=तन्नामा राक्षसः ।
1. मर्दनः क्रोडराक्षसेन मुक्तः ॥
१. मद्गुर—ख०

वीणाधरं त्वमनुनीय तदाऽतिथेयीं
क्ुर्या इति स्मितमुखो यतिरावभाषे[1] ॥१३२॥

मधुराणि फलान्याशु [1]कन्दल्यानन्ददायकम् ॥
प्रत्येकमर्पयामास स[2] समानीय कौणपः ॥१३३॥

पुण्यं पुण्यजनस्य[2] जन्म निकृतं कस्मिंश्चिदासीद् ध्रुवं
मन्ये तत्परिपाकतो यतिवरस्तं देशमभ्यागमत् ॥
तस्मै स्वांशमदादुदारधिषणः शेषाधियाश्चादसौ[3]
तूर्णं दिव्यशरीरमाप सुरवद्देदीप्यमानो रुचा ॥१३४॥

सप्तदिनानि निशाचरभक्त्या
तत्र सतां सुखदो यतिरस्थात् ॥
[3]सैन्धवसिन्धुदिनैरधिगम्यं
देशमगात्स शुभाय बहूनाम् ॥१३५॥

अनूपे वने निर्जने गच्छतां नः
तदान्नं महादुर्लभं यद् बभूव ॥
क्वचिच्छीर्णपर्णैः क्वचिच्छैवलाग्रैः
क्वचिद्वारिवार्तैस्ततो वृत्तिरासीत् ॥१३६॥

---

1. यदा नानक "मर्दन पुनस्त्वम् आयाहि परिवादयस्व वीणाम्" इत्यगादीरादा तस्य महस. प्रभावादागतो मर्दन कटाहान् इति वर्णति नानकस्य महतो महिमा ॥
2. उदारधिषणो गुरुर्यदा तस्मै स्वांशमदात्तदा तूर्णमसौ दिव्यशरीरमापेत्यन्वय ॥
3. सैन्धवसिन्धुदिनै =४७ दिनै । A स न गानीय--ख० नास्ति पुस्तकेऽतः पाठोऽयम् ।

१. दन्दमानन्द—ख०
२. पुरापजन—ख०
३. दना—ख०

यदा मर्दनो रोदनारक्तनेत्रः
क्षुधा क्षीयमाणो न गन्तुं शशाक ॥
[1]पदाग्रेण योगी तदा पद्मरागं
विहस्योद्बिभेदाद्भुतं चाप्तकाम्यः ॥१३७॥

माणिक्यमादाय जगाद योगी
क्रोशद्वये पत्तनमस्ति[2] रम्यम् ॥
सन्दर्शये यत्र परीक्षकेभ्यो
यदस्य मूल्यं तदिहाभिधेहि ॥१३८॥

मर्दनस्तु तदादाय विश्वम्भरपुराभिधे ॥
नगरे दर्शयामास कञ्चिद्रत्नपरीक्षकम् ॥१३९॥

स मूढश्च दरिद्रश्च मूल्यमस्य पणत्रयम् ॥
उवाच वाचस्तुच्छास्यान्महत्यो निःसरन्तु किम् ? ॥१४०॥

अनुवदति तदुक्तिं मर्दने नानकेन
कथितमतिमहान्तं रत्नबोद्धारमश्च ॥
अधिनगरमपृच्छत्कोऽत्र रत्नप्रवीणो ?
जनमपि तमगच्छत्सालसंरायमेषः[3] ॥१४१॥

पृच्छन् गृहं तत्र गतो महर्द्धि[4]-
द्वारि स्थितो द्वारनियुक्तरुद्धः[5] ॥
निर्गत्य दासो भवनादपृच्छ-
त्कुतो भवान् ? किं च तवात्र कार्यम् ? ॥१४२॥

---

१ ददार्पण-ख०
२ यत्रनमन्तिरस्य-ख०
३. सालसराय-ख०
४. महर्द्धि-ख०
५ नियुक्त-ख०

बहिः [1]पुरादाम्रवनेऽस्ति योगी
देशानटन्नानकनामधेयः ॥
तत्रेषितः सालसरायपार्श्व[2]
समागतोऽहं मणिविक्रयाय ॥१४३॥
इत्येवमुक्तो[3] घटकाभिधानो
नीत्वा स भृत्यो बहुमानपूर्वम् ॥
तमभ्यगात्सालसरायपार्श्वे
सन्दर्शयामास मणिं महान्तम् ॥१४४॥

युग्मम्

अदृष्टपूर्वं स मणिं निशम्य
विचिन्तयन्मूल्यमलब्धसीमः ॥
चिरादचित्रीयत चाक्षराणि
पठन्नवोचल्लिखितानि तत्र ॥१४५॥

गृह्णातु मा वा मणिमस्य पश्यो-
मुद्राशतं यच्छतु नानकाय ॥
इत्यत्र यस्माल्लिखितं गृहाण
मुद्राः शतं तेन ततोऽन्यवार्ता ॥१४६॥

मर्दनेन कथितं प्रभुरस्य
नाहमस्मि स तु नानकयोगी ॥
तत्समीपमुपढौकय मुद्रा
आचरिष्यति यथारुचितं सः ॥१४७॥

1. सालसरायः = मणियोद्धा विश्वम्भरपुरे सालसरायो वैश्य नाम व्यवहृतमस्ति शाब्देऽत्र
2. भयरः = सालसरायपारिपार्श्वदः ॥

१. पुरस्ता–क०
२. परवा–ख०
३. माम'–ख०

भक्ष्याणि भोग्यानि मनोहराणि
स्वयं गृहीत्वा घरको[1] जगाम ॥
पपात भक्त्या पतितः पदाब्जे[2]
निवेद्य सर्वं सुखितो बभूव ॥१४८॥

अघरक ! सुखितोसीत्यालपद्योगिवर्यः
क्व नु सुखमिह साधो ! त्वादृशानामसङ्गे ॥
सुचरितपरिपाकादद्य ते दर्शनेन
सुखमिति गदतोऽस्य प्रासदत् सूनृतेन ॥१४९॥

गतो मर्दनो नानकस्याथ पार्श्वे
शतं रूप्यकाणि प्रयच्छन् बभाषे ॥
अनेनैव नीतो मणिश्रेषु मुल्य-
मगच्छं गुरो सालसंरायमित्थम्[3] ॥१५०॥

मणिं वीक्ष्य किञ्चिन्न मूल्यं स ऊचे
चिरं भावयन् ते तदाचष्ट तुष्टः ॥
शतं रूप्यकाण्यस्य सन्दर्शने मूल्य-
मर्हस्यतः पूर्णपात्रं गृहाण ॥१५१॥

निजगाद नानकगुरुर्मुदं गत्वा
नहि पूर्णपात्रमहमस्मि[4] जिघृक्षुः ॥
स उवाच लससमीपमुपेत्य
मम पूर्णपात्ररुचिरास्ति न सौम्य ! ॥१५२॥

---

१. घरको–क०
२. पादाब्जे–क०
३. सालसराय–क०
४. मत्रास्मि–ज०

ससत्कृत्यो रूप्यकाणि प्रेषयामास सालसः ॥
नानको न तु जग्राह ग्रहिला[1] निःस्पृहाः किल ! ॥१५३॥

अधरकेण तदोक्तमयं यति–
भ्रमति भिक्षितुमित्यवगच्छ मा[2] ॥
निजजन्तुः सफल यदि वाञ्छसि
रत्नमुपयाहि तदा परितोषय ॥१५४॥

दासेन दत्तबुद्धिः सालसरायः प्रगृह्य पक्वान्नम् ॥
द्रव्यं विचित्ररत्नं जगाम तेनैव सह नम्रः ॥१५५॥

पदयोः पपात सकलं विनिवेश्य
न तु नानकः किमपि तद् जगृहेऽस्य ? ॥
हृदि मर्दनः सुरपितॄन् प्रययाचे
ननु भोजनं प्रतिशृणोतु यतीन्द्रः ॥१५६॥

विक्रेयं रत्नमेतद्यतिमिति वचनं सालसोऽभूत योगी
मूल्यं पप्रच्छ शुद्धो स्फुरति न खलु मेऽदृष्टपूर्वस्य मूल्यम् ॥
इत्युक्ते तेन किं त्वं जनुरपगमयस्यश्मचिन्तासु मोघं ?
नामानर्घं मुरारेः स्मरसि न [3]कुत ? इत्यालपन्नानकस्तम् ॥१५७॥

मयेदमुक्तं न कथं ब्रवीति
मूल्यं गुरूरत्नपरीक्षकाणाम् ॥
ख्यातिं गतोऽस्मिन्नगरे समृद्धे
वयो व्ययो रत्नपरीक्षयाऽस्य ॥१५८॥

---

1. अर्थान्तरन्यास सामान्यसमर्थित ।

१. हा–क०

२. पश्यत–ख०

३. कुल–क०

नानकेन ग्रथितो ग्रथितोऽय-
मश्मजातिगुणदोषविवेके ॥
ईशनाम मणिमेतमनर्घं
भूषणं सुमनसां किंनु वेत्तु ? ॥१५९॥

श्रुत्वेति सालसोऽपृच्छत्किमेषां नाम विश्रुतम् ? ॥
नानकाग्रे निराकारो मयेति समुदीरितम् ॥१६०॥

साष्टाङ्गं प्रणतोऽभूत सालसो नानकं तदा ॥
क्षमस्व मे दुर्विनयमज्ञस्याशु प्रसीद च ॥ १६१॥

अधरकस्य [2]पदे पत नानक-
स्तमवदत्स तदेदमुदैरयत् ॥
तव [3]पतामि सदैव गिरा गुरो ?
चरणयोः शुनकस्य किमस्य तु ? ॥१६२॥

प्रससाद नानकगुरुर्वचसास्य
निजधुत्तरीयमददादनुकम्पः ॥
अथ तेन तत्क्षणकृतावरणोऽपि[4]
महदद्भुतं स हि निरावरणोऽभूत् ॥१६३॥

उपदिदेश गुरुर्भव वारिधि-
र्ननु षड्र्मिभिरेष सुदुस्तरः ॥
प्रवहणं हरिनाम समाश्रयं-
स्तर वितीर्णमकिञ्चनधीवरैः ॥१६४॥

---

१. कि—क०

२. पदेपत—क०

३. पतामि—क०

४. वणोपि—क०

ज्ञानवैराग्यसम्पत्तियुक्कालसः
सङ्क्रमय्य श्रियंस्तस्य सूनौ तदा ॥
तीर्थयात्राभिलापादटिष्यन्महीं
स्थापितस्तत्र सिंहासने योगिना ॥१६५॥

तेनाभ्यधायि भवदायुरतो विशिष्टं
वर्षद्वयं स्वरमिताः सुमते १ च मासाः ॥
अन्ते ततस्तव पदेऽधरकं निवेश्य
गन्ता दिगन्तमहमात्ममनोऽनुकूलम् ॥१६६॥

मम भाग्यमन्तसमये
त्वां द्रष्टाऽस्मीति कथितवता ॥
तेनोपचार्यमाण-
स्तावत्कालं गुरुरतरथौ ॥१६७॥

तस्मिन्नतीतेऽधरकं पदे निवेश्य सः ॥
द्वीपसंस्थं विपहरं देशं स्वैरगतिर्ययौ ॥१६८॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
साळसरायविमुक्तिर्नामाष्टमः प्रस्तावः ॥

—:०:—

१. दिभगन्तं—ब०
२. महमात्ममनो–ख०

## नवमः प्रस्तावः

सा शारदा शरदिजेन्दुमरीचिगौरी
चित्ते मम स्फुरतु यत्करुणप्रणाली ॥
जाड्यं हरन्त्यपि विबोधसुधाच्छटाभिः
स्वेषां जडं वितनुते हृदयारविन्दम् ॥ १ ॥

मर्यादामविलङ्घयन् प्रभुरपि प्राचीं गभीराशयः
सिन्धुस्तुङ्गतरङ्गमुक्तविलसन्मुक्तागणस्तत् क्षणम् ॥
दृष्टो नानकपूजनाय नियतं पुष्पाञ्जलिं प्रक्षिपन्
न क्षुद्रा हि महान्त एव महतां माहात्म्यविज्ञाः किल ॥ २ ॥[1]

तरङ्गबाहून् विततान् दधान-
स्तमाजुहाव स्वनकैतवेन ॥
आलिङ्गितुं तापहरं जनस्य
सिन्धुर्ध्रुवं वाडवदूयमानः ॥ ३ ॥

उत्प्लुत्य पादांसि पयोधितोये
निरास्वसुर्नूनमिदं विचिन्त्य ॥
न ज्ञानिनो हन्त ! कुतोऽस्य सङ्गो
जडस्य सङ्गे विगतं वयो नः[1] ॥ ४ ॥

पोतैराकलितः सिन्धुः क्रोडसंस्थैः[2] समन्ततः ॥
वमन्फेनकफं वृद्धमन्वकार्षीत्कुटुम्बिनम्[3] ॥ ५ ॥

---

1. महान्त एव महता माहात्म्यज्ञाः इत्यर्थान्तरन्यासः ।
१. न—ख०
२. संस्थैः—ख०
३. मन्वाकरा—क०

पञ्चत्रिंशत्क्रोशदीर्घं दधानो
देहं[1] पञ्चक्रोशविस्तीर्णमासीत् ॥
मत्स्यस्तस्मिन् सेतुतुल्ये त्रिघस्त्री
नीतोऽस्माभिः सञ्चलद्भिः समुद्रे[2] ॥ ६ ॥

गच्छामः कुत्र बालेति ? मामपृच्छद् गुरुस्ततः ॥
नाहं वेद्मीति गदिते मत्स्योऽयमिति सोऽगदत् ॥ ७ ॥

भीतो मत्स्यमुखं दृष्ट्वा मर्दनस्तमवादिषम् ॥
राक्षसाद्रक्षितो येन तस्मिँस्तिष्ठति किं भयम् ? ॥ ८ ॥

मीनो मनुष्यस्य गिरं जगाद
"गुरुर्निराकारक" नानकोऽसि ॥
त्वं केन वेत्सीत्यथ तेन पृष्टे ?
स सारमूचे वचनं विसारः ॥ ९ ॥

त्रेतायुगे मित्रमहं तवाऽऽसं
किञ्चिद् त्वदुक्ताकरणोत्थकोपे ॥
किमुच्छलस्यद्य ? यथैव मीनो
रोषादिति त्वामवदं सहेलम् ॥ १० ॥

तेनास्मि मीनः स्मृतपूर्वजन्मा
यन्मामपृच्छस्तदिदं मयोक्तम् ॥
इहास्व मामुद्धर दीनबन्धो ?
बन्धोऽयमन्येन न यस्तु भेद्यः ॥ ११ ॥

---

अत्र २ ३,४, ५ श्लोकेषु समुच्चयनम् ।

1. ३५ × ५ क्रो० = १७५ क्रो० क्षेत्रफलं मीनदेहस्य ।

2. स च मीनो नाऽक मीना प्रचलन्ति मर्दनश्च मीनो जात ।

आत्मा स्थितिं पृच्छति योगिवर्ये
तिष्ठेति तं मर्दन आबभाषे ॥
मयोक्तमन्त्रस्य ममास्ति शक्तिः
सर्वज्ञकानाममवन्नियोगे ॥ १२ ॥

क्षमस्व मे चापलमित्यवोचत्
तं मर्दनस्तत्र निशां निनाय ॥
यतिः सपादप्रहरे दिनेऽसौ
मत्स्यो मृतो दिव्यगतिं प्रपेदे ॥ १३ ॥

मां प्राप्स्यसीत्युक्तमनेन पञ्च-
दिनानि सिन्धोः सलिले गतं च ॥
कालः करालः कलिराजगाम
व्यात्ताननो ग्राहवपुर्गृहीता ॥ १४ ॥

प्रावेशयत्तस्य मुखे यतीन्द्रः
स्थूलं कठोरं किल दण्डखण्डम् ॥
स आर्तनादं बहुधा विमुच्य
पश्चाचलम्बुनिधौ ममज्ज ॥ १५ ॥

उन्निद्रचन्द्रधवलः परिपिङ्गकेशो
मन्दारदारुरुचिरां कलयन्विपञ्चीम् ॥
प्रादुर्बभूव पुरुषः किल तत्र यत्र
तेजोमये न नयनानि नृणां स्थिराणि ॥ १६ ॥

---

१. व्यालाननो—क०

२. खण्डदण्ड—क०

स्मेरः स नानकममापत पद्मयोनि--
रस्याधिकारमकरोदधुना कलेर्यत् ॥
तस्याऽस्य भङ्गमकरोः किमु तद्बलेन ?
को ब्रह्मणोऽन्यथयितुं क्षमते व्यवस्थाम्? ॥ १७ ॥

नानकस्तमभिवन्द्य बभाषे
ब्रह्मणैव विहितः समयोऽयम्[1] ॥
निःस्पृहेषु हरिभक्तिरतेषु
तापसेषु न [1]कलेर्बलमस्ति ॥ १८ ॥

एवमेव किल नानकयोगिन् ?
इत्युदीर्य सुरलोकमगच्छत् ॥
नारदः स यदि वादितवीणो
नानकेन कथितः स च मह्यम् ॥ १९ ॥

दिवसानथ पञ्चदशाम्बुनिधेः
स्थलवज्जल एव जगाम यतिः ॥
न च योगिजनस्य विचित्रमिदं
तदनुग्रहतो मतिरास्त[2] हि नौ ॥ २० ॥

अभक्षयात वायुमेव
सोऽपि सिन्धुसङ्गतः[3] ॥
निकामदुःसहोऽभवत्
पटुः पटुर्न[4] तर्पणे ॥ २१ ॥

---

1. समया. नरयाचारकालसिद्धान्तसंविद इति।
१. ब्राह्मणो—क०
२. पुरस्ते—क०
३. ति—रा०
४. पटु पटुर्न—क०

पुनरिन्द्रसेनसहितस्त्वमिहैष्यस्य[1]—
घुना व्रजेति गुरुणा गदितोऽगात्[2] ॥
[1]ध्वज इन्द्रसेनमददत्समुपेतो
यतिराहुते[3] ह गतविश्वरतिस्त्वाम् ॥ २८ ॥

मित्रं मे नानको योगीत्यभिधाय स निर्गतः ॥
ध्वजेन घटिकापट्के त्रियामाया गते सति ॥ २९ ॥

इन्द्रसेनमवलोक्य यतीशः
प्राक्तनो मम सखेति जगाद ॥
किं प्रमाणमिति पृच्छति तस्मिन् ?
आह स स्म जनुरन्तरवार्ताम् ॥ ३० ॥

आस्याम पार्श्वे जनकस्य राज्ञ—
स्त्रयो वयं तेषु बभूव मत्स्यः ॥
एकः परो द्वौ त्वमहं च तस्य
गृहाण्यभिज्ञानमिदं गृहाण ॥ ३१ ॥

कस्येयमिति ? पप्रच्छ हंसीमुद्दिश्य भूमिपः ॥
अवदाव तवेत्यावां नृपा तत्प्रियकाम्यया ॥ ३२ ॥

न्यायवर्ती[4] नरपतिर्न प्रसन्नः स उक्तवान् ॥
परिग्रहोऽयं हंसस्य तवेत्यवदतं कुतः ? ॥ ३३ ॥
अनेन मिथ्यावादेन योगिनोरपि वां कलौ ॥
स्वेच्छया भविता जन्म षट्द्वारविधित्सया ॥ ३४ ॥

---

I. ध्वज = घर्डावि विपट्रवेले ।
१. मिहेष्य—क०
२. ददितागात्—क०
३. राहूते—क०
४. वर्ती—क०

तथ्यमात्थ[1] किल नानकयोगिन् !
इन्द्रसेन इति वाचमवोचत् ॥
उद्धर ध्वजममुं कृपयेति
प्रार्थनामकृत वर्धकये च ॥ ३५ ॥

यः पञ्चकोशपिहितोऽहमिति प्रतीत-
स्त्वं जागरादिषु सदान्वितमेव विद्धि ॥
ब्रह्माद्वितीयमहमित्यनुमाधि शर्म-
मायाविलासमितरत्सकलं तु विश्वम् ॥ ३६ ॥

आकर्ण्यसारमिदमुक्तमनेकयुक्ति-
श्रुत्युक्तिशास्त्रगहनाद् गुरुणानुकम्प्य ॥
सम्पन्नसाधनतपोदयमात्रबोध-
स्तेनास्य मोहतिमिरौघनिराकरिष्णुः ॥ ३७ ॥

शिष्याय शेपामददाच्च तापः
स्नातो गुरुस्तं स्नपयाम्बभूव ॥
आरोपयामास महत्त्वपीठे
तं च त्रियामा प्रहरेऽवशिष्टे ॥ ३८ ॥

शुद्धसेनस्तमाहूतवान् भूमिपो
नाम मद्भागिनेयेन तस्योदितम् ॥
योगिनां नैवमाकारणं युज्यते
त्वं प्रजाम्मुं प्रपद्यस्व सर्वेष्टदम् ॥ ३९ ॥

तेन राजोपचारेण[2] पूजा कृता
[3]धत्तनादागतेन प्रणम्योदितम् ॥

---

१. सात्य—क०
२. चारे—क०
३. यत्ता—क०

ऐहिकामुष्मिकाणां शुभानां भवान्
शेवधिर्लभ्यते भाग्यतो मादृशाम् ॥ ४० ॥

अष्टादशानां धरणीपतीनां
प्रसह्य[1] राज्यं विततार योगी ॥
द्वीपत्रये तस्य तदाधिपत्यं
बभूव निष्कण्टकमस्य तुष्टेः ॥ ४१ ॥

वर्धकैरस्य नेर्ष्या विधेया त्वया
नानकेनेति राज्ञा समाज्ञापितः ॥
उक्तवान् राज्यमस्मै प्रदद्यां गुरो !
तेषु [2]कन्थैकपात्राय कोऽन्वीर्ष्यति ? ॥ ४२ ॥

मासमास गुरुस्तत्र सेव्यमानो महाजनैः ॥
शुद्धसेनेन्द्रसेनाभ्यां प्रार्थितः करुणानिधिः ॥ ४३ ॥

आगमन्नानको योगी द्वीपं झिलमिलाभिधम् ॥
यत्राम वारिधावेव षण्मासान्निरवग्रहः ॥ ४४ ॥

वेलायां लसदेलायां तस्थौ सप्तदिनानि सः ॥
नगराय पिपासुं तं क्षुधितं स्माह मर्दनः ॥ ४५ ॥

सन्तोषं कुरु भोः सौम्य ! मर्दन ! त्वं पलायसे ॥
कष्टेन कातरायन्ते न स्तोकेन तपस्विनः ॥ ४६ ॥

त्वं योगी जितसकलमघोऽसि साधो !
दूयेऽहं निरवधि जाठरानलेन ॥

---

१. प्रसाद–स०
२. कन्थैर–र०

आहर्तुं किमपि समानये पुरो स्या-
दित्यूचे स तमवदत्स तिष्ठ तिष्ठ ॥ ४७ ॥

पप्रच्छ मर्दनो नाम नगरस्यावदद् गुरुः ॥
पुरं ब्रह्मपुरं धर्मवचनो भूपतिर्द्विजः ॥ ४८ ॥

अत्रान्तरे श्रमविकासिमुखस्खलद्भि-
र्दर्भैः स्थिरश्रुतिभिरस्थिरलोचनैश्च ॥
पश्चान्मुहुर्वलितकन्धरमीक्षमाणा
दृष्टा पलायनपराः शतशः कुरङ्गाः ॥ ४९ ॥

आपेदिरे सपदि पल्वलकेलिलग्न-
पङ्काः स्फुरत्प्रतिपदिन्दुकलाभदन्ताः ॥
उन्मुक्तघुर्घुररवाः परिचर्व्यमाण-
मुस्ताधिवासितवना बलिनो वराहाः ॥ ५० ॥

गर्वेण मन्थरपदा नयनैः सरोषै-
रीषद्विवर्तिभिरुदीक्षितपार्श्वभागाः ॥
दृष्टा गतिर्गिरिणि दीक्षरणिश्रितानां
न द्वीपिनां किमपि भीतिविबोधहेतुः ? ॥ ५१ ॥

श्येनैर्नखाङ्कुशविदीर्णशरीः[1] समन्ता-
दुच्चैरियं वियति मण्डलमाचरद्भिः ॥
आघर्षिता भुवि तथा पतिताः पतङ्गाः
हस्तैर्यथा मृगयुभिः परितो गृहीताः ॥ ५२ ॥

श्रान्ते वनं परिवृतं बहुवागुराभि-
स्तद्विश्वकद्रुभिरुपद्रुतमेव मध्ये ॥

---

१. स्मं—क०

स्थातुं न गन्तुमपि योग्यमभून्मृगाणा-
मावेगवस्तत इतः परिधावतां[1] हा ! ॥ ५३ ॥

चित्रकाणां तरक्षूणां वृकाणां भयवर्द्धनः ॥
हाहाकारो महानासीन्मृगयूणां प्रसर्पताम् ॥ ५४ ॥

गृहान्मृगान्केऽपि रुरून् वहन्तः
सुतासृजः केऽपि बहून् विहङ्गान् ॥
दृष्टास्ततः कार्दमिकाम्बरास्ते
धनुर्धरा जालकराः पुमांसः ॥ ५५ ॥

हरिताम्बरो नववया हयसंस्थो
मृगया वचांसि मृगयुस्त्विति जल्पन् ॥
तत आगतो नरपतिश्रमवारां-
पृषतैरुदञ्चितललाटतटश्रीः ॥ ५६ ॥

शून्ये निषण्णानवलोक्य सोऽस्मान्
पप्रच्छ के यूयमिति ? क्षितीशः ॥
उक्ते मनुष्या इति मर्दनेन
शून्ये कुतस्तिष्ठथ ? सेत्युवाच[1] ॥ ५७ ॥

पुरे निशान्तं प्रविशेम कस्य ?
तं · मर्दनोऽब्रूत ततः स ऊचे ॥
यूयं किमु ? प्रजितास्तदासा-
युवाच रूक्षं किमु दृश्यते[2] ते ? ॥ ५८ ॥

---

१. त हा—ख०
२. दृश्यते—ख०
1. सेत् इत्यत्र सन्धिप्रयोगः ।
२७

*वक्तुं किमास्थ ? कुत आगमत प्रदेशाद् ?
भाषा न बुद्धिमधिरोहति ते स्फुटं नः ॥
इत्युक्तवत्यवनिपे क्षुधितेऽत्र तस्मिन्
क्रोधादवक्तारि मया गदितं तदेदम् ॥ ५९ ॥

इरावत्यथो[1] चन्द्रभागा प्रसिद्धा
विपाशा वितस्ता शतद्रुश्च नद्यः' ॥
तदन्तर्गतो भाति वाहीकदेश[2]–
स्तमस्मद्गतेर्विन्ध्यपादानभूतम् ॥ ६० ॥

त्वयाकर्णितः कश्चिदस्त्येव[2] देशः ?
स[3] ऊचे श्रुताः शुद्धसेनस्य देशे ॥
स्थितास्तापसाः केऽपि वाहीकदेश्या–
स्त एवेह यूयं किमायातवन्तः ? ॥ ६१ ॥

त एवेति मयोदीर्य तस्य नामान्वयुज्यत ॥
स ऊचे [3]धर्मवचनो द्विजोऽहं धरणीपतिः ॥ ६२ ॥

पुरं ब्रह्मपुरं नाम द्वीपं शिलमिलाभिधम् ॥
नामत्रयाणामस्माकं पप्रच्छ तदुदीरितम् ॥ ६३ ॥

नानकः स निराकारो बालसिन्धुरहं नृप ? ॥
अयं मर्दन इत्युक्तो वीणावादविनोदकृत् ॥ ६४ ॥

---

1. "अथ" इत्यर्थे "अथो" शब्द प्रयोगः "अथोनिमित्तंश्च" बुद्ध्य० २।१
2. वाहीकदेशः = इरावती-चन्द्रभागा-विपाशा-वितस्ता-शतद्रुनदीनां मध्ये स्थितः ।
3. धर्मवचनो नामा राजा वाहीकदेशस्य, यश्चायं देशः शिलमिलाभिधे द्वीपे ब्रह्मपुरनाम्नि-नगरेऽस्ति ॥

१. ह्य—क० *वक्तुं किमास्य इति 'क' पाठः ।

२. स्येष—ग०

३. स···देशे—"स" इत्यत्र नास्ति ।

मयोक्तं कति राजानो द्वीपेषु कतिषु स्थिताः ॥
आदाय कतमस्याज्ञां राज्ञां सघः प्रवर्तते ॥ ६५ ॥

द्वीपत्रयेऽष्टादशभूमिपालाः
कुर्वन्ति राज्यं निजगाद राजा ॥
नामानि तेषां कथयेति पृष्टः
शिष्टः स ऊचे वदतां[1] विशिष्टः[2] ॥ ६६ ॥

सुखचयनकमलनयनौ[3] सुखसागरशुद्धसेनाख्यौ ॥
अस्पर्शनाथनयनज्योतिर्द्विजधर्मवचनाश्च ॥ ६७ ॥

राजा सगरसेनश्च स वीरमदनाभिधः ॥
नृपतिर्लोलनयनो नामा परशुरामकः ॥ ६८ ॥

अटकोघटकश्चैव शुद्धशैगालकस्तथा ॥
रामायनो मग्नरायस्तथा त्वरितरङ्कः[6] ॥ ६९ ॥

नृपो बुद्धिविवेकश्च बलसंहारनामकः ॥
अष्टादशामी कथिता नामभिस्तव पार्थिवाः ॥ ७० ॥

कमलनयनमुक्तवान्स मुख्यं
नृपतिषु तेषु मयानुयुज्यमानः ॥
अहमवदमिदं मृषा गुरुर्मे
प्रथममकरोदखिलेषु शुद्धसेनम् ॥ ७१ ॥

---

१. वदता —ख०
२. विशिष्ट—क०
३. नयना—क०
४. माल—ख०
५. अटका—क०
६. रगक—ख०

पत्तनानि हतवैरि च राज्यं
दुर्गकोशबहुसैन्यसमाजाः ॥
शून्यतां सपदि भूप ! भवन्ते
कश्चन प्रकृतिमाह[1] ह शून्यम् ॥ ७६ ॥

ब्रह्मक्षत्रियसार्थवाहचपला यस्यौदनं साम्प्रतं
मृत्युर्व्यञ्जनमद्र यश्च वटका: पृथ्वीपृथुः शष्कुली ॥
एते वारिधयश्च पेयसलिलं [2]सोयं महाघस्मरः
कालः कश्चन मुञ्चतीति वितथा स्वेम्नः प्रतीतिर्नृणाम् ! ॥ ७७ ॥

इत्थं नश्वरमाकलय्य सकलं राज्यादिमोहास्पदं
बद्धो मा प्रियतां ममत्वगहने हस्तीव पङ्के भवान् ॥
मानुष्यं समवाप्य दुर्लभमिदं केनापि पुण्येन भोः !
तं मन्त्रं जप येन मुञ्चति भवो भूतोऽनुभूतव्ययः ॥ ७८ ॥

आज्ञापयस्व किमपीति वदन् पपात
पादाब्जयोर्नरपतिर्यतिभूपतेः सः ॥
तं शुद्धसेनमवधेहि सदैव मान्यं
मान्यं नृपेष्विति गुरोर्गिरमग्रहीच्च ॥ ७९ ॥

तृणमिव राज्यमुपेक्षितुं
क्षमेत वचनामृतपानपोषितः ।
नरपतिनेति विनीतमीरितो-
नगरमगादमुना समं गुरुः ॥ ८० ॥

---

१. मा हर—क०
२. सोहं—क०

[१]ऊनविंशतिमासान् स तस्थौ नृपतिसेवितः ॥
राजभोज्यानि भुञ्जानः स्थविष्ठो मर्दनोऽभवत् ॥ ८१ ॥

[1]जम्बूद्वीपस्य विविधान् प्रदेशानभ्रमद् यतिः ॥
मर्दनोऽभूद् जिगमिषुः पर्वते वीक्ष्य पचनम् ॥ ८२ ॥

नानकेन कथितं तव चेतः
पचने वसति मर्दन ! नित्यम् ॥
मर्दनेन गदित तव शून्ये[२]
सर्वदैव रमते हृदयं हि ॥ ८३ ॥

सप्तत्रिंशदहोरात्रांश्चलितोऽस्मि निरन्तरम् ॥
माम्रपालभसे दैवान्नगरे सम्रुदीक्षते ॥ ८४ ॥

अगृणान्नानकः स्मित्वा बालसिन्धो ! श्रुतं त्वया ॥
मयोक्तं सत्यमाचष्टे बुभुक्षुः प्रकृतेर्वशः ॥ ८५ ॥

स उवाच [४]चञ्चलतया न नैव किल रक्षसा मृष्टः ॥
मर्दन ऊचे सम्प्रति जठरानलमृज्यमानोऽस्मि ॥ ८६ ॥

गुरोः करुणया सिद्धिं बालसिन्धो ! त्वमागमः ॥
न मे स दयते तेन नयते [५]द्वन्द्वयातनाम् ॥ ८७ ॥

दर्शयामि नगर यतिरूचे
मर्दनेन कथितं न दिदृक्षे ॥

---

1. जम्बूद्वीप = बृहदेशियादेशस्य प्राचीन नाम ।
१. उन—क०
२. शून्य—क०
३ देवाल क०
४. चचल—क०
५. द्वन्द्व—क०

पश्यसि द्रुतमवश्यमिदं त्व-
मित्युदीर्य स गतो गिरिपार्श्वम् ॥ ८८ ॥

पप्रच्छ मर्दनस्तत्र किं नानकमिदं पुरम् ? ॥
जगाद नानको योगी देवगान्धारसंज्ञकम् ॥ ८९ ॥

राजाऽस्ति देवलूतो
भूतप्रेतासुरेन्द्रसंसेव्यः ॥
सप्तदशलक्षसंख्या
नमन्ति यं नित्यमिह दैत्याः ॥ ९० ॥

आखेटार्थं देवलूतः [1]प्रसर्पद्
ईक्षांचक्रेऽस्मानधस्ताद्गिरेस्त्रीन् ॥
आहारं मे लब्धमत्रानयध्व-
मित्यौत्सुक्यादादिदेशासुरांस्त्रीन् ॥९१॥

आगच्छतस्तानवलोक्य घोरान्
[2]भीतः प्रभो ? मर्दन आबभाषे ॥
जिघृक्षवो नः समुपासरन्ति
"[1]कर्तुः क्रियां [3]पश्य[1]" यतिर्जगाद ॥ ९२ ॥

अथोन्यास्ते जाता अभिरविमुन्मुक्ता इव[2] खलाः
पुनर्दैत्याः भ्रष्टाः झटिति गतिमेतां समगमन् ॥

---

१. तर्पदोत्तां—ग॰
२. पोतपु—क॰
३. पश्यति—ग॰
I. "कर्ता" इति शब्दो गुरुमुख्यमाहिबे "करतार" इति ।
2. रविमपि यथा उद्भूता कन्याः तच्छाया तथैव मानवमपि दैत्या कन्याः तच्छाया इत्यन्वयः ॥

गता वारा शप्ता सुरपतिनियुक्ता नवनवा
वि[१]युक्ता दग्ग्यस्ते सपदि जतुपान्धा[1] इव ययुः ॥ ९३ ॥

देवल्हताभिधं मन्त्रिणं भूपतिः
पृच्छति स्मेदमाश्चर्यमास्ते कुतः ! ॥
तेन विज्ञसमेव ध्रुवं सिद्धियुक्[२]–
तापसस्तत्परीक्षा मया तन्यते[३] ॥ ९४ ॥

सेवार्थमहमेतस्य यमिनोन्धो भवामि चेत् ॥
[३]तदा त्वमपि सेवस्व देव ! स्वमतिसम्मतम् ॥ ९५ ॥

साष्टाङ्गं यतिमभिवादयां बभूव
नान्धत्वं सचिव ! उपाजगाम भक्त्या ॥
आयाताः कुत इति ? [४]पृच्छते स तस्मै
[२]योगीन्द्रोऽमरनगरादिति व्यचष्ट ॥ ९६ ॥

कस्यामास्ते दिशि पुरमिदं नाम किं ते [२]पुरास्य ?
[३]गच्छेत्येवं वदति सचिवे तत्र नो [३]दिग्विभागः ॥
ज्ञेयः साधो ! सचिव ! [३]भवताऽहमिराकारनामा
निर्विण्णानां[५] नगरमटवीत्यालपद् योगिराजः ॥ ९७ ॥

---

1. जनुपाधा इव आज मनोन्धा इव ।
2. अमरनगरम् = देवगान्धारपत्तनस्याद्योघो जम्बूद्वीपे ।
१. नियुक्ता–क०
२. पुरो–ग०
३. नद–ख०
४. पृच्छपते–ख०
५. निर्मिण्णाना–ग०

वृत्तान्तमेतमभिधाय निनाय तत्र
राजानमेष सचिवः स च दुष्टबुद्धिः ॥
बुद्धौ विभाव्य सकलग्लसनं जगाम
सैन्येन सार्द्धमवत्सविधे ततोऽन्धः ॥ ९८ ॥

अन्धं तदैनमनुमाय विचेष्टितेन
किं स्वित् प्रभो ? इति नृपं निजगाद मन्त्री ॥
अन्धोऽस्मि यच्छतु दृशं पदयोः पतामि
त्यक्तोपधिर्नृपतिनेति ततोऽभ्यधायि ॥ ९९ ॥

परिहसि किमु ब्रवीषि सत्य-
मिति ? सचिवोऽभिदधौ नृपो जगाद ॥
ऋतमिदमवधेहि भोः ? ससैन्यं
कृतमभुनान्धमवेहि मामकस्मात् ॥१००॥

मन्त्री जगाद तव नानक ? योगिवर्य ?
राजाप्रभावमवगत्य बभूव भक्तः ॥
अस्मै दृशं वितर पश्यतु ते [1]पदाब्जे
मोहस्य दुर्विलसितानि वशिन् ? क्षमस्व ॥१०१॥

उन्मीलयस्व नयने यतिरित्यवादी-
द्राजा प्रबुद्धनयनः पदयोः पपात ॥
कर्ता परिस्फुरतु ते हृदये त्रिलोक्या
भर्त्यं विमुञ्चति [2]यमित्यवदद् यतीन्द्रः ॥१०२॥

---

1. लस भ्रंशने भ्वादि० ।
१. पदाग्रे–प०
२. अपि–क०

राजाऽभूत कृपा कृता मयि महारण्ये यदत्रागतं
योगीन्द्रो निजगाद पूर्वविहितां स्मृत्वागमं संविदम् ॥
आरोहाश्वलमाहरस्व किमपीत्येवं नृपेणोदिते ?
न त्वङ्गस्यभुजो वयं यतिरिति स्मेरः समाभाषत ॥१०३॥

[1]शिष्योऽस्मि ते सकलमामिषमत्यजं च
त्वं भुंक्ष्व वैष्णवजनोचितमेव भोज्यम् ॥
उक्त्वेति सप्त नृपतिः स्वभटान् न्ययुङ्क्त
तद्भोज्यवस्तु मधुरंश्च फलं ग्रहीतुम् ॥१०४॥

शुद्धसेनमवगच्छति भूपं
नानकोऽगददिदं नृप आख्यत् ॥
भक्ष्यमेव स तु पूर्वमिदानीं
यद् ब्रवीति तदमुं प्रतिपत्स्ये ॥१०५॥

मन्यसे मां यथा वीर ? तथा मन्यस्व तं नृपम् ॥
नानकेनेत्यभिहितः स तथेत्यब्रवीद्वचः ॥१०६॥

मधुराणि [2]फलान्यभुङ्क्त योगी
गिरिमंस्थं पुरमेदनं प्रपन्नः ॥
अपचं सह मर्दनोप्यभुञ्जद्
यतिनोऽज्ञायत भोजने समाधिः ॥१०७॥

[3]सपादयामोत्तरजातबोधो
मयाकृतं भोज्यमभुङ्क्त योगी ॥

---

१. सिखोऽस्मि—क०
२. फलानिभुंस्व—ख०
३. 'सपा' इति नास्ति "क" इत्यत्र ।

शेषं[1] ददौ भूपतिमन्त्रिणोस्तौ
समाधिगुग्यौ घटिकाश्वतस्त्रः ॥१०८॥

तदनन्तरं प्रणमतः स्म पादयो
रुपनप्रबोधयुतपूर्वकिल्विषौ–[2] ॥
गमितो महत्त्वममुना नृपो मरा-
न्विदधौ निराकृतिचितेर्विचिन्तकान् ॥१०९॥

नवमासमतीत्य तत्रगयो
प्रसराख्यं नगरं ययौ यतीन्द्रः ॥
घनमानुपभूपतेस्त्रिमास्या
विषयं प्राप स तीक्ष्णताननाम्नः ॥११०॥

असितरोमशमस्फुटभाषितं
वनमनुष्यकुलं तदभज्यत ॥
भयमुपेतमुदीक्ष्य चिरेण न-
स्तदवलोक्य विभाव्य च मर्दनः ॥१११॥

मामपृच्छद् . गुरुर्वालसिन्धो ?
किमित्यमुं ! भद्रमूचे तदा मर्दनः ॥
के [4]कराला इमे नानकः प्रोक्तवान् ?
मानवाः काननस्य श्रुता ये चिरम् ॥११२॥

१. शेषां–क०
२. त्स् विषौ–क०
३. बोपुन–क०
४. के वमुना–ख०

पलायितेषु सर्वेषु स्थितमेकमुदैरयम् ॥
कोऽसि ? चीत्कृत्य स ययौ फलं मूलमुपाहरत् ॥११३॥

आहृतमेतन्मूलफलं नानक ऊचे शुद्धमिदम् ॥
भुंक्ष्व बुभुक्षाशान्तिकरं मर्दन आजहेऽहमपि ॥११४॥

मासं स्थितस्तत्र ययौ यतीन्द्रो
मार्गे समाधिप्रतिबद्धयात्रः[1] ॥
त्रयो दशाहानि हयाँश्च मासान्[I]
बभ्राम तद्वीपविलोकनोत्कः[2] ॥११५॥

स्थानीयमायास्यति मर्दनेन
पृष्टे गुरुः स्माह बुभुक्षितोऽसि[3] ॥
ओमित्युवाचायममुं चभाषे
सन्तोषमाधेहि विधेहि धैर्यम् ॥११६॥

सन्तुष्य सन्तुष्य बृहद्बुभुक्षो
म्रिये कदाचिन्नियतं स ऊचे ॥
गुरुर्बभाषे विविधैरुपायै-
र्नास्त्येति मर्त्यो [4]मृतिमत्र कश्चित् ? ॥११७॥

बुभुक्षया चेद्‌ त्रपसे त्रिलोक्याः
कर्ता प्रभुर्जीवयिता भवन्तम् ॥
उदीरिता मृत्युशतस्य शान्ति-
रेकस्य नाथर्वनिरूपितस्य ॥११८॥

---

I. हयांश्चमासान् = सप्तमासान् ।
१. बद्धगात्रः—क०
२. नोत्मुकः—ख०
३. तोऽस्मि—क०
४. मृतमत्र—क०

योजनोत्तरमुपेत्य पुरं तन्
नानकेन भणित व्रज भुंक्ष्व ॥
निर्धनस्य मम दास्यति पण्य
पचने क इति ? तं स बभाषे ॥११९॥

गच्छ भुंक्ष्व नगरे यदभीष्टं
चोरवत्प्रहरते यदि कश्चित् ? ॥
नाम मे वद न कोऽपि निहन्या–
देतयोरिति ? वचांसि बभूवुः ॥१२०॥

मर्दनः प्रचलितो हृदि बुध्वा
मित्रमत्र भवितास्य हि कश्चित् ? ॥
येन मामकथयद् गतशङ्कं
गच्छ भुंक्ष्व यदभीष्टमिहेति ॥१२१॥

नगरं [1]हिरण्मयमुदीक्ष्य विचित्रं
पुरुषं स्थितं पुरमुखेऽप्यमपृच्छत् ॥
नगरस्य नाम नृपतेश्च निजं च
वद रीतिमस्य मम सौम्य ? यथार्थम् ॥१२२॥

नगरं सुवर्णपुरमित्यभिधेयं
कमलोचरो नयन इत्यवनीशः ॥
मम धर्मसिंह इति नाम यथेच्छं
[2]पणमन्तरेण कलयस्व पदार्थान् ॥१२३॥

---

१. हिरण्मय–ख०

२. पण्यमन्त–ख०

तव नाम किं ? विपणि मे हि गृहाण
ननु मोदकादि यदभीप्सितमत्र ॥
सह सार्थिभिर्न किमपीह निषिद्ध-
मिति ? तेन भाषित उवाच स [1]हृष्टः ॥१२४॥

अहमस्मि मर्दन इति प्रथितो मे
न च सार्थिनोऽर्दयति वीर ? बुभुक्षा ॥
इदमुक्तवानयमनीयत पण्यं
स्वगृहे न किञ्चिदवितीर्णमनेन ॥१२५॥

धर्मसिंहस्तदापृच्छत्कियदस्तीति ? मर्दनम् ॥
सार्धं प्रस्थद्वयमिति मर्दनस्तमभाषत ॥१२६॥

आनतो धर्मसिंहेन विक्रेता विनयान्वितः ॥
तोलयित्वा ददौ तस्मै पक्वान्नं मोदकादिकम् ॥१२७॥

तुलां तोलनपाषाणं सर्वं वीक्ष्य हिरण्मयम् ॥
विस्मितो मर्दनः स्माह किममीषां नु विक्रयात् ! ॥१२८॥

[I]अकृष्टपच्यं भवतीह सस्यं
गृह्णन्ति सर्वे नृपतेर्निदेशात् ॥
आगन्तवे किञ्चिददत्यभीष्टं
मूल्यं विना पार्थिव ? डिंडिमोयम् ॥१२९॥

भृतिं न वाञ्छन्ति च कारवोऽत्र
कृपा न वृष्टेः सलिलैः क्रियाय ॥
इत्युत्तरं प्राप्य स धर्मसिंहा-
तुष्टो गतो मर्दननामधेयः ॥१३०॥

---

१. हृष्टः—क०
२. तोल्य—ख०
I. अकृष्टपच्यम् = कर्षणेन विना हलकर्षणं च जायमानमन्नम् ।

स उक्तवान् मोदकशष्कुलीभुक्
प्रसह्य सर्वं यतये चरित्रम् ॥
तेनोक्तमत्रास्ति[१] नृपो न पापं
वसन्ति सन्तो यवना न सन्ति ॥१३१॥

न स्वस्य जातिं वद मर्दनेह
जोषं जुषस्वातिमनोज्ञभोज्यम् ॥
वसेह योगिन् ! इति मर्दनोक्तः
स उक्तवानीशवशोऽस्मि नेशः ॥१३२॥

स्त्रीसङ्गं कुरुते न वा जन इति प्रश्ने तदीये जगौ
योगी दृष्टिभिरेव गर्भविधृतिर्वामभ्रुवा नो रतिः ॥
आश्चर्यं निजगाद मर्दन इद श्रीनानको कीर्तय-
त्कर्तुः कीर्तय किं न मर्दन ! विभोश्चित्रं चरित्रं किल ! ॥१३३॥

राष्ट्रं कियन्नरपतेरिति मर्दनेन
पृष्टोऽनदद् यतिरतीन्द्रियबोधसिन्धुः ॥
'खव्योमसप्तनवयोजनसम्मितं[२] तन्
नास्यावनीपतिरुपैति तुलामिहान्यः ॥१३४॥

शुद्धसेनादपि श्रेष्ठ इति तेनोदिते पुनः ॥
सोनाच जगतीकर्तुः कारितः श्रेष्ठ एव तु ॥१३५॥

आज्ञापयसि चेद्धोज्यं तुभ्यमप्यानये[३] गुरो ! ॥
तेनोक्तमिति सोवादीत्कर्तुः[२] कौतुकमीक्ष्यताम् ॥१३६॥

१. त्रापि—क॰
२. सम्मतं—ख॰
३. तुभ्यप्यानये—क॰
1. ६७११ योजनानि।
2. गर्वं त्यक्त्वा नवे बिस्वेद कर्तुं मंडलिमान बनांविनि यति ।

मर्दनो बुभुजे सप्तदिनान्यष्टमवासरे ॥
धर्मसिंहोऽवदत्तौ द्वौ कुतो नागच्छतां यती ? ॥१३७॥

वाताशनौ प्रयतमत्र इमौ नु भोज्य-
मित्युक्तवन्तममुमाख्यदसावशुद्धम्[1] ॥
किं वीक्ष्यसे ? न किमपीति ? ततस्तदुक्तौ
अस्यास्त पञ्चकलयन्नगमत्सुभोज्यम् ॥१३८॥

[I]कर्ता कर्तेत्यालपद्धर्मसिंहः
सत्यः कर्तेत्याह योगीश्वरः स्म ॥
आनीतं किं नाम ? किं ? कश्च वर्णः ?
तेनेत्युक्तो[2] धर्मसिंहो बभाषे ॥१३९॥

आनीतं भोज्यमेतच्छुचि भवदुचितन्नाम मे धर्मसिंहो
वर्णः सर्वस्य चैको नृपतिरिह महान् सर्वराजैर्नमस्यः ॥
निर्दम्भः शान्तचित्तस्त्वभिदमुपनतं भुंक्ष्व तेनेदमुक्तो
नाहं भोक्ष्ये सदोषो नृपतिरिति यतिः स्मेरवक्त्रो बभाषे ॥१४०॥

को दोषो नृपतौ वदेति गदितस्तेनोक्तवान्नानको
दोषं स्वं स विदां करोतु तमिहानीय स्वयं निर्णय ॥
उक्त्वा सर्वमिदं सरोषमनयच्चद्धर्मसिंहः पदं
नीतं मर्दनवीणया यदुपतेः शुश्राव गीतं यतिः ॥१४१॥

आरूढः सितमतितुङ्गमश्वरत्नं
मुक्ताभिर्ललितकपोल उज्ज्वलाभिः ॥

---

१. शद्धं—क०

२. मे—क०

I. स्वल्पायासेनैव सर्वस्यैव हृदि स्वविचारमारोपयन्ति यतीन्द्राः ।

तेजस्वी न बहु पुरःसरोऽप्यधृष्यः
संदृष्टः कमलविलोचनः क्षितीशः ॥१४२॥

कर्त्ता कर्त्तेति राजाऽकथयदकथयत् सत्यकर्त्तेति योगी
नम्रस्तत्पादपद्मे नृपतिरभिदधौ को नु[1] मय्यस्ति दोषः ? ॥
तेनोक्तं ते 'त्वहंयु-[2]प्रथितिरतितरां शुद्धसेनं त्वमूर्न
किं जानीषे ? जनानां हृदयमधिवसन् सर्वसाक्षी न वञ्च्यः ॥१४३॥

दोषं दूरीकुरुष्वेत्यभिदधति नृपे नान्क्रोऽवदत्क-
मायातो यो जनानामहमिह नृपते ! सप्तसंख्यं सहस्रम् ॥
जानामि त्वां न मां त्वं कलयसि, कलिना रुद्धबुद्धिः स ऊचे-
ऽभिज्ञानं किं ? कृते मे समधिगमविधिर्नाम किं वाक्ययोश्च ? ।१४४

योगीन्द्रोऽब्रूत पूर्वं जनकनरपतेः '[3]सांधियाम त्रियामा'[4]
स्नानव्यापारकारुस्त्वमसि सुधमिनो धर्मबन्धुश्च मेऽसि' ॥
आनीय त्वं सुधौतं नरपतिलपितं साधुपानीयमस्य
प्रेष्ठीभूस्ते स राज्यं व्यतरदभिमतं सर्वसंकल्पवेदी ॥१४५॥

समाचन्द्रेति ते नाम मम गोवर्धनेति च ॥
[1]पूर्वमासीत्किमपरं शुश्रूषसि भूमिप ? ॥१४६॥

प्रणनाम नृपो नगराय चले-
त्यवदन् न ययौ स निरेपणकः ॥

---

१. मय्यस्ति—ख०
२. प्रतिथि—ग०
३. सांधियामा —क०
४. त्रियात्मा—ख०
1. तेन शुश्रूषिति—क०
2. अत्रास्त्यपरो नानकस्य पूर्वजन्मवृत्तान्त ।

अददादथ राज्यमुवाच यति-
स्त्वयि सन्निहितं मम तोपकरम् ॥१४७॥

शुद्धसेनमधिपं त्वमवेही-
त्युक्तवान् यतिरसावनुमेने[1] ॥
तुष्टयेऽस्य नगरं व्रज साधो !
इत्युदीर्य स मया [2]तदनायि ॥१४८॥

मासान् स्थितः पञ्चदशान् स राज्ञा
नानोपचारैः परिपूज्यमानः ॥
तेनार्पितं राज्यमतीव भक्त्या
प्रत्यर्प्य तस्मै स ययौ सुमेरुम् ॥१४९॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
सुवर्णपुरगमनं नाम नवमः प्रस्तावः ॥

---

१. मवमेने—क०
२. समपातदत्रपि—क०

## अथ दशमः प्रस्तावः

द्राक्षारसादपि महामधुरैर्वचोभिः
श्रोतावलीः शिशिरयन्ति सतां कवीन्द्राः ॥
यस्या विशुद्धमतयः करुणाकटाक्षै-
स्तां भारतीं सुरसमाजनुतां नमामि ॥ १ ॥

अव्याहतगतिर्योगी सुमेरुं स भजन् पथि ॥
वैणिकेनेति विज्ञप्तो विनयात्परमादरात् ॥ २ ॥

मक्केति यद् यवनजातिषु सुप्रसिद्धं
स्थानं [1]तुरुष्कनिवहैर्बहुमन्यमानम् ॥
तद् द्रष्टुमिच्छति मनो महनीयकीर्ते-
स्त्वामन्तरेण ननु नेष्यति तत्र मां कः ? ॥ ३ ॥

क्रोशाः[1] सहस्रद्वयमस्ति सार्ध-
मितस्तदार्या न दिशन्ति[2] गन्तुम् ॥
इत्थं [2]यतीन्द्रेऽभिहितः स ऊचे
सदागतिं शक्ष्यति को निरोद्धुम् ? ॥ ४ ॥

उत्कण्ठामस्य विज्ञाय[3] स्वेषामिष्टकरो गुरुः ॥
सुमेरुयात्रामुत्सृज्य मक्काख्यापत्तनं[4] ययौ ॥ ५ ॥

---

1. तुरुष्क —तुर्क इति भाषायाम् ।
2. आर्या न दिशन्तीत्यनेनापि भाव्यम् ।
१. क्रोशः—क०
२. न्द्राभिहितः—ख०
३. स्वेषा—क०
४. ख्यापत्तन—ख०

प्राकारेण महोन्नतेन परितः संवेष्टितं भास्वता
पालाशैर्बहुकेतनैर्विलसितं सौवर्णचन्द्रोदयम् ॥
नानाधूपसुगन्धिभूमरुचिरं माल्योल्लसत्सौरभं
तद् देवायतनं दिनैः कतिपयैरस्माभिरासादितम् ॥ ६ ॥

जपमालाकरा वृद्धाः श्मश्रुला हरिताम्बराः ॥
स्वशास्त्रपारदृश्वानो [1]म्लेच्छाचार्या विलोकिताः ॥ ७ ॥

मर्दनः प्रचलितो विलोकितुं
मध्य एव यवनैर्न्यरुध्यत[2] ॥
नानकाय तदुवाच सोऽब्रवी-
न्नां निरोत्स्यति न कोपि ? गच्छ भो ? ॥ ८ ॥

मक्केति देवायतनं त्वदीयं
यद् वीक्षिणो म्लेच्छजनाः कृतार्थाः ॥
अवेहि गत्वा खलु तस्य तत्त्वं
तत्त्वं स्वकीयेषु महत्त्वमिच्छुः ॥ ९ ॥

वद्वेक्षणान्देवलका अनैषु-
रन्यानसौ मुक्तविलोचनोऽगात् ॥
व्यलोकयद् योगिवरप्रभावात्
परैरदृश्यं खिन्नमात्मनं सः ॥ १० ॥

आगत्य तेनेदमवादि योगी
मूर्तिर्मया ग्रावमयी व्यलोकि ॥
शिवस्य सा मर्दन ? मूर्तिरस्ति
निगूहितेत्याह यतीश्वरः स्म ॥ ११ ॥

---

1. मौलवी पदभाजां म्लेच्छाचार्याणां सजीव वर्णनम् ।
2. मर्दनो न्यरुध्यतेत्यन्वयः ।

न मूर्तिपूजा यवनेषु शस्ता
न ते कुतस्त्वामपसारयन्ति ? ॥
अनेन योगी पुनरेव पृष्टो
जगाद सन्देहममुष्य भिन्दन् ॥ १२ ॥

स्वनकारहुसेननामधेयः
प्रबलो म्लेच्छमहीमहेन्द्र आसीत् ॥
अपनेतुमना बभूव सोऽन्धो
दहनः किञ्च ददाह तस्य वेश्म ॥ १३ ॥

क्षमयितुमपराधं प्रार्थयामास सोऽयं
विहितविविधपूजः स्वप्नमत्रालुलोके ॥
यदि कथमपि पश्येत्कोपि मूर्तिं मदीयां ?
भवति सपदि सोऽन्धो बन्धुलः किं परेण ? ॥ १४ ॥

नाभूवमहमन्धोऽत्र कुत्र लोकं नयन्त्यमी ? ॥
मर्दनेनेति स पृष्टः पुनरूचे यतीश्वरः ॥१५॥

ये भेदबुद्धिं हृदये निधाय
पश्यन्ति ते वेश्ममिहान्ध्यभाजः ॥
त्वं मर्दनास्मत्सहवासजात-
निर्भेदबोधः कथमन्धता ते ? ॥ १६ ॥

[1]देवलका इह मर्दन नवशतसंख्याः स्वपर्याये ॥
बद्धेक्षणं नयन्ते प्राकारं स्पर्शयन्ते च ॥ १७ ॥

स्नपयन्ति बद्धनेत्रा
न तेऽपि जानन्ति किमिहेति ? ॥
सलिलं तदेव विनयात्
नयन्त्यमी दीर्घिका यवनाः ॥ १८ ॥

---

१. देवालया-ख०

दृष्टा मक्का मया ढक्का स्वमहिम्नः प्रणादिता ॥
मदीनां नय मां वन्द्यां नदीनां जाह्नवीमिव ॥ १९ ॥

इति मर्दनविज्ञप्तः सस्मितो नानकोऽवदत् ॥
द्वादशाहाधिगम्यां तां नगरीमर्द मर्दन ? ॥ २० ॥

प्रत्यन्तदेशवसतीरवलोकयन्तो
निस्तीर्णसैकतपथा वयमभ्रजाम ॥
विस्तीर्णपण्यगहनां यवनैरनेकै–
रासेवितां नयनपेयरुचं पुरीं ताम् ॥ २१ ॥

महम्मदो यवनेषु महोत्तमो
जितहृषीकचयो[1] भगवज्जनः ॥
वपुरमुष्य निखातमिह व्यसोः[2]
पदमदो[3] ! महनीयमभूत्ततः ॥ २२ ॥

मात्यमोदकरोन्तरथासी–
न्मर्दनो महमदस्य दिदृक्षुः ॥
नानकोऽहमभितप्रतिहारं
द्वादशेव हि च लम्बितपादौ ॥ २३ ॥

[I]दीर्घश्मश्रुः [4]शिथिलहरितं चोलमङ्गे दधानो
मालापाणिः परिमितवचा देशिको म्लेच्छजातेः ॥
आगत्यात्रामिदमभिदधौ कौ युवां रे ? भदिष्ट–
स्याङ्घ्रीकृत्वाऽभिमुखमथमौ वीतशङ्कौ शयाथे ॥ २४ ॥

---

१. चय.—क०

२. व्यसः:—क०

३. महो—क०

४. शिशिमलवस०

I. तुरुष्काणां "फकीरास्याना" सजीवं चित्रणम् ॥

वैदेशिकौ दूरतराध्वखिन्ना-
वावां प्रसुप्तावकृताऽवधानौ ॥
तदाऽऽवयोः श्रान्तिविहस्तयोस्त्वं
विकृष्य पादौ परतः कुरुष्व ॥ २५ ॥

इति नानकेन गदितो यवनोऽसौ
यवनेन केनचिदकर्षयदङ्घ्री ॥
[1]स यतो यतः किल चकर्ष पदे नौ
चलजं न्यवर्तत ततस्तत[2] एतत् ॥ २६ ॥

युग्मम्

म्लेच्छाचार्यो रुष्ट आचष्ट दुष्टौ
जानीथः किं कार्मणं ? किञ्चिदेतत् ? ॥
कृष्येते वां यत्र यत्रैव पादौ
द्वारं भ्रामत्याकुलं तत्र तत्र ॥ २७ ॥

व्रतनियमभक्तिशून्यौ
प्रवर्तकाऽस्मन्मतस्य गतभावौ ॥
अवमत्य पूज्यपादं
स्थितावितो नास्तिको भजत ॥ २८ ॥

[3]प्रस्वापसन्दर्शितनिस्पृहत्वौ
भ्रष्टौ पथिभ्यां यवनार्ययोर्हा ! ॥
न वा विरक्तौ न युवां गृहस्थौ
वृथा किमर्थं भ्रमतः पृथिव्याम् ? ॥ २९ ॥

---

१. सपनो—ब॰
२. ततस्तएतत्—ब॰
३. प्रस्ताव—ब॰

इत्युपालम्भमुखरे यवने तत्र नानकः ॥
अमृतासारमकिरद् वारिवाह इवोपरे ॥ ३० ॥

विभुं प्रभुं स्वं यदि मन्यसेऽङ्ग ?
स दिक्षु सर्वासु तदा प्रसृप्तः ॥
मक्कामदीनैकनिवासिनं चे-
त्तदा परिच्छिन्नतया विनाशी ॥ ३१ ॥

अरावादिनित्यं किल सङ्गिरन्ते
ये तेऽपि वेदप्रतिकूलवादाः ॥
न ब्रह्मणोऽन्यत्परिमाणशून्या-
न्नित्यं श्रुतिर्मृष्यति वस्तु किञ्चित् ? ॥ ३२ ॥

छिन्नप्ररूढाः किल कामना याः
बाह्यैर्व्रताद्यैः किमु सद्वरास्ताः ? ॥
एना हि चेतस्य इवौद्भियंते[1]
जटासु छूनास्विह वासनासु ॥ ३३ ॥

ये पञ्चकृत्वः प्रणमन्त्य बुध्वा[2]
स [3]न प्रसन्नस्त्वयि साभिमाने ॥
तं ज्ञानवन्तो गलिताभिमानाः
सुखं यथेच्छाचरणाश्चरन्ति ॥ ३४ ॥

स्वान्ते कठोरे मदमत्सराद्यै-
र्न रोहति ज्ञानसुपर्वशाखी ॥

---

१. इवोद्भियं-क०
२. बुध्वा-क०
३ स न प्रसन्नस्त्वयि—ख०

सतां वचोभिर्मसृणीकृतेऽस्मिन्
[1]रूढोऽमृतस्वादु फलं प्रसूते ॥ ३५ ॥

द्विजोऽन्त्यजो वा यवनो विजित्य
मनो जगन्नश्वरमेव बुद्‌ध्वा[2] ॥
जानाति यः प्रेमपदं तमीशं
स वै महात्मा स च वन्दनीयः ॥ ३६ ॥

वेशैराचरितैर्वृथा बहुविधैः शक्तैर्जगद् बन्धने
मृत्युः किं विनिवर्तते ? किमु जगत्स्वामी समाराध्यते ? ॥
मायानिर्मितहाटकैर्न विपदो नश्यन्ति नार्थक्रिया
जायन्तेऽपि तु लभ्यते कतिपयैः कीर्णा कपर्दावलिः ॥ ३७ ॥

[I]पद्दैकमालोक्यमहम्मदस्य
द्रव्यार्थिभिर्देवलकैः परीतः ॥
अत्रान्तरे मर्दन आजगाम
नातिप्रसन्नोऽकथयत्प्रवृत्तिम्[4] ॥ ३८ ॥

तं नानको वीक्ष्य जगाद योगी
सतानि सम्यक् तिथिसंख्यकानि ॥
स्याता समानां दिनि देवभक्त्या
महम्मदः स्वस्य तपस्यया च ॥ ३९ ॥

ततः परं शूद्रगृहेऽवतीर्य
स्वकर्मणा प्राप्य गुरुं गरिष्ठम् ॥

---

१. रूढो-क०
२. बुध्वा—रा०
३. एडूर-ब०
४. प्रवृत्ति-ब०
I. एडूरः पदुनो वा महम्मदस्य पादुरेव ।

अवाप्स्यसि ब्रह्मभवं स हित्वा
कुलायमुत्सृज्य खगो यथा खम् ॥ ४० ॥

अथाऽयमूचे यवना वदन्ति
महम्मदो यं परमेश्वरेण ॥
जगाद सार्धं कृतवांस्तदुक्त्या-
[1]ऽऽम्नायं कोरानाख्यमतिप्रमाणम् ॥ ४१ ॥

आचष्ट योगी शृणु मर्दनेदं
कलौ प्रवादा विविधा भवन्ति ॥
अतत्त्वविद् गड्डलिकाप्रवाहाद्
न्यायाद्गतं गच्छति सर्वलोकः ॥ ४२ ॥

वचनानि महम्मदेन सार्धं
"जबराईल" इति प्रसिद्धभाजः[१] ॥
अमर्त्यैर्लिखितानि तानि लोके
[2]यवनाम्नायकोराननामधेयम् ॥ ४३ ॥

मर्दनेन गदितं जगदीशं
दृष्टवानयमिति प्रवदन्ति ॥
[२]मूर्त एव विषयो नयनस्य
सत्त्वमूर्त इति नानक ऊचे ॥ ४४ ॥

जीवमेव जगदुर्जगदीशं
त्वन्मुखादपि तथाश्रुतमासीत् ॥

---

I. महमदस्य परमेश्वरेण सह वार्ताविषय एव कुरान इति ।
2. कोराननिर्माणकथा ।
१. भाजा—क०
२. मूर्तं यवन—व०

तद्विलक्षणमथ त्वमवादी
मर्दनस्तदिति विप्रतिपेदे ॥ ४५ ॥

जीवो ब्रह्म न संशयोऽत्र सहसा किं स्वावृतोऽविद्यया ?
यत्कौन्तेय इवाविवेकवशतो राधेयतामागतः ॥
ईशानुग्रहलब्धसद्गुरुरसौ मोहेन मुक्तो निजं
माहात्म्यं समवाप्य नन्दति यथा मारेण हीनः पुमान् ॥ ४६ ॥

साम्यं गुणानां प्रकृतिः प्रकीर्तिता
सा शुद्धसत्त्वा जगदीशितुर्वशे ॥
सा म्लानसत्त्वा खलु जीवमोहिनी
मायामविद्यां क्रमशो वदन्ति याम् ॥ ४७ ॥

अनाद्यविद्याकृतजीवभावो
यदा प्रपद्येत जगन्निवासम् ॥
तदा निमुच्येत जनः प्रबुद्धो
विश्वासमासाद्य गुरौ च शास्त्रे ॥ ४८ ॥

इति मर्दनमाख्याय योगी [1]मामिदमब्रवीत् ॥
स्वसा स्मरति मां सौम्य ! गच्छामस्तत्र सत्वरम् ॥ ४९ ॥

आस्ते कियद्दूरमितः स्वसा ते ?
प्राप्स्याम एनां[1] कतिभिश्च घस्रैः ॥
मयेति पृष्टो निजगाद योगी
योगीपते[2] स्वामिरवोघहान्यै ॥ ५० ॥

[2]सप्तत्रिंशतिभिः क्रोशशतैस्तत्परिमीयते ॥
सुरनागपुरं देशादस्माच्छ्रु च लभ्यते ॥ ५१ ॥

---

1. माम् = बालगिरिपुरम् ॥
2. २७०० क्रोशमिता ।

१. 'पूना' "क" इत्यत्र ।
२. योगीपते इति नास्ति "क" इत्यत्र ॥

सायं प्रचलिताः सर्वे प्रभावाचस्य योगिनः ॥
[3]घटिकायामतीतायां रात्रेस्तत्र समागताः ॥ ५२ ॥

तुलसी तमुदीक्ष्य नानकी-
मवदद् बन्धुरुपैति तेऽनघे ? ॥
निपपात पदोः प्रहर्षिता
यतिराजस्य निवारिताऽपि सा ॥ ५३ ॥

अस्मार्ष त्वामद्य मध्याह्नकाले
नानक्यामित्यालपन्त्यामुवाच ॥
वीणाधारी [1]व्योमखाम्वाक्षिसंख्यान्
क्रोशान् नोद्यामागतोऽयं विलङ्घ्य[2] ॥ ५४ ॥

नानको नयनसंज्ञयाऽथ तं
संनियम्य भगिनीममापत ॥
वीक्षितासि यदि वक्षि कुत्रचि-
त्कार्यतः सपदि गन्तुमुत्सहे ॥ ५५ ॥

तुलसी तमचष्ट सौम्य ! भो !
जयरामस्य समागमं विना ॥
अपयातुमितो न साम्प्रतं
मनसा ते कलयामि साम्प्रतम् ॥ ५६ ॥

गन्तव्यमस्ति[3] कटिनीति जगाद योगी
श्रीचन्द्रमस्य पुरतो भगिनी चमार ॥

---

1. परन्त्वेकयैव घटिकया तत्र सर्वे समापाता इति यतेर्महत्त्वम् ।
2. २७०० मिताः ।
3. कटिनी—ग्रामनाम ।
१. नाद्यां—क० इदं ग्रामनाम ।
२. विलप्य—क०

तं पद्मपत्रनयनं सुविनीतवेषं
जाता युवानमवलोक्य दयामदन्तः[1] ॥ ५७ ॥

रुदती निजगाद तं स्वसा
मत्कामादिह[2] मासमास्यताम् ॥
तनयो विनयोपशोभितः
किमु नालप्स्यत[3] एष सन्मतिः ! ॥ ५८ ॥

कदाचिदागत्य विधास्यते स्थिति-
विसर्जनं मे कुरु भद्रमस्तु ते ॥
स्वसारमात्मानमलं विजानतीं[4]
स्वसारमाचष्ट स निर्ममो मतिः ॥ ५९ ॥

भुक्त्वा व्रजेति भगिनी विनयादवोचत्
भुक्तं ततः कथितदुग्धसितायुताम्नम् ॥
भूयः कदा भवति ? दर्शनमित्यवादीत्
सा तामचष्ट स यदा भवतीं दिदृक्षुः ॥ ६० ॥

रात्रौ वसेति स मया गदितो न्यवात्सीत्
सस्नौ निशो यतिपतिः प्रहरावशेषे ॥
क्रोशान् गतस्य [1]सरलनेत्रहपीऊसंख्यां-
स्तस्य प्रभातमभवन् पवनास्पदस्य ॥ ६१ ॥

१. मदम—क०
२. मत्कामादिह—क०
३. लप्स्यत—क०
४. तो—क०
1. ५२०० मिताः ।

कुत्रागताः स्म ? इति [1]मां यतिराबभाषे
त्वं विद्धि कोऽस्ति ? भवतोऽधिकबुद्धिशाली ॥
इत्यग्रुर्व तदनु पृच्छति मर्दन स्म
त्वं ब्रूहि मर्दन ! कमागतवान्प्रदेशम् ? ॥ ६२ ॥

यतो गतास्तद्द्विगुणे प्रदेशे
जानामि योगीश्वर ! सङ्गताः स्मः ॥
इत्युक्तवन्तं तमुवाच सम्यक्
[2]शतावधानोऽसि गतित्वरायाम् ॥ ६३ ॥

कृपा त्वदीयेति तमालपन्तं
गन्तासि कुत्रेति ? पुनः स ऊचे ॥
इच्छा तव स्वैरचरस्य यत्रे-
त्युदीरितो मेरुगिरिं जगाम ॥ ६४ ॥

उड्डीनं तमनु[3]ड्डीनावावां गमनवर्त्मना ॥
आवयोरपि सामर्थ्यमासीत्तस्य प्रभावतः ॥ ६५ ॥

निरीक्षमाणा नगराणि नाना
ग्रामान्नदीः पर्वतकाननानि ॥
शैलस्य शृङ्गे न्यपताम तुङ्गे
हिरण्मये प्रस्तुतसद्रसे च ॥ ६६ ॥

सविस्मयो मर्दन आचचक्षे
हा ! हेमशून्ये मधुरो रसश्च ॥
किमर्थमत्रेति ? ततो जगाद
यतिर्जगत्यां विफलं न किञ्चित् ? ॥ ६७ ॥

---

१. मा—क०

२. शतावधानोसि—ख०

३. नगरमनुड्डीनावानां—क०

सुराङ्गनाङ्गाभरणं सुवर्णं
तपस्विनां तृप्तिकरो रसश्च ॥
पिबेयमेतं रसमित्यपृच्छ-
चं मर्दनः स्मेरमुखः स ऊचे ॥ ६८ ॥

पिबन्ति भक्ता सततं विरक्ता-
स्तेऽन्तर्हिताः सन्ति धराधरेऽस्मिन् ॥
सहेत वेगं न परो निपीय
विरक्तिहेतुं मदमस्य कर्तुः ॥ ६९ ॥

मर्दनस्तमतिक्रम्य पपौ रसमनुत्तमम् ॥
उन्मत्त इव मत्तोऽभूत् तरुमूलमुपाश्रितः ॥ ७० ॥

मामवोचदथ नानकोऽस्य
किं जात ? मित्यहममुं तदावदम् ॥
त्वं चरित्रमवगच्छ तावकं
स स्पृशन् शिरसि तं समादधात् ॥ ७१ ॥

उड्डीय तस्मादचलादयाम
नभः पथेन प्रथितं पृथिव्याम् ॥
शीतत्वहेतुं सकलस्य शैलं
शुभ्रं यशोराशिमिवेश्वरस्य ॥ ७२ ॥

कोयं गिरिः श्वेततरः सुतुङ्गः
शैत्येन गात्राणि जडानि कुर्वन् ॥
अत्रात्ययं पाण्डुसुताः किमीयु-
र्वीणाधरो नानकमित्यपृच्छन् ॥ ७३ ॥

गङ्गातरङ्गैः परिपूतशृङ्गो
गौरीगुरुस्तापससङ्घसेव्यः ॥

प्रालेयजालामलमूर्तिरेष
गन्धर्वसिद्धाध्युषितो हिमाद्रिः ॥ ७४ ॥

[1]पञ्चत्वमत्रैव वियुक्तकृष्णाः
कृष्णासुताः पाण्डुसुताः समीयुः ॥
युधिष्ठिरः स्वर्गमगात्सदेहः
सदेह यो धर्मधनेषु कीर्त्यः ॥ ७५ ॥

पादौ स्पृशन् शमयते खलवत्तुषारः
शीतो मृदुश्च वयमीशकृपावशेन ॥
दूरादिमं परिहरन्तमिहाक्षताः[2] स्मः
इत्युक्तवान्यतिरियाय शिरोधराद्रिम् ॥ ७६ ॥

तत्रागत्य जगाद नानकमिमां गोरक्षयोगी गिरं
किं नामासि ? च जातिरस्ति[3] तव का ? माग्रे गमो मोहतः ॥
यद् ब्रह्मेव कुयोगिनामसुलभं प्रोत्तुङ्गमेतत्स्थलं
[I]प्रालेये प्रविलीयते लवण[4]वत्तोये हि तूर्णं वपुः ॥ ७७ ॥

तं नानकोऽब्रूत ननाम रूपे
कुतस्तरां ? जातिरमुष्य भूम्नः ॥
अनावृतत्वान्न पुरो न पश्चा-
दाकाशकल्पस्य [5]विलीयते किम् ? ॥ ७८ ॥

---

१. पचत्व—क०
२. इहागमा—क०
३. "स्ति तवकः "इत्यारभ्य" प्रालेये" इति पर्यन्त "ख" इत्यत्र नास्ति पाठः
४. वत इति पद 'ख' इत्यत्र नास्ति ।
५. कल्पविलीयते—क०
I. यथा लवण. तोये प्रविलीयते सत्वरं तथैव शरीरं प्रालेये प्रविलीयत इति भाव ॥

जानामि लब्धो भवता न योगो
यो गोचरो वाङ्मनसा सदैव ॥
अनिग्रयाकारि मृषा वियोगो
योगश्चिदाभासचितोर्हि योगः ॥ ७९ ॥

अपक्रान्तस्ततस्तूष्णीं गोरक्षो वीक्ष्य नानकम् ॥
उपर्युपरि गच्छन्तं स्ववर्गमिदमब्रवीत् ॥ ८० ॥

मुक्तमन्योऽयमायाति नानको मर्त्यलोकतः ॥
निवर्तयध्वं योगीन्द्रास्तं जित्वा मलिनाशयम् ॥ ८१ ॥

तेषु योगिषु मत्स्येन्द्रः समागमदिति ब्रुवन् ॥
यान्यहं तं च पश्यामि मुण्डमात्रक एष कः ॥ ८२ ॥

अवलोक्य नानकमिदं स जगाद
त्वमिहागतोऽसि कतमा तव शक्तिः ? ॥
यतिरित्युवाच वद कामिह ? शक्ति
[I]तव दर्शयामि जगदीशनिदिष्टाम् ॥ ८३ ॥

मत्स्येन्द्रस्तमुवाच वर्णय वपुर्योगस्य विज्ञोऽसि चेद्
यः स्व कायमवैति नैव कुमतिर्योगी स किं कथ्यते ? ॥

किं नु [1]ब्रूहि ? शिरोललाटमुखहृद्वक्त्रः[2] प्रमाणं तिलं
प्लीहाफुप्फुसकश्च कुत्र[3] ? कति वा रोमाणि मोः ? संधयः ॥ ८४ ॥

अस्थीनि मांसपेश्यश्च स्नायवश्च शिराः कति ? ॥
अहोरात्रे कति श्वासा ? आशयाः कति वर्माणि ? ॥ ८५ ॥

---

I. मत्स्येन्द्रनानकसम्वाद ।
१. ब्रूही—ख०
२. हृदन्त्र—ख०
३. कुपर—ख०

यातः कतिपये ब्रूहि ? हंसचारं विचारत ।।
कथं प्रकाशते देहे ? प्रदीप इव दीपयन् ।। ८६ ।।

ऊचे तं यतिनायको न यतिनामास्था शरीरे सतां
निःसारे बहुबुद्बुदे तदपि भो मत्स्येश्वर ? श्रूयताम् ।।
रागेणातिरजोगुणोत्थजनुषा स्त्रीपुंसयोः सङ्गमे
रेतः[1] शोणितयोरसौ व्यतिकरो गर्भाशये जायते ।। ८७ ।।

धातुक्षोभाज्जायते क्लेदमात्रं
पूर्वे मासे भूतचैतन्ययुक्तम् ।।
संशुष्कं तत्तेजसा चानिलेन
[1]द्वैतीयेके बुद्बुदत्वं[2] प्रयाति ।। ८८ ।।

मूर्द्धा पूर्वमुदेति शौनकमते[2] पाण्योः पदोरुद्भवो
मार्कण्डेयमते पराशरसुतो नाभिः पुरस्ताज्जगौ ।।
पूर्वोत्थं कृतवीर्य आह हृदयं कोष्ठं मुनिर्गौतमः
सूक्ष्मं सर्वमुदीयते तु युगपद् धन्वन्तरेः शासने ।। ८९ ।।

---

1. स्मृतो गर्भाशये रेतः शोणितयोर्व्यतिकरो जायते इत्यन्वय । ततः पूर्वमासे तद्व्यतिरेक चैतन्यरूपता गच्छति ।
2. १. शौनकः
   २. मार्कण्डेय
   ३. पराशरः
   ४. कृतवीर्य
   ५ गौतमः
   ६ धन्वन्तरिः ।
   एतेषां—मूर्धोदये भिन्ना विचारा ।

१. द्वैतीयत्वे— ख०
२. त्वं बुद्बुदत्व—क०

अग्नीषोमावनिनिपतनौ व्योमसत्वादयश्च
गर्भं ज्ञानेन्द्रियगणयुता जीवयन्त्यात्मयुक्ताः ॥
अन्तर्नल्या रसनहशिरानाभिनाड्यां शिशोर्यद्
लग्ना वृद्धिं व्रजति तदसौ [1]तानदाहारयोगात् ॥ ९० ॥

आकाशादिगुणानेष आदत्ते लाघवादिकान् ॥
इन्द्रियाणि तृतीये च चतुर्थे स्यन्दते ततः ॥ ९१ ॥

तत्रैव स्थैर्यमङ्गानां पञ्चमे लोहितोद्भवः ॥
षष्ठे बलस्य वर्णस्य नखलोम्ना च सम्भवः ॥ ९२ ॥

नाडीस्नायुशिरायुतः स समनाः प्रव्यक्तचैतन्ययुङ्-
[1]मासे सप्तम उद्गतस्मृतिरसौ [2]त्वङ्मासवानष्टमे ॥
ओजो ह्यस्थिलयं प्रधावति यतो गर्भं च धात्रीं पुन-
र्जीवातुस्थितिहेतुरष्टमभवो नातः शिशुर्जीवति ॥ ९३ ॥

नवमे दशमेऽथवा प्रगुणः
सहसा सूतिसमीरणेन गर्भः ॥
बहिरेति च सप्तमेऽष्टमे वा
क्वचिदायासनयात्स्वकर्मनिन्द्यः ॥ ९४ ॥

लोमलोहितमांसानि जायन्ते मातुरस्य यत् ॥
पितुः स्नाय्वस्थिमज्जानस्ततः षाट्कौशिकं वपुः ॥ ९५ ॥

---

1. तदपि माहारयोगो न जायते यदपि गर्भेन्द्रियमुक्तं शरीर वृद्धि न व्रजति ।
१. प्राप्ते—ख०
२. त्वङ्मास—ख०
३. पुन—ख०

चालमात्त्वसंस्पृष्टस्तत्क्षणं विगतस्मृतिः ॥
हृते[1]स्व इव जन्मौत्यज्वरो रोरुद्यते शिशुः ॥ ९६ ॥

जातो मृतश्च कतिधा न कति स्तनानां
पीतं पयो न कलिताः कति मातरो न ॥
उत्पद्य बन्धविधुताबधुनायतिष्य
इत्यस्य विप्लवमुपैति बहिर्मनीषा ॥ ९७ ॥

कला आशया धातवस्तन्मलाश्च
[2]तथैवोपधातुत्वचः [I]सप्तचोष्याः ॥
त्रयः किञ्च दोषा नव स्नायवोऽस्मिन्
शतानि द्विशत्यादिशः[3] सन्धयश्च ॥ ९८ ॥

[2]अस्थ्नां शतत्रयं षष्ठ्यां सहितं समुदीरितम् ॥
सप्ताधिकं मर्म शतं[4] शिरा सप्तसतीं[5] तथा ॥ ९९ ॥

---

१. स्य—क०
२. तथैद—ख०
३. स्याधिकः—ख०
४. शतं—क०
५. सप्तशतोषा—क०
I. क. धातवः सप्त ।
ख. दोषाश्च त्रयः ।
ग. स्नायवो नव ।
घ. शतानि संधयः ।
2. क. अस्थीनि–३६०
ख. शिराः–७०७
ग. धमन्यः–२०
घ. कंडराः–१६
ङ. मांसपेश्य–५००
च. छिद्रम्—१०, पुरुषे, १३ स्त्रियाम् ।

दशोर्द्धं [1]दशार्धश्चतस्रश्च तिर्यग्
घमन्यो रसप्रापिका[2] वेदनीयाः ॥
प्रसार तथा [3]कुञ्चनं या सृजन्ति
प्रतीकेषु ताः कण्डराः षोडशैव ॥१००॥

नृणां पञ्चशत्या मिता मांसपेश्यो
बलाना तनौ विंशतिश्चाधिकास्ताः ॥
दशच्छिद्रमाहुर्वपुः [4]पूरुषस्य
स्त्रियास्त्रीणि रन्ध्राणि देहेऽधिकानि[I] ॥१०१॥

अधोमुखं पङ्कजजन्मनीषा-
स्थानं मनीषि हृदयं ब्रवीति ॥
[5]प्लीहामतो लोहितवाहिनीनां
मूलं शिराणां तदधस्तु वामे ॥१०२॥

अधस्ततः शोणितफेनजन्मा
वामे स्मृतः फुप्फुसनामधेयः ॥
अधो हृदो दक्षिणतोयकृत्तु
रक्तोद्भव रञ्जकपित्तसद्म ॥१०३॥

अधः शिराणां जलवाहिनीनां
मूलं ततः [6]क्लोमतिलं वदन्ति ॥

---

I. कानि अस्थीनि कति शिरा, कति कडरा कानि रन्ध्राणी यादिम स्पे प्रश्नाना मुत्तराणि ॥

१. दशोर्द्धं—ख॰
२. पापिका—क॰
३ कुचन—क॰
४. पूरयस्य—क॰
५. प्लीहौ—क॰
६. क्लोम—क॰

मेदो भवौ पुष्टिकरौ च तस्य
कुक्षिस्थितस्य ग्रथितौ तु वृक्कौ ॥१०४॥

सोमस्य मण्डलमुदित्वरमस्ति नाभौ
तन्मध्यगं च रविमण्डलमस्ति [1]दीप्तम् ॥
तत्राग्निरस्ति [2]यववद् वपुषि स्यविष्ठे
सूक्ष्मे तिलेन तुलितः सकलान्नयुक्ता ॥१०५॥

सार्धास्त्रयोन्त्राणि[1] नृणां शरीरे
व्यामावधूनामय तेऽर्धहीनाः ॥
[1]रोमाणि तिस्रः कथितास्तु [4]कोट्यः
सार्धाः परार्धाश्च योगिवर्य ! ॥१०६॥

[2]सपादहस्तं परिमण्डलं शिरो
मुखं तु मुख्याश्चतुरङ्गुलं विदुः ॥
ललाटमष्टाङ्गुलकं त्रयोदशा-
ङ्गुलं यकृद्योगिवरैर्व्दारितम् ॥१०७॥

---

1. क. अन्त्राणि = ३½
ख. रोमाणि = ३
ग. कोट्यः = १½
2. क मुखम् = ४ अंगुलम्
ख. ललाटम् = ८ „
ग. यकृत् = १३ „
घ. हृदयम् = ५ „
ङ. तिलम् = ४ „
च. फुप्फुसकम् = ॥ „
छ. नाडी = ७२००० सहस्राणि
१. दीप्रम्–क०
२. यवयवपु–ख०
३. पक्ता–क०
४. कोप्यः–क०

पञ्चाङ्गुलं तु हृदयं तिलं तु चतुरङ्गुलम् ॥
सप्ताङ्गुलं फुप्फुसकं विद्धि मत्स्येन्द्र ! बुद्धिमन् ! ॥१०८॥

द्वासप्ततिसहस्राणि [1]नाड्यो योगिभिरीरिताः ॥
तासां श्रेष्ठा वायुवहा दश तिस्रस्तु तास्वलम् ॥१०९॥

इडा[2] वामे स्थिता मार्गे दक्षिणे पिङ्गला तथा ॥
सुषुम्णा मध्यदेशे तु गान्धारी [3]वामचक्षसि ॥११०॥

दक्षेऽक्ष्णि हस्तिजिह्वा च पूषा कर्णे तु दक्षिणे ॥
यशस्विनी वामकर्णे वदने चाप्यलम्बुषा ॥१११॥

कुहूश्च लिङ्गदेशे तु मूलस्थाने च शङ्खिनी
क्रमेण प्राणापवनस्तिसृष्वासु[1] सञ्चरेत् ॥
प्राणोपानः समानश्चोदानो व्यानस्तथैव च
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥११३॥

वायवो दशविख्यातास्तत्तत्कर्मकरास्तनौ ॥
प्रणामा यच्छतो वश्यास्तेभ्यासेनाखिलेष्टदाः ॥११४॥

इडायां संस्थितश्चन्द्रः पिङ्गलायां तु भास्करः ॥
सुषुम्णायां स्थितः शम्भुः शम्भोर्हंसस्वरूपता[2] ॥११५॥

---

1. इडा, पिङ्गला, सुषुम्णा, गान्धारी, हस्तिजिह्वा, पूषा, यशस्विनी, अलम्बुषा, कुहू, शङ्खिनी चेति नाड्यः ।
2. हंसस्य वर्णनम् । तस्यैव शम्भोर्हंसता च सुषुम्णायां स्थितः । अस्य वर्तने सर्वमिदं वैशिष्ट्यम् योग ॥
१. नाड्यो–ग०
२. ईडा–च०
३ सिपृष्टा–च०

आदौ चन्द्रः सिते पक्षे भास्करस्त्वसिते वहेत् ।।
सार्धद्विघटिकामानादिति सामान्यतो मतम् ।।११६।।

शशाङ्कं वारयेद्रात्रौ दिवा वार्यो दिवाकरः ।।
इत्यभ्यासरतो धीरो योगिनामग्रणीर्भवेत् ।।११७।।

कुम्भकेन[1] सुषुम्णाया मध्ये वहति मारुते ।।
मनोन्मन्यामवस्थाय धन्यां नान्याभिलाषिणः ।।११८।।

षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ।।
स्वाभाविकी गतिः प्रोक्ता [2]श्वासप्रश्वासयोर्नृणाम् ।।११९।।

प्राणो मूलात्समुत्थाय प्राप्येडां पिङ्गलां रविः ।।
नासिकाभ्यां बहिर्गत्वा लीयते द्वादशाङ्गुले ।।१२०।।

अष्टाङ्गुलाद्विशेदन्तर्नाडीभ्यां सोमरूपकः ।।
मलमूत्रमरुच्चक्राण्यपानः स बहिः क्षिपेत् ।।१२१।।

अग्नीषोममयो नाडीं सुषुम्णामाश्रितः स च ।।
आब्रह्मरन्ध्रमु[२]द्गच्छन्नुदानो नाम वर्धते[३] ।।१२२।।

आत्मा सोऽहमुदीरयत्यविरतं तस्मिन् सहोलोपनाद्
[४]ओंकारेणापूर्वरूपकरणादोंकार आविर्भवेत् ।।

---

1. योगे कुम्भकवर्णनम् ।
2. दिवा ६०० श्वासप्रश्वासाः
 रात्रौ १०२१ ,,

१. त्र—क०
२. मुद्ग—क०
३. वर्धतम्—क०
४. दोकारेण—क०

अश्वाप्युश्च मकारबिन्दुसहितं नादं विधि माधवं
रुद्रं मे स सदाशिवं सुमनसस्तत्र स्थित वक्षते[1] ॥१२३॥

सार्धत्रिवलयामूले कुंडली नागरूपिणी ॥
वायुने[2]नोद्ध्वं नयेन्[3] योगी भित्त्वा चक्राणि ता तु षट् ॥१२४॥

हिताहिताख्या हृदये शिराया-
स्तन्मध्यगे मण्डलमिन्दुतुल्यम् ॥
निर्वात[4]दीपाकृतिरत्र वेद्यः[5]
मुमुक्षुणात्मा सकलप्रकाशः ॥१२५॥

निशम्य तत्त्वं यतिनेति गीतं
प्रीतो यतिर्मत्स्यपतिर्जगाम ॥
गोरक्षमूचे मलिनाशयोऽस्य
न नानकः किन्तु स युक्तयोगी ॥१६॥

इति श्रीजगद्गुरुनानककथाया नानकचन्द्रोदयसमाख्याया
सुमेरुयात्रानामदशम प्रस्ताव ॥

— • —

---

१. वायुने–क॰
२. मोद्र–क॰
३. नयन॰–
४. निर्वात–क॰
५. वद्यो–क॰

## एकादशः प्रस्तावः

वन्दे समस्तभुवनव्यवहारहेतुं
वाचं सुरासुरनरैः समुपास्यमानाम् ॥
संसेवितां च पशुपक्षिसरीसृपाद्यै-
[1]र्निर्वाणमार्गमपि वेदपदैर्दिशन्तीम् ॥ १ ॥

आगत्य भर्तृहरिरेतदवोचदेवं
किं नाम ते ? कथय भोः ? कुत आगतोऽसि ? ॥
कस्यासि ? मज्जसि च कुत्र ? किमु ब्रवीषि ?
[2]किं वा रसं त्यजसि ? कं पिबसि प्रकामम् ? ॥ २ ॥

किं सङ्गमुज्झति ? करोषि च कस्य सङ्गं ?
किं वा विलोडयसि ? माद्यसि च कुत्र किं नु ? ॥
किं वा तनोषि ? ननु किं भवसि स्ववृत्त्या ?
क्रोधः स्मरश्च वद ? निर्दहतो न केन ? ॥ ३ ॥

कस्योपदेशत उपैति जनः पदं तत् ?
किं शीतलं शमयते खलु खेदवह्निम् ? ॥
किं वा विभूतिमतुलां तनुते नरस्य ?
दृष्ट्वा निजं सदनमेति किमध्वनीनः ? ॥ ४ ॥

नादं शृणोति किमुपायपरः ? प्रबोध-
सारं समर्पयति कः ? किमु चारुतीर्थम् ? ॥

---

I. भर्तृहरि नानकसम्वादः ।
१. र्मोण—क०
२. कि—क०

पूजापदं कथय भोः ? किमु नि शलाकं ?
को ज्योतिषां घटयते चिरविप्रयुक्ते ? ॥ ५ ॥

लोके धरानरसि केषु शिरोमणिः स्यात् ?
सिंहासने वसति कः ? खलु सार्वभौमः ॥
को वा नियोजयति कारकचक्रमेकः ?
को लक्षते न चतुरैरपि चिन्त्यमानः ? ॥ ६ ॥

कस्मिन्नुदेति ? वद दूरतरं च कस्मात् ?
ज्योतिर्वितानमतिपूरितमस्ति कस्मिन् ? ॥
नेदिष्ठमस्ति किमु ? नानक ! किं दविष्ठं ?
ज्ञेया गुणाः कथय कस्य ? सदैव पुंसः ॥ ७ ॥
अन्तर्बहिर्वसति को ? नुदति क्रियासु
लोकान् क एष कलिकालनिपीतसत्त्वः ॥
किं वावलम्ब्य भवसिन्धुममुं तितीर्षुः ?
त्वं नानकेति कथय प्रथितोऽसि योगी ॥ ८ ॥

[1]एवं भर्तृहरेः प्रश्नान्निशम्य ज्ञानवारिधिः ॥
शृणु योगिवरेत्युक्त्वा जगाद यतिनायकः ॥ ९ ॥
मा नानकनिराकार कथयन्त्यधुना जनाः ॥
अगम्यनगराद्योगिन् ? आगतं मामवेहि भोः ? ॥ १० ॥
ध्मातस्य लोहपिण्डस्य स्फुलिङ्गमिव मामुग्र् ॥
ब्रह्मणो मा विजानीहि भेदाभेदसमन्वितम् ॥ ११ ॥
ज्ञानतीर्थमतिदुर्गममर्त्य-
भूरिकर्मभरदहार्यवगाहे ॥

1. सप्तभि श्लोकैभर्तृहरिनानकमहूपदर् वर्हीक्षयार प्रश्नान् ॥
१. त–क०

विस्तृतैः [1]प्रलपितैरितरं किं ?
श्रीपतेर्विलसितानि वदामि ॥ १२ ॥

उज्झित्वा विषयरसं विपादहेतुं
[1]स्वानन्दामृतममितर्पितः पिबामि ॥

कामादीन्सपदि खलान्विहाय दूरा-
दालम्बे [2]शमदमवीतरागतादीन् ॥ १३ ॥

कोशेषु सत्यसुखमेव विलोडयामि
ग्लानं मनोगुरुसरःसु च मार्जयामि ॥

यद्[3] वासनामनुसरामि भवामि तादृक्
क्रोधः स्मरश्च दहतो न विवेकलुब्धा ॥ १४ ॥

---

१. लि—क०
२. शमवीत—क०
३ द्दा—क०
1. प्रश्नाः ? उत्तराणि

क. किं पिबसि ? आनन्दामृतम् । ख किं त्यजसि ? विषयरसम् ।
ग. किमुज्झसि ? कामादीन्। घ. कस्य समाकरोषि ? शमादीनाम् ।
ङ. किं विलोडयसि ? सत्यसुखम् । च. कुत्र मार्क्षि ? गुरुसरसि ।
छ. किमातनोषि ? वासनाम् । ज. किं भवसि ? तादृक् ।
झ. जनः पद कथमुपैति ? उपदेशतः । ञ. किं तनुते जनः ? सेवाविभूतिम् ।
ट. किमेति जनः ? स्वगृहम् । ठ. कः शृणोति नादम् ? योगी ।
ड. क सार समर्पयति ? चेत । ढ. किं तीर्थम् ? सत्सङ्गति ।
ण. किं पुजापदम् ? मन । त. कः शिरोमणिः ? यो ज्ञानामृतं पिबति ।
थ कः सिंहासने वसति ? आत्तवित्त. । द. क सार्वभौमः ? निःस्पृहः ।
ध. को नियोजियतिकारकचक्रम् ? स्वान्तम् । न. कस्मिन् उदेति ? चित्तके ।
प. कस्मिन् ज्योतिः परितम् ? स्वे महिम्नि ।
फ. किं नेदिष्टम् ? परतत्त्वम् तत इत दविष्ठम् ।
ब. कस्यगुणा गेया ? मुरारे. ।
भ. कोन्तर्बहिर्वसति ? हृत् ।
म. लोकान् कोनुदति ? ईश ।
य. क. कलिकालतरयत्न ? साधु ।
र. किम् अवलम्ब्य भवसिन्धु याति ? भवभावनस्य नामरूप सेतुम् ।

तज्ज्ञोपदेशत उपैति जनः पदं तन्
वेदानलोज्ज्वलयते न च साधुसङ्गात् ॥
सेवाविभूतिमतुलां तनुते सतां च
जीवः स्वगेहमुपयाति परं विलोक्य ॥ १५ ॥

योगी शृणोति खलु [I]नादमनाहताख्यं
चेतः समर्पयति सारतरं प्रबोधम् ॥
सत्सङ्गतिं विमलतीर्थमुदीरयन्ति
पूजापदं च मन एव परं [१]विविक्तम् ॥ १६ ॥

शास्त्रोदितेन समयेन विचार्यमाण-
मावेदितं च गुरुणा करुणापरेण ॥
वाक्यं च तत्त्वमसि मद्गुरुपत्यययोग-
भाञ्जी चिरेण परपूरुषतेजसां[२] भोः ! ॥ १७ ॥

एकः स एव रसिकेषु शिरोमणिः स्यात्
संत्यज्य सर्वविषयान्विषमिष्टदुष्टान् ॥
युक्त्या दुहन्नुपनिषत् सुरसौरभेयी-
ज्ञानामृतं पिबति यः परिणामरम्यम् ॥ १८ ॥

सन्तोषसिंहासन आत्मविद्यो
विद्योतते [४]निःस्पृहसार्वभौमः ॥
स्वान्तं प्रयुङ्क्ते करणानि कामं
कामं वहन्तं[५] तमदोषदग्धम् ॥ १९ ॥

---

I. मनाहननाद – "अनाहदाद" इति मात्रायाम् ॥
१. राव—क॰
२. प्यतेजसो–क॰
३. पिबति परि–क॰
४. ति स्पृह–क॰
५. वह त–क॰

न ब्रह्म वेत्ति चतुरोऽपि विचिन्त्य बुध्या
तस्मिन्नुदेति भव एष ततोऽतिदूरे ॥
ज्योतिः पर[1] हि गगनादिनिवासवेश्म
तत् स्वे महिम्नि परिपूर्णमपेतपारम्[2] ॥ २० ॥

[3]नेदिष्ठमस्ति परतत्त्वमितो दविष्ठं
गेया गुणाः स्वविभवाय मुहुर्मुरारेः[4] ॥
अन्तर्बहिर्वसति हृन्निलयः स ईशो
[5]यन्त्रस्थितानिव जनान्भ्रमयत्यजस्रम् ॥ २१ ॥

शास्त्रोदितेषु सकलेष्वपि साधनेषु
साधा ? य उक्तमखिलैरभियुक्तवर्गैः ॥
नामावलम्ब्य कलिकल्मषनाशहेतु
सेतुं भवाब्धिमतरं भवभावनस्य ॥ २२ ॥

उत्तरानुत्तरधियो निशम्य स महात्मनः ॥
यथागतं भर्तृहरिर्गतः किञ्चिन्न चोक्तवान् ॥ २३ ॥

बालसिन्धोः समाकर्ण्य कथामेतामयाङ्गदः ॥
एतच्च पुरो जातमिति ज्ञातयुतोऽब्रवीत् ॥ २४ ॥

एवमित्युदिते तेन मुदिते तस्य मानसे[7] ॥
समाधिरासीत्तत्राह[8] [9]तत्राहत्कृतिनाम्नः ॥ २५ ॥

---

१. वति—ख०
२ धार—क०
३. नैष्ठि—ख०
४ मुरारे—ख०
५. य प्रस्थिता—ख०
६. सकलेष्वपि—ख०
७. मानस—ख०
८. स्तत्याह—ख०
९. तमाह—ख०

सपादयामेऽष्टमवासरे स
गते समुत्थाय जगाद बालम् ॥
सुधाभिरासिञ्च जनस्य कर्णौ
वर्णौघरूपाभिरये[1] सुमेधः[2] ! ॥ २६ ॥

संस्मृत्य हन्त ! करुणावरुणालयं तं
बालो जगाद न समाधिमगाधमापत् ॥
तेनापि सप्त गमिता नमितास्तु यामाः
प्रोत्थाय नानककथाः कथयाम्बभूव ॥ २७ ॥

आवाभ्यां सह तत्राय कियद्दूरं गते यतौ ॥
पुनर्भर्तृहरिर्गोपीचन्द्रयुक्तः समागमत् ॥ २८ ॥

मुण्डभावुक ! पाखण्ड ! वितण्डावादपण्डित ! ॥
आयासि चण्ड ! कुत्रात्र ! ध्वनयन् ज्ञानडिण्डिमम् ॥ २९ ॥

प्रत्यक्षेण जरारुजामृतियुतो जीवोप्यनीशः परं
कर्मोर्मिप्रचलीकृतश्च नरकस्वर्गादिभोगं वहन् ॥
तादात्म्यं वपुषा चिरन्तनमिदं गीर्भिस्त्वया दुस्तरं
वाचो नानक ! किं ब्रवीषि ! वितथा ब्रह्मास्मि वादोद्धुराः ॥ ३० ॥

एवं भर्तृहरिः स्माह कोपमादीपयन्[5] यतेः ॥
स तु स्मेरस्तमित्यूचे विज्ञानविमलान्तरः ॥ ३१ ॥

माता मतिर्मम जटा यदि वासनाख्या-
स्तत्याज सत्यमभवत्खलु तेन मुण्डा ॥

---

१. यामेयम—ख०
२. यदया—ख०
३. पु—ख०
४. मेधा—ख०
५. माद्दीपयने:—ख०

चेतः पिता मम मृतश्च [1]पितामहो मेऽ-
हङ्कार उग्रमनलं प्रविवेश बोधम् ॥ ३२ ॥

प्रत्यर्थं न क्षमते सदोपतासम्भवात्कचित्प्रमितौ ॥
कामलयाकुलमीक्षणमवेक्षते[2] शङ्खमतिपीतम् ॥ ३३ ॥

देहेन्द्रियमनःप्राणबुद्धिधर्मान्वितः पुमान् ॥
भासमानोऽपि तथा यः पिण्डवत् तद् विलक्षणः ॥ ३४ ॥

तादात्म्यमज्ञानकृतं प्रतीहि
कथं भवेत् चिज्जडयोर्न्द्वैतं तत् ॥
सता प्रकाशेन परेश्वरेण
जीवो न भिन्नः खलु तत्स्वभावः[3] ॥ ३५ ॥

विक्षेपणीमावरणीं च शक्तिं
रजस्तमोत्थामभिभूतमेव ॥
मायाश्रिता दर्शयति प्रपञ्चं
स्वतः प्रकाशं पिदधाति[4] तत्त्वम् ॥ ३६ ॥

नीलेऽन्तःकरणे सुषुप्तिसमये जीवः स्वयं भापय-
त्यज्ञानं च सुखं च केवलमसावानन्दबोधात्मकः ॥
तस्माज्जागरितः स्मरत्यनुभवान्नाज्ञासिषं किञ्चन ?
सुप्तोऽहं सुखमन्यथा स्मृतिरियं संस्कारशून्या कथम् ? ॥ ३७ ॥

प्रयाति लिङ्गोपहितः स्वर्गं नरकमेव वा ॥
घटाकाशस्य गमनमिवोपाधिकृतं च तत् ॥ ३८ ॥

---

१. पितामृत—क०
२. मवेल्ते—क०
३. स्वभाव—ख०
४. ततम्—ख०

अहं देह इति त्यक्तकामदेह इति स्फुटम् ॥
प्रतियन् किं न जानासि ? देहादिभ्यो विलक्षणम् ॥ ३९ ॥

प्रत्यक्षतः कैरवनान्धनस्य
प्रतीयते वैरवभासमानम् ॥
[1]बिम्बं मह[2]ज्ज्यौतिषशास्त्रदृष्ट्या
विपश्चितां तन्महिमप्रतीतिः ॥ ४० ॥

तत्त्वं पदयोर्लक्ष्यं शुद्धमखण्डञ्च चैतन्यम् ॥
सम्बन्धत्रयसहितं तत्त्वमसीत्येकमभिधत्ते ॥ ४१ ॥

उपक्रमाद्यैरवधारितायां
बलीयसी "तत्त्वमसि"[1] श्रुतिर्या ॥
न [3]बाध्यते सा खलु लोकसिद्ध-
भेदानुवादिश्रुतिभिः कथञ्चित् ? ॥ ४२ ॥

रक्तोऽयं न तु मेचको भवति धीः पाकेन रक्ते घटे
[4]तस्मिन्नेव परं विशेषणगतं भेदं गृहीत्वा यथा ॥
भेदग्राहि तु "नाहमीश्वर" इति प्रत्यक्षमेतादृशं
जीवानामवधो[5] हि धर्मनिलयामालम्बमानं भिदाम् ॥ ४३ ॥

योगो भर्तृहरे ? प्राप्तस्त्वया को नाम कीर्तय ? ॥
रोगोऽहं ममताख्योऽयं न गतो यश्चिरन्तनः[6] ॥ ४४ ॥

---

1. तत्त्वमसीत्यस्य महावाक्यस्य द्विधा व्याख्यानम् । सा चेयं श्रुतिः लोकसिद्धभेदानुवादि-श्रुतिभिर्न बाध्यते कथञ्चिदित्यर्थः ॥
१. बिम्बे—ख०
२. महत्—क०
३. बाध्यते—ख०
४. घटेऽस्मिन्नेव—क०
५. भवघो—ख०
६. चिरन्तन—ख०

कर्णयोः पाटनं[1] मुद्रिकाधारणं
वक्षसि स्थापनं वाद्यभृङ्गस्य च ॥
भूतिचर्चाकृतिस्तं नु मालाधृति[2]–
दण्डयात्रस्थितिर्योग इत्याकृतिः ॥ ४५ ॥

गते भर्तृहरौ गोपीचन्दयुक्ते च ते [3]वयम् ॥
[4]अगच्छाम कियद् दूरं कनोफासिद्ध आगतः ॥ ४६ ॥

हसन्नानको मर्दनेनेति पृष्टः
कुतो हस्यते ? योगिवर्यो जगाद ॥
अयं जेतुमायाति गोरक्षशिष्यो
गलं पीडयास्ये[5]त्यवोचत् स हृष्टः ॥ ४७ ॥

नानकेन गदिते नव मर्दन !
प्राणपीडनकरः कलिः किल ॥
[6]वाग्विलासकलहस्तु योगिनां
धीमतामिव जपाजयप्रदः ॥ ४८ ॥

अवोचत्कनीफाः कुतोऽत्रागतोसि ?
यतीशस्तमूचे [7]प्रभोर्दर्शनार्थम् ॥

1. नानककनोफयो सम्वाद ४६ त ५७ यावत् ।
१. पाटनमुद्रिका–ग्र०
२. मालाधृत –क०
३. वये–ख०
४. आगच्छाम–क०
५. स्ये–क०
६. वाग्वि०–ख०
७. प्रभो दर्श–क०

[1]प्रभुर्दृष्टपूर्वः कदाचित्त्वयेति[2] ?
स आहस्म तं नानेको[3]ऽभूत दृष्टः[4] ॥ ४९ ॥

कनीफाः किं नामा ? क इति ? तमपृच्छयतिवरं
स ऊचे [5]चित्रात् मोऽद्भुतविविधकर्मास्मि च यते ? ॥
अखण्डं मे ज्योतिर्विधुतसकलमेतन्मम कृति[6]
विलासः सर्वो मे भवति शिवशक्तिव्यतिकरात्[7] ॥ ५० ॥

ओंकारवाच्यः श्रुतिमौलिमान्यः
[8]सर्वेशिताऽकुण्ठितसर्वशक्तिः ॥
यो ज्ञानमात्रो निजरूपदाता
नाथोऽथवा मे दयितः स आत्मा ॥ ५१ ॥

कनीफा यमापे गुरुस्ते न कश्चित्
[9]प्रपद्यस्व गोरक्षदीक्षां द्रुतं तत् ॥
[10]श्रुतिं [11]पाटवापाटवध्वंसहेतुं
मतं योगिवर्यस्य विद्वन् ? गृहाण[12] ॥ ५२ ॥

---

१. प्रभुं—क०
२. त्वयन्ति—क०
३. नानके—क०
४. दृष्टः—क०
५. चित्राद्वो—ख०
६. प्रमकृति—क०
७. करान्—क०
८. सर्वेशिता—क०
९. पपद्यस्व—क०
१०. श्रुति—क०
११. पाटवा—क०
१२. विद्वनाद्दाण—क०

तमूचे यतिर्योगिना पाटनीयः
[1]पटोऽज्ञानरूपः स्वरूपापिधाता ॥
हृदा धारणा धारणीया न तन्तु-
र्न मृद्भेण चार्यः श्रुतेऽन्याहताख्ये ॥ ५३ ॥

न वस्तिर्न धौतिर्[2] नौलिः कपालं
न वा [3]खेचरी नापि वज्रोलिकाख्या[4] ॥
विरक्तिर्भवेत् सत्यसन्तोषशौचं
स्वरूपावबोधश्च सिद्धिं नयन्ति ॥ ५४ ॥

मलैर्देहतः पातितैः किं कृतं ? भो ?
न [5]रागादयश्चेद्विमुञ्चन्ति चित्तम् ॥
न सिद्धीः श्रयन् इन्द्रजालेपि लभ्याः
कृतार्थो न चेद् जन्ममृत्यू[6] ततार ॥ ५५ ॥

[7]मन्मना भव मद्भक्त इत्याद्युपदिशन् गुरुः ॥
मम सर्वत्र जागर्ति गुरुणान्वेन मे कृतम् ॥ ५६ ॥

गतः कर्णीकास्तमुवाच मर्दनो
त्वयाधुनाग्रे यतिरुक्तवानिदम् ॥
इहास्व किं नु त्वरसे विलोकय ?
क्रमागतानां इतुकं तु योगिनाम् ॥ ५७ ॥

---

१. पयाज्ञान–ख०
२. धोति–ख०
३. खेचरीवा–ख०
४. वज्रोलि–ख०
५. रागाद्ये–ख०
६. जन्ममृत्यून–ख०
७. मन्मना–ख०

आदेशो नानकेत्यूचे हनीफास्तत्र आगतः ॥
नानकोऽवददादेशो निराकारस्य केवलः ॥ ५८ ॥

हनीफास्तमिदं स्माह कोऽहं पूर्वं कथं यतिः ? ॥
कुत्राभवमिति ब्रूहि ? सिद्धोऽसि यदि नानक ? ॥ ५९ ॥

सोऽभूत कङ्कणस्य सूनुः [1]सप्तदशाब्दकः ॥
राजा त्वं मृगयारण्ये मृगं हत्वा तु तोषित ॥ ६० ॥

प्रादुर्बभूव गोरक्षस्तत्र त्वं तं न्यमन्त्रयः[2] ॥
सोऽवदन्निर्दयस्यान्नं मलिनं नाहमद्मि[3] भोः ? ॥ ६१ ॥

हत्वा प्रसीदसि यथा हरिणं वराकं
त्वां च प्रसत्स्यति निहत्य तथैप[4] हन्त ? ॥
हिंसा विहाररसिकाः स्वकृतेर्विपाके
सीदन्ति वीतशरणा मरणार्तिभाजः ॥ ६२ ॥

बीजं विकीर्णमिव पूर्णपयोर्वरायां
वैराग्यमङ्कुरमधाद्[5] हृदि ते वचस्तत् ॥
मृत्युर्नयेत कुरु मे तदिति त्वयोक्तः[6]
स स्थाणुपिप्पलतले वितवार दीक्षाम् ॥ ६३ ॥

हनीफा यमाये यदि त्वीदृशोऽसि
यदासेटसेला विधेया समं कैः ? ॥

---

१. दशारमव—क०
२. तन्निमन्त्रयः—क०
३. मांस—क०
४. तनैव—क०
५. हन्तिते—क०
६. त्वयोक्तः—क०

मृगाः के निपात्याश्च कस्मिन्नु ? तीर्थे
प्रगृह्योपनेया गृहं के ? यतीन्द्रम् ॥ ६४ ॥

सोऽश्वादीन्मृगया समं मृगयुभिः सद्भिर्विधेया सखे ?
रागादीन् हरिणान्विशस्य[2] विषये तीर्थे गृहीत्वा मृगम् ॥
चित्ताख्यं स्वगृहं नयेत्परचितिं गां वासनाख्यां निजां
[3]बध्नीयात्परिधावनैकरसिकामाखेटशौण्डो यमी ॥ ६५ ॥

गतो हनीफाः प्रणिपत्य गोपी-
चन्द्रः समागाद् गुरुणा नियुक्तः ॥
आदेश इत्याख्यदसाववादी-
दादेश एको जगदीश्वरस्य ॥ ६६ ॥

किं नामा ? किञ्च[4] वर्णः ? किं रूपस्त्वं ? किमर्थमायातः[5] ? ॥
गोरक्षनाथमुपसर गृहाण दीक्षां कृतार्थतामश्च ॥ ६७ ॥

गोपीचन्द्रेणेत्यङ्कथितः स जगाद यमिमुख्यः ॥
आयान्तु सर्वसिद्धा भ्रान्ति तेषामपाङ्क्ते ॥ ६८ ॥

ओङ्कारनामा गतवर्णजाति-
र्नोरूपको[6]ऽहं तमसः पुरस्तात् ॥
वैकुण्ठनाथस्य विलोकनार्थ-
मिहागतस्तस्य गुरोर्निदेशात् ॥ ६९ ॥

---

१. कस्मिन्न–क०
२. विनास्य–क०
३. बध्नीया–क०
४. किं वर्णः–ख०
५. माप्यतः–क०
६. रूपकं–क०

[1]को ज्ञानी ? को ध्यानी ?
कः स्नानी ? सत्तमे तीर्थे ॥
को मलिनः ? को विमलः ?
केन जनैः प्राप्यते पन्थाः? ॥ ७० ॥

ऊर्ध्वं किं ? किमधस्तात् ?
प्रकाशते दीपकः केन? ॥
रसनां विना जयः कः ?
चल गोरक्षस्य सन्निधित्वं च ॥ ७१ ॥

गोपीचन्द्रेणैवं
पुनरपि पृष्टः स निजगाद ॥
ज्ञानी गुरुकृतनिष्ठो
ध्यानी विषयैरबाधितध्यानः ॥ ७२ ॥

स्नानी गुरुचरणाम्बुज-
तीर्थे यः क्षालयेच्चित्तम् ॥
मलिनो निर्गुरुरुक्तो
गुरुवाक्यैः शोधितो विमलः ॥ ७३ ॥

---

1. प्रश्नाः ? उत्तराणि
क. किं नाम ? ओङ्कारनामा ।
ख. को वर्णः ? गगनवर्णः ।
ग. किं रूपम् ? नीरूपम् ।
घ. कथमिहागत ? वैकुण्ठनाथस्य दर्शनाय ।
ङ. कः ज्ञानी ? गुरुकृतनिष्ठः ।
च. को ध्यानी ? विषयैरबाधितः ।
छ. कः स्नानी ? गुरुचरणे चित्तस्नानम् ।
ज. को मलिनः ? गुरुणा अनुक्तः ।
झ. को विमलः ? गुरुशोधितः ।

उपदेशेन गुरूणां
मोक्षपुरस्याधि गम्यते पन्थाः ॥
ऊर्ध्वमधस्मादाज्ञा[1]–
[2]मैत्रीं विदधतः प्रकाशते दीपः ॥ ७४ ॥

अजपाजपतश्चिवे
श्रीशं [3]'स्मरतो भव भवच्छेदी'[4] ॥
रसनां विना जपः स्याद्
गोपीचन्द्रेष्टदः सोऽयम् ॥ ७५ ॥

त्वं चल[5]पुरः शनैरहमागच्छामीति तेनोक्तः ॥
किं दृष्टमिति ? [6]वदन्तं गोपीचन्द्रो गतो गुरुं स्माह ॥ ७६ ॥

स तत्त्ववेत्ता स्वयमाजिहीते
योगीश्वरो नानकनामधेयः ॥
अथागतो भर्तृहरिः पुनस्त–
[7]'माहेशमाह'[8] च वदन् विनोदात् ॥ ७७ ॥

त्वमागतः[9] किं पुनरागतोसि ?
तपस्विना तेन स पृष्ट ऊचे ॥
आहूतवान्नानक ? भो ? भवन्तं
गोरक्षनाथस्त्वदितः प्रयाहि ॥ ७८ ॥

---

१. अधस्तात्—क०
२. मैत्रि—क०
३. स्मरता—क०
४. स्मरताभच्छेदो—क०
५. चतुरः—क०
६. वदगोनोच—क०
७. माहेश—क०
८. माहूय च—क०
९. मानताः—क०

[1]कर्णौ पाटय मुद्रिके धर तयोः [2]कन्थां दधानो गुरुं
भस्मोद्धूलनधूसराखिलवपुः पत्रं च दण्डं वहन् ॥
हालास्वादनशृङ्गवादनपरः श्रीभैरवानुग्रहा-
दष्टैश्वर्यनिधिः प्रशाधि [4]जगतीं सम्राडिवाज्ञोत्सुकाम् ॥ ७९ ॥

मतमेवद् युक्तिशुक्ति मुक्तीनां साधनं महत्[5] ॥
इयन्तं मार्गमायातो न रिक्तस्त्वं पुनर्व्रज ॥ ८० ॥

असंस्पृष्टो दुःखैर्मृतिजननरोगादिजनितैः[6]
सुभोगान् भुञ्जानः सुरपुरगतान्योगविभवात् ॥
कृतार्थोऽस्याः सौख्ये न तु मुखरमिथ्या प्रलपिते
मृगो धावन् धावन् कलयति स मृगतृष्णाम्भसि[7] मृतिम् ॥ ८१ ॥

इत्थं भर्तृहरेर्वाणीमाकर्ण्य यमि पुङ्गवः ॥
उवाच वदतांश्रेष्ठोऽद्वैतवादवदावदः ॥ ८२ ॥

गुरूपदेशेन विभूष्य कर्णौ
मुद्रा दधानो मनसो मनोज्ञाम् ॥
कन्थां च शीतोष्णसहिष्णुताख्यां
परिष्कृतो निःस्पृहता विभूत्या ॥ ८३ ॥

पक्त्वा विवेकानलतः कषायान्
रागादिकान् जन्मसुरां गुडं च ॥

---

१. णौ धारय–ख०
२. कन्थादधा–ख०
३. रयादत–क०
४. जगती–ख०
५. महत्–ख०
६. अमन–क०
७. तृष्णाभ्रमति–ख०
८. वध्यावता रसय–ख०
९. धारा–ख०

सारं हरिप्रेम मधु प्रपीय
तृणाय विश्वं खलु मन्यमानः ॥ ८४ ॥

विचारपत्रो नियमैकदण्डः
कृताद्वितीयाश्रुतिशृङ्गनादः ॥
रमे परात्मानमुपेत्य नित्यं
रिक्तो न पूर्णस्य सुखस्य लाभात् ॥ ८५ ॥

त्रिभिर्विशेषकम्

आ पातालाद् आ च वैरञ्च्यलोकान्
मिथ्या नानारूपमैश्वर्यमाहुः ॥
एको नित्यः सोऽयमीशो भ्रमन्ति
यस्य त्रासाद् वायुसूर्यादयोऽमी ॥ ८६ ॥

विना हरिं कोऽनुनयेत[1] सिद्धिं
जरामृतिव्याधिहरीस्त्वयुक्त्या ॥
ततः प्रपद्येत[2] तमेव धीरो[3]
न हारयेज्जन्म विलोभ्यमानः ॥ ८७ ॥

तमेव बुध्वा "ह्यतिमृत्युमेति"
शोकं तरत्यात्मविदित्यशङ्कम् ॥
वदन्ति चेद् वेदविदस्तदा न
मिथ्यात्वशङ्का क्वचिदास्तिकस्य ? ॥ ८८ ॥

राज्यं विहाय खलु मुण्डितवान् शिरस्त्वं
मोहं मुहुर्व्रजसि नो ममतां जहासि ॥

---

१. भुनयेति—क०
२. प्रपद्यन्त—क०
३. घोरो—क०

लुब्धोऽसि सिद्धिषु कुतो निजकार्यहानिं ?
वेतालमोदकनिभासु निमज्जयस्व[1] ॥ ८९ ॥

ततो गतो भर्तृहरिर्भूतनाथसिद्ध आगतः ॥
भूतनाथः पूतवाचं तमित्युवाच विचक्षणः ॥ ९० ॥

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥
भर्तुराशां परित्यज्य सुखं सुष्वाप पिङ्गला[2] ॥ ९१ ॥

आशानिरोधेन निधूतपाप्मा
ब्रह्माहमानन्द इति भ्रमस्ते ॥
दुराशया पुद्गलपातमात्रो[3]
मोक्षः सुखं वैषयिकोऽत्र नान्यत् ॥ ९२ ॥

प्रत्यक्षसिद्धानि सुखानि हित्वा
किं श्रद्धयास्यध्वनि दुर्विगाहे ? ॥
न ब्रह्मणो मूकगुडोपमाना-
त्कश्चित्परावृत्य सुखं जगाद ॥ ९३ ॥

शरीरदार्ढ्याय विधाय योगं
भोगं विदध्याद् विषयैर्विचित्रैः ॥
दुःखास्त्रैहो ? नियमैरनेकै-
र्देहस्य शोषो[4] नरको च नान्य. ॥ ९४ ॥

भूतनाथेन सिद्धेन नानको गदितस्तथा ॥
आचष्ट नष्टसन्देहः स्पष्टमद्वैतशासने ॥ ९५ ॥

---

१ स्वम्–ख०
२. सुषाप–ख०
३. पुद्गुगल–क०
४. शोष–ख०
५ शेरता–ख०

चल बालक ? गोरक्ष रक्ष ? दक्ष निजं वपुः॥
योगस्य कलया कालादालपैरफलैरलम् ॥ ९६ ॥

श्रद्धाविश्वासआशापरिणतिसुसदाश्वेन्न लोकप्रवृत्तिः ॥
कर्मण्येष्यत्फले भोः ? क्वचिदपि न भवेदैहिकामुष्मिकाख्ये ? ॥

सेवन्ते भूपमर्थं गुरुमपि विविधायोगसिद्धीः प्रबोधम् ॥
वाञ्छन्तः पुत्रपौत्रद्रविणगदहतिं स्वर्गकामाः सुरांश्च ॥ ९७ ॥

सुराङ्गसन्धानसमुद्भवो मदो
रथाङ्गसंयोगसमुद्भवा गतिः ॥
यथा तथा भूतवितानजाचिति-
स्ततः क आत्मा पृथगप्युदीक्षितः ? ॥ ९८ ॥

भूतानि चत्वारि मृतिश्च मोक्षः
कामस्तथार्थः पुरुषार्थं उक्तः ॥
प्रत्यक्षमेकं विदितं प्रमाणं
लोकायतं तन्त्रमिति प्रसिद्धम् ॥ ९९ ॥

मोहाय देवद्विषतामतानी-
द्वाचस्पतिस्तत्तु कुतोऽवलोक्य[1] ? ॥
मां [2]मोहयस्यङ्ग ? नहीन्द्रियार्थै-
रलोभितास्तत्र यतो रमन्ते ॥१००॥

त्रिभिर्विशेषकम्

रुन्दन्तु ~ देशान्तरसङ्गताय
विन्दन्तु नार्थं गुरुणोच्यमानम् ॥

---

१. वलम्ब्य–क०
२. मोहृत्य–क०

अमन्यमाना अनुमानशब्दौ
लोकेषु लोकायतिका विमूढाः ॥१०१॥

नैनासि गोरक्षसमीपमेतं
योगे न कायस्य दृढीक्रियायै ॥
एतावदेवाप्यगमत्सयोग-
फलं यदा किं नु तदास्य सङ्गात् ? ॥१०२॥

आयुः परार्द्धद्वितयं यदीयं
चराचरं यः सृजति स्वयम्भूरस्या ॥
परैति चेत् सोऽपि तदा किमन्ये
जालस्थमीनास्तरलीभवन्ति ॥१०३॥

मन्त्रान् साधय सावधानमनसा षट्कर्मसिद्धिप्रदान्[1]
सेवस्वातिरसायनानि भिषजां श्रुत्यैः प्रयुक्तानि च ॥
औत्सुक्यादजरामरत्वजनकानभ्यस्य योगाश्चिर
जन्यं हन्त ! वपुर्विनङ्क्ष्यति सखे ? काले किलातर्कितम् ॥ १०४॥

दृष्टो गुरुस्ते प्रथितस्वसिद्धि-
र्गोरक्षनामा धृतशिष्यसङ्घः ॥
योगीश्वरस्य प्रथितं गताऽपि
प्रवृत्तिमार्गोऽत्र विरज्यते यः ॥१०५॥

स नानरवचः श्रुत्वा भूतया निर्गतस्ततः ॥
लहुरीयाः समायातः सचैनमिदमभ्यधात् ॥१०६॥

[2]हट्टस्थिति किमवहाः ? किमु वा वाणिज्यां ?
मत्ताधिकारमपि किं यवनेश्वरस्य ? ॥

---

1 हृदयाय ।
२. मदा—क०
२. विरुप्यते-ह०

गार्हस्थ्यमुज्झितवता भवता किमर्थं ?
शून्ये वने विहरणव्यसनं धृतं नु ! ॥१०७॥

रुद्धप्राणमनोभिरिन्द्रियगणं निर्जित्य चित्तं चिरं
मैत्र्याद्यैः परिकर्मदुष्करतपः पूतैः सहस्रं समाः ॥
ध्यातो योगवरैर्नयो हि सुलभो बाल ? त्वया नूतनं
वैराग्यं वहता स किं ? स्वधिगमस्तस्मात् वृथा मां भ्रम ॥१०८॥

अनेकजन्मसंसिद्धस्ततो याति पराङ्गतिम् ॥
नह्ययं वासनाबन्धस्तोकेनैव विभिद्यते ॥१०९॥

नानको ज्ञानगम्भीरा गिरो भक्तिरसालसः ॥
लहुरीयाभिध सिद्धं मोदयन्नवदन्मृदुः ॥११०॥

हृद्वस्थिविर्नानपरः कृतिर्वा
गृहस्थता वाप्यवधूतता वा ॥
यस्तुन्यथुद्धे[1] न फलाय किञ्चिद्
बुद्धे विशेषस्तु न तत्र तत्र ॥१११॥

वेषस्तथापि प्रतिकार्यमन्यः
स्वभावतो भूमिपतेर्यथैव ॥
अन्यः सभायामपरोऽवरोध
आयोधनेऽन्यो मृगयासु चान्यः[2] ॥११२॥

स्वस्याभिमानमवधूय हि साधनाना-
मेकं तमेव भगवन्तमहं प्रपन्नः ॥
मामुद्दधार कृपया स भवापहारात्
दान्तं नितान्तमिव दन्तिनमन्तकान्तः ॥११३॥

---

१. इद्धे—क०
२. सुवान्यः—क०

तस्यैवाहं ममैवासौ स [1]एवाहमिति त्रिधा ॥
[2]प्रपत्तिस्तां हरौ कृत्वा तेन शुप्तो न शोचति ॥११४॥

मायेयमानायसमागुणाढ्या
विस्तारिता ये नतमेव गच्छन् ॥
[3]जीवो निमुच्येत यथैव मीनः
कैवर्तमन्या न गतिः[4] कथञ्चित् ॥११५॥

यो भक्तियोगेन सुसेवते मां
पुण्यात्परादव्यभिचारभाजा ॥
स ब्रह्मभूयाय गुणानतीत्य
प्रकल्पते वागियमीश्वरस्य ॥११६॥

विज्ञाय यः परमकारुणिकं परेश–
मात्मानमर्पयति तेऽहमिति[5] प्रवीणः ॥
मन्त्रानमुष्य बहुजन्मकृतान्विमृष्य[6]
सर्वाभयं स दिशति व्रतमेतदस्य ॥११७॥

स्त्रीशूद्रवैश्यपतितानपि यः पुनीते
भक्त्यार्पितैः सपदि तुष्यति पत्रपुष्पैः ॥
नापेक्षते किमपि साधनमाप्तकामः
प्रेम्णैव भक्तिजनितेन सुलभ्यते सः ॥११८॥

---

1. भक्तित्रिधा—( १ ) तस्यैवाहम् ( २ ) ममैवासौ ( ३ ) स एवाहम् ।
१. ॥ इथा—क०
२ प्रपतितां—क०
३. मोचो—क०
४. गति—क०
५. हेत—क०
६. मृ—क०
७. विमृष्य—क०
८. भक्त्यार्पितैः—क०

तावद्भयं विषयसङ्गकृतं च दैन्यं
शोकः स्वलोकविरहेण महांश्च लोभः ॥
तावन्ममाह मति रूढमतिर्जनो यं
यावन्नयाति चरणं शरणं मुरारेः ॥११९॥

गोविन्दपादसरसीरुहरागरिक्ता
मुक्ताः कथञ्चिदपि ये स्वधिया भवन्ति ॥
किञ्चित्पदं समधिगम्य ततः पतन्ति
भक्तास्तु विघ्नमवधूय हरिं श्रयन्ति ॥१२०॥

लहुरीयास्ततोऽगच्छद् गोरक्षः पृच्छति स्म तम् ॥
यथार्थमूचे स च तं स न कुत्रापि सज्जते ? ॥१२१॥

गोपीचन्द्रस्ततोवादीत्पृच्यो नानकतापसः ॥
गोरक्षोऽमूत जानामि मानध्वंसोस्तु योगिनाम् ॥१२२॥

गुरो ? गच्छामि वीक्षिष्ये कीदृशो मुण्डमातृकः ? ॥
इति ब्रुवंस्ततोगच्छत्कङ्करः सङ्करप्रियः ॥१२३॥

ऊचे स तं नानकबाल ? वग्धि
किं नाम ते ? केन विनैव तैलम् ? ॥
दीपो ज्वलेत् जीवति केन बालो ?
विना पयः पानमतीव पुष्टः ॥१२४॥

शरः कथं कार्मुकमन्तरेण ?
चलेत्कथं याति पुरं विपादः ? ॥
तालीं विना तालकमुद्घटेत ?
कथं ततो नानकः ? एनमाभ्यत् ॥१२५॥

[1]ओङ्कारवाच्योस्मि न नामरूपयो–
मँमाभिमानो गुरुणा सह त्वया ॥
[2]लोकैषणामात्रपरेण धावता–
धिगर्जितं ! किं नु ? यतो यतिर्भवान् ? ॥१२६॥

उद्घारिते हृदयतामरसे स्वयुक्त्या
स्नेहं विना ज्वलति दीपक आत्मबोधः ॥
जीवः समाधिविषया परमं प्रपन्नः
पुष्टो विनैव विषयाभिधदुग्धपानात् ॥१२७॥

चेतः शरं क्षिपति भोः ? परमात्मलक्ष्ये
जीवो विनैव धनुषाभिनिवेशदार्ढ्यात् ॥
पादं विनैव सहसा गुरुवेदवाक्यै–
रात्मा प्रयाति नगरं परतत्त्वरूपम् ॥१२८॥

तालीं विनैवोद्घटते हृदयग्रन्थितालकम्[1] ॥
छिद्यन्ते संशया. कर्म क्षीयते वदनुग्रहात् ॥१२९॥

---

1. प्रश्ना ? उत्तराणि ।
क. किं नाम ? ओंकार ।
ख. केन तैल विना दीपो ज्वलति ? आत्मबोधेन ।
ग. केन बाले जीवति ? समाधिविषया ।
घ. कथं चापुं कमशरेण शर क्षिपति ? अभिनिवेशदाढ्यात् ।
ङ. किं पादं कथ याति ? गुरुवेदवाक्यैः ।
च. तथा हृदयग्रन्थितालकमाली विनैवोद्घटते ।
2. लोकैषणामात्रपरेण धावता त्वया धिगर्जितम् ! लोकैषणा, वित्तैषणा पुत्रैषणेति त्रिधा भवत्येषणा लोकस्य ।
१. वोद्घटे–क०
२. धनि–ग०

[2]गते ऋंगणनाथेऽस्य लक्षिते मर्दनोऽब्रवत् ॥
ईश्वरोऽसि पुरः स्थातुं प्रतिवादी न ते क्षमः ॥१३०॥

नानकोऽवदद्दीशेन गुरुर्मे दर्शितस्तया ॥
यथा न कश्चित्पुरतः प्रत्यवस्थातुमीश्वरः ॥१३१॥

त्वत्तोऽपि मतिमांन् कश्चिद् ? गुरुस्ते कश्च ? कीदृशः ? ॥
[1]इति प्रश्नत्रये तस्य पुनरूचेऽस्य नानकः ॥१३२॥

उच्चावचं पुरुषरत्नमियं प्रसूते
सृष्टिः खनिः सुविपुला जगदीश्वरस्य ॥
के के बभूवुरिह? पुण्य कृतो न सन्तः
के के पुनर्न भवितार ? उदारचित्ताः ॥१३३॥

कबीरो रविदासश्च जातौ भागवतौ परम् ॥
बटालमण्डले भार्या हंदालो जडियालजः ॥१३४॥

तरुणोऽरुणः कनकरोमशरीरो
यतिरूपधृन्मम समीपमुपेतः ॥
अगमं तदिङ्गितमवेत्य तटिन्या–
मनयत् स मां स्वभुवनं दयमानः ॥१३५॥

उपदिदेश च दैशिकसत्तमः
परमतत्त्वमसौ श्रुतिसम्मतम् ॥
अपलगाम नमस्तदनुग्रहात्
समुदियाय महो महदद्भुतम् ! ॥१३६॥

---

1 त्रय- प्रश्ना मर्दनस्य ।
(१) अस्ति कश्चिद् गुरुः ?
(२) स कः ?
(३) कीदृशः ?

२. मङ्गर–ख०

दिनत्रयेण त्रैलोक्यं यादृशं यद्विनिर्मितम् ॥
यद् ब्रह्म त्रिगुणातीतं तदप्यवगतं मया ॥१३७॥

प्रचेतसश्चतुर्णां नः कृपा प्राचीनपुण्यजा ॥
यया मे योगवैराग्यज्ञानानामुदयः कृतः ॥१३८॥

तुष्टस्ततो मर्दन आबभाषे
प्रयाहि मेरुं महनीयकीर्ते ! ॥
सोऽब्रूत सिद्धेष्वधुना विचारः
सञ्जायते कश्चिदिहाभ्युपैति[T] ?-१३९॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
भर्तृहर्यादिजयो नामैकादशः प्रस्तावः ॥



T. प्रस्तावेऽस्मिन् यतिवर्यस्य गोरक्ष [illegible] प्रतिपक्ष[illegible] विजय [illegible]
[illegible] । [illegible] ?॥

## द्वादशः प्रस्तावः

वाणी करोतु करुणां मयि यत्प्रसादान्
मूकत्वमेति सदसि प्रतिपादिवर्गः[1] ॥
धाराः स्फुरन्ति वचसां धृतशास्त्रसारात्
हारा इवोज्ज्वलयशः प्रसरा लसन्ति ॥ १ ॥

शिष्यानुवाच गोरक्षः कोऽधुना तं जिगीषति[2] ॥
ततः सङ्करनाथेन गृहीता [1]जयवीटिका ॥ २ ॥

आगत्य स जगादेदमादेशो मुण्डमातृक[3] ? ॥
अवाचि स्मयमानेऽस्मिन् नृपे किं नेति ? चाब्रवीद् ॥ ३ ॥

योगीन्द्रो निजगाद तं तव गुरोर्माता मता मुण्डिता
यस्त्वां मुण्डितवान्मति न च ददौ कर्णौ वृथाऽपाटयद् ॥
हस्तेभिस्तव मुद्रिका श्रवणयोर्दत्ता कुलाद् भ्रंशित-
स्त्वं मूर्खातन ? यो न कोपि विनयो योगेषु लब्धस्त्वया ? ॥४॥

[2]तेनापृच्छ्यत नानकः कथय भोः ? कामः कथं निर्जितः ?
क्रोधोहङ्कृतिलोभमोहममता मायाव्यतीताः कथम् ? ॥

---

1. जयवीटिका = नानक जेतु वीटिका गृहीता तेन ।
2. आस्तिकरीत्या प्रश्नानकरोत्सङ्करः ।
   (१) कामः कथ निर्जितः ? शमदमोदयात् ।
   (२) क्रोधादय कथ व्यतीता ? क्षमासन्तोषविवेकै ।
   (३) केन कालो वञ्चित ? अनन्दरेणात्मना ।
   (४) कथमवधूतो जात ? त्रिगुणात्ययेन ।

१. प्रतिपादि–द०
२. धुनात –क०
३. मुण्डमातृक –क०

कालः केन च वञ्चितस्त्वमधुना ? जातोऽवधूतः कथं ?
हं हो ! पेषणकारिणीसुत[1] ? कुतो ज्ञानेन गर्वायसे ? ॥ ५ ॥

आचर्यो[2] स शमोदमः स्मरजये क्रोधक्षये च क्षमा-
ऽहङ्कारे स्वलघुत्वभावनविधिर्लोभोऽपमर्दे पटुः ॥
सन्तोषो दृढमोहमर्दनकरः शास्त्रैर्विवेकः स्थितो
मन्मायाममताविनाशमकरोदीशो गुरुश्चार्चितः ॥ ६ ॥

आत्मा प्रतीतः खलु वेदवाक्य-
न्नश्वरस्तेन हृतश्च कालः ॥
जातोऽवधूतस्त्रिगुणात्ययेन
पानीयहारीतनयोऽसि मूढ ! ॥ ७ ॥

सङ्गरस्तदनु नास्तिकरीत्या
मोहनाय यमिनो कृतवादम् ॥
ब्रूहि पण्डित ! क ईश्वर ? आत्मा-
[3]भ्रान्तिकल्पित उरीक्रियते रे ? ॥ ८ ॥

दृष्टः केनचिदीश्वरः ? क्वचिदपि ग्रन्थैः शठग्रन्थितै- ?
र्भ्रान्तिं मा व्रज नापि बोधयति तं सृष्टिः पितृभ्यां कृता ॥
स्वेदोत्था इव शाखिनो विपिनजाः केचिद्भवेति स्वतः ?
सर्वे तु प्रभवन्ति नैव विविधो वस्तुस्वभावो यतः ॥ ९ ॥

यः पर्वताद्विपतति क्षतमृत्युदाता
नान्योऽस्य किं तु नियतं[4] पतनक्रियैव ? ॥

---

१. कारिणि-क०
२. आचक्षो-क०
३. भ्रान्त-क०
४. नियते-क०

सा च क्रिया झटिति कालविलम्बतो वा
दत्ते फलं न च तदर्थमुपेय ईशः[1] ॥ १० ॥

तं नानकोऽभूत कृताट्टहासो
विलासमेदं वचसां वितन्वन्[2] ॥
चार्वाकशिष्यः किमु ! सङ्गर ? त्वं
स्पर्शे स चैलं जलमाविशेते ॥ ११ ॥

स्वभावः स्वस्वरूपं वा ततो 'वान्यो[4] विलक्षणः ॥
आद्ये कारणकार्यत्वमेकस्यायाति बाधितम् ॥ १२ ॥

अन्त्येनेके प्रतिव्यक्तिस्वभावश्चेद् विलक्षणः ॥
कार्यानुमेयाः प्रत्यक्षं[5] गतं गौरवमस्ति ते ॥ १३ ॥

एकः स्वभावः सर्वेषां जनकश्चेत्स ईश्वरः ॥
अस्माभिरुच्यते नानासामग्र्याच्चित्रकार्यकृत् ॥ १४ ॥

अचेतनं चेतनसम्प्रयुक्तं
प्रवर्तते स्पन्दनवत् समग्रम्[6] ॥
धर्मोप्यधर्मो यदधिष्ठितोऽस्य
फलप्रदो विद्धि तमीश्वरं त्वम्[7] ॥ १५ ॥

आरूढेषु 'नगं[8] नरेषु बहुषु भ्रश्यन्ति केचित्ततो ?
मृत्युं तेषु च केऽपि यान्ति न परैर्वैचित्र्यमेतद्यतः[9] ॥

---

१. ईशा –क०
२. वितन्यन्–ख०
३. सगर–ख०
४. नान्यो–ख०
५. प्रत्यक्ष्य–क०
६. समग्रु–ख०
७. त्वया–क०
८. नाग–क०
९. वैचित्र्यदत –ख०

धर्माधर्मविदा तदस्य जगतः कर्मानुसारात्फलं
केनेशेन विना प्रदीपत इदं जीवेन वा कर्मणा ?॥ १६ ॥

क्षोभमुपेतः स्वोक्तिनिरासात्
सङ्करनाथस्तं पुनरूचे[1] ॥ १७ ॥

[1]इशोस्तु वा त्वं[2] कथमस्य संसृतौ ?
स्थितोऽसि केनास्य[3] पदं प्रयासि च ? ॥
न वार्यसे केन तदास्पदं ? व्रजं-
स्तदीयतामाशु च केन लम्भितः?॥ १८ ॥

भक्तौ ज्ञाने च वैराग्ये योगे च परिनिष्ठितः ॥
सङ्करेणेति संपृष्टः पुनराचष्ट नानकः ॥ १९ ॥

स्थितोऽहं संसारे स्वकृतफलभोगेष्वविकलो
गुरूणां वात्सल्यादभयपदमीशस्य[4] गमितः ॥
निरुद्धः[5] प्रत्यूहैर्न खलु जगदीशस्य कृपया
सर्वां सङ्गान्मामप्यगणयदसौ स्वे परिकरे ॥ २० ॥

सङ्करो निरगमन्मणिरीलं
नानकः समगमत्समुदीक्ष्य[7] ॥

---

1. क+ख इत्युभयत्र प्रथम द्वितीयं च चरण नास्ति। अतः श्लोकार्थंएवापमनु। पलब्धपरयात् ।

१. ईशो—ख०

२. स्तुता—ख०

३. आस्पदं—क०

४. सोऽत्रस्य—ख०

५. निरुद्धा—ख०

६. व्यगणय—ख०

७. समुदीक्ष्य—क०

मर्दनोऽवदद्हो ! किरणानां
खिन्नता[१] मणिगणस्य महात्मन् ? ॥ २१ ॥

नानकोऽभूत शैलोऽयं महामणिगणोज्ज्वलः ॥
मणीनां किरणैर्धात्रा चित्रकर्म विनिर्मितम् ॥ २२ ॥

सुमेरुं भ्रज योगीन्द्र[२] ! मर्दनेनेति कीर्तितः ॥
उवाच वाचं मधुरां[३] मा त्वरस्वेति नानकः ॥ २३ ॥

अथ मङ्गलनाथमुक्तवान्
गुरुरेतस्य गभीरचेतसम् ॥
भ्रज नानकमानयेस्तया
मम शिष्यो भविता यथा ध्रुवम् ॥ २४ ॥

ततोऽवदन्मङ्गलनाथनामा
परीक्षितो योगिवरैः स धीरः[४] ॥
योगीश्वरः सोऽपि भवानपीत्थं
कथं चिकीर्षस्यमुमङ्ग ! शिष्यम् ॥ २५ ॥

जिज्ञासुरल्पबोधो यः स शिष्यो विदुषो भवेत् ॥
समबोधस्तु सौहार्दमिच्छया कुरुते परम् ॥ २६ ॥

समप्रविष्टेषु परस्परं न तौ
भवन्ति सौरस्यमनोहरा गिरः ॥
गुणाननेकान्श्रवमुत्तरोत्तरं
सतामजर्स्रं वितनोति सङ्गतम् ॥ २७ ॥

---

१. स्विन्नता—क०
२. योगीन्द्रं—क०
३. मधुरं—क०
४. स घोरः—क०

अथ होवाच गोरक्षो गोपीचन्द्रो भवानपि ॥
यथार्थं नानकं वेत्यः परेहङ्कारमोहिताः ॥ २८ ॥

पुच्छनाथस्तु तुष्णीक उदास्ते चर्पटस्त्विह ॥
[1]परेऽकिंचित्कराः सिद्धास्त्वं प्रयाहि यदीच्छसि ॥ २९ ॥

गोरक्षेणेति गदितो जगाम विनयान्वितः ॥
योगी मङ्गलनाथाख्यः सौजन्यगुणभूषितः ॥ ३० ॥

आदेशपूर्वमिदमाह स आगत स्म
योगीश ! नानक ! कृतार्थयता त्वयेह ॥
योगीश्वरानुपगतं तदितः प्रियं नः
खले सुखं सुजनसङ्गतिरङ्ग ! भूयः ॥ ३१ ॥

चरणौ स्प्रष्टुकामस्य तस्य हस्तौ स वारयन् ॥
स्वयं पस्पर्श चरणौ मङ्गलाख्यस्य योगिनः ॥ ३२ ॥

आदेश ओंकार कृतः सुयोगिन् !
नायाहि भो मङ्गलनाथ ! सिद्ध ! ॥
इत्युक्तवान्नानकयोगिराज-
स्न मङ्गलः प्रीतियुतो बभाषे ॥ ३३ ॥

[2]क्रमागतस्तापसमौलिरत्न !
मनोरथं स्वे हृदये निधाय[3] ॥
त्वद्दर्शनायेति तदुत्तरे स
गोरक्षशिष्यः पुनराचचक्षे ॥ ३४ ॥

---

१. परो–क०
२. क्रमागत –क०
३. निधाय–क०

योगीश्वराणां महदेव भाग्यं[1]
ददौ भवान् दर्शनमद्भुतं यत् ॥
आगच्छ गोरक्षगुरोः समीपं
[2]परस्परालापसुखानि सन्तु ॥ ३५ ॥

आगच्छामि शनैरहं व्रज पुरस्त्वं प्रोक्तवान्नानक-
स्तेनोक्तं भवतामिहैव रुचिरं भोज्यं मया नीयते ॥
तृप्तिर्मे तव दर्शनेन सुमते ! भोज्यस्य नैवार्थना
कोऽर्थः साधुसमागमाधिक इति ? प्रोक्तो गतो मङ्गलः ॥ ३६ ॥

जगाद मर्दनो योगी पूर्णो मङ्गलनामकः ॥
रिक्ताः परे समायान्ति [1]वितण्डावादपण्डिताः ॥ ३७ ॥

ऊचे यतिः सत्त्वरजस्तमोभि-
र्भिन्नस्वभावाः पुरुषा भवन्ति ॥
यदीदृशाः[3] मर्दन ! सर्व एव
शून्यैव [4]शक्तिर्जगदीशितुः स्यात् ॥ ३८ ॥

मर्दनोऽब्रूत [5]गोरक्षशिष्योभूत्कथमीदृशः ? ॥
तदेतदबला देवी सबलो बलिरुच्यते ॥ ३९ ॥

ऊचेगुरुर्गुरुरयं खलु शिष्य एष
नाम्नं विभागमधिकृत्य हरेः प्रसादः ॥

---

1. वितण्डा=वादजल्पाभ्यामितरो विवाद ।

१. भाग्यं—क०

२. परस्वरा—ख०

३. यदीदृशा—ग०

४. सृष्टि—घ०

५. गोपक्षे—क०

यः श्रीपतिं विगतकैतव आश्रयेत
तं स्वीकरोति भगवान् सकलान्तरात्मा ॥ ४० ॥

गमनाय नो दयति मर्दन नास्ति
यतिपुङ्गवः स्मितमुखो ? निजगाद ॥
इह शम्भुनाथ उपयाति सगर्व-
स्तमुदीक्ष्य [1]पर्वतममीष्टमुपेहि[2] ॥ ४१ ॥

मङ्गलनाथादपि किं श्रेष्ठो ?
मर्दन ऊचे नानक आख्यत् ॥
मङ्गलनाथः सत्पुरुषोऽसौ
शम्भुरहंयुः सौम्य ? यथाऽन्ये ॥ ४२ ॥

मुद्रामश्रि कुब्जयष्टिं दधानः
सिद्धेर्लाभान्मानगर्वः प्रधानः ॥
जेष्यामीति प्रौढबुद्ध्या सनाथ-
स्तत्रायातस्तापसः शम्भुनाथः ॥ ४३ ॥

उक्त्वादेशमसावुवाच कलयेर्मुद्रामिमां कुब्जिका-
मश्रि बालक ? गच्छ विक्षतमदो गोरक्षशिष्यो भव ॥
उत्तानं हृदयाम्बुजं कुरु हठायोगान्निरुद्धानिलो[4]
मार्गे शून्यपुरस्य पश्य परमं तेजोऽद्भुतं प्राप्नुहि ॥ ४४ ॥

सत्यसन्तोषसुभगोऽगम्यं निधिमवाप्नुहि ॥
एषोऽर्थस्तव गोरक्षं भजस्व[5] परमार्थतः ॥ ४५ ॥

---

१. आश्रयेत–ख॰
२. पर्वते–ख॰
३. मयोष्ट–ख॰
४. निरुद्धया–ख॰
५. भजस्वे–ख॰

अक्षय्यं सुकृतं ददाति विहितं कर्मैव संसेवितं
तद् घोरान्नरकाश्रयत्यपि सदा रागात्कृतं निन्दितम् ॥
ना मार्गेण फलं ददाति तदिदं श्रेष्ठं तु मार्गं श्रय-
द्वेवैः किं श्रुतिमात्रसौख्यजनकैर्वेदान्तवाक्यैश्च किम्? ॥ ४६ ॥

तं नानकोपि निजगाद विमुद्र एव
त्रैगुण्यतो बहिरहं परितो भ्रमामि ॥
ते मुद्रितास्त्रिगुणपाशविगुम्फिता[१] ये
[२]कुब्जाग्निधारणपराः पशवो भ्रमन्तु ॥ ४७ ॥

दृष्ट्वा देवं मुच्यते सर्वपाशै-
स्तस्मात् पाशा मे समेऽपि प्रमुक्ताः ॥
प्रायं शून्यैर्मायिकैर्नामरूपैः
पूर्णानन्द बोधरूपं पुरं तद् ॥ ४८ ॥

यः सत्यसन्तोषविधानलभ्यो
महात्मना यो निधिरप्रमेयः ॥
सन्दर्शितो मे गुरुणा परात्मा
गोरक्षमुख्या हि यतो यतन्ते ॥ ४९ ॥

गोरक्षसदृशाः शिष्यास्तिष्ठन्ति निधयो नव ॥
द्वारि यस्य प्रभावेण स गुरुर्मे विलक्षणः ॥ ५० ॥

प्राणायामैश्च योगैश्च न मे [१]किञ्चित्प्रयोजनम् ॥
निधानधिगते कस्मै ? निध्यञ्जनविधिश्रमः ॥ ५१ ॥

अज्ञानादेव संसारः कर्माप्यज्ञानतः कृतम् ॥
[३]बन्धकं तद्द्वयोर्नाशे ज्ञानादेव न चान्यथा ॥ ५२ ॥

---

1. हठयोगे मुद्रिका, मुद्रा, कुब्जयष्टि, अग्निश्च धार्यन्ते । तान्निन्दति गुरुर्नानकः ।
१. घुम्फित–क०
२. विचि-क०
३. बंधक–क०

न कर्मणा न प्रजयेति वेद-
स्त्यागात्समोघादमृतत्वमूचे ॥
फलं न नित्यं किल कर्मणोऽस्ति
दृष्टस्य चानुश्रविकस्य चापि ॥ ५३ ॥

क्षयातिशायित्वविशुद्धमात्रा-
स्त्वर्गे मुनिः पञ्चशिरोऽप्युवाच ॥
वेदा न ते नोपनिषत्प्रमाणं
[1]प्राभाकराणामनुगोऽसि [1]शम्भो ! ॥ ५४ ॥

वेदोऽभिधत्ते त्वतिकर्मदेवान्
कथा पुराणेषु तथा सुराणाम् ॥
प्रसादकोपौ नृषु देवतानां
दृष्टौ नमस्ते सकलापलापिन् ! ॥ ५५ ॥

शब्दाः कार्यपराः प्रमाणमिति यत्प्राभाकरैरुच्यते
प्रामाण्यं न वदन्त्यहो उपनिषद्भागस्य पश्चाप्यमी ॥
तन्नोन्दं तव देवदत्ततनयो जातस्तवाग्निर्गृहे
लग्नो वाक्यमिदं यदस्य कुरुते हर्षं च शोकं परम् ॥ ५६ ॥

गोरक्षोऽपि न ते निमज्जति हृदि ध्वस्ते [3]महाहङ्कृते-
स्त्व जातोऽसि कुतोऽतिगर्वगहनः सिद्धानहो ! निन्दसि ॥
माहात्म्यं कथमीदृशं ? नु मनिनं तेहं वहन्नासरा-
नाविष्टस्त्वमयोन्मदिष्णुरसि वा क्रूराणि यद्भाषसे ॥ ५७ ॥

1. प्रभाकरः पूर्वमीमांसामनुसृत्य अकतान्ताय प्रायनम । तस्य कृते आनस्य मास्ति कश्चिदपि महिमा ।
2. उन्मदिष्णु- विक्षिप्त । अत्रशम्भो कूरवचन निर्दिशमानरः ।

१. शम्भो—ख०
२. मत्तो—क०
३. महाहंकृते—ख०

एवं शम्भुरमाषतैनमवदत्तं सोऽपि योगीश्वरो
गोरक्षं कलयामि जीवमबुधान् सिद्धान्न मन्यामहे ॥
यस्माज्जातमिदं ततोऽस्मि स ममाविष्टो हृदि प्रेरको
मालिन्यं वपुषामपैतु हि कथं ?मांसास्थिसंस्थानिनाम् ॥ ५८ ॥

युग्मम्

निन्दामि साधून्न कदापि बन्धून्
'पाखण्डिनः किन्तु तृणाय मन्ये ॥
माहात्म्यमीशेन ममार्तिदिष्टं
भवादृशैर्मत्सरिभिर्न नाश्यम्[1] ॥ ५९ ॥

ततो गतः 'शम्भुरपृच्छदेनं
गोरक्षनाथः कथय प्रवृत्तिम् ॥
उन्मादवादं वदतीत्यवक्तः स
मङ्गलं पृच्छति स स्म भूयः ॥ ६० ॥

तेनोक्तं न निजापकर्षकथनं श्रेयस्तथाप्युत्तमा
मिथ्या नैव वदन्ति पश्यसि च तं यादृक् तथा निश्चिनु ॥
शम्भुः क्रुद्ध उवाच वक्षि बहुधा पक्षेऽस्य नूनं स्थित-
स्तच्छिष्यो भव मङ्गलोऽप्यभिदधौ को नाम दोषोऽत्र भोः ? ॥६१॥

न हीयते क्षुद्रजनैर्विनिन्दितो
महाजनो निन्दति नैव कञ्चन[3] ? ॥
करोति निन्दां स्वयशो विनाशिनीं
सतां खलो वालिसता विलासतः ॥ ६२ ॥

---

1. मानवस्य गर्वोक्ति ।
१. पाखण्डि–क०
२. शम्भु–क०
३. कंचन–क०

निन्द्यं न निन्दन्ति महानुभावा
अनिन्दितं निन्दति को न साधुः?॥
न योगिनां निन्दनमस्ति धर्म्यं
त्वं पृच्छ गोरक्षगुरुं प्रतीत्यै ॥ ६३ ॥

शम्भुः प्रपच्छ गोरक्षं मङ्गलो वक्ति किं गुरो ? ॥
तूष्णीमेव स्थिते तस्मिन् गोपीचन्द्रोऽभ्यधादिदम् ॥ ६४ ॥

स्ववर्ग एवं कलहः किमर्थं ?
यथा तथा वास्तु सतं न कोऽर्थः ॥
नास्मभ्यमेवाखिलसिद्धिपट्टो
विलिख्य दत्तो जगदीश्वरेण ॥ ६५ ॥

दिग्बन्धनं कर्तुमशक्यमेत-
न्मा भूत्परो योगविरागभूमिः ॥
यस्य प्रसन्नो भगवान्प्रयत्नैः
श्रयन्ति तं सिद्धसमाधियोगाः ॥ ६६ ॥

पुनर्गोपीचन्द्र ऊचे 'मङ्गलेनाभिनन्दितः'[1] ॥
विवादस्तत्वबोधाय न विरोधाय योगिनाम् ॥ ६७ ॥

गोपीचन्द्रे मङ्गले च यथार्थमिति वादिनि ॥
व्रीडारोपपरीतात्मा शम्भुनाथो गतस्ततः ॥ ६८ ॥

विज्ञप्तो मर्दनेनाथ गतो मणिमयाद्रिरेः ॥
उड्डीय नानको मेरुं परिक्रामति यं रविः ॥ ६९ ॥

गोरक्षमुख्याश्च तत्र नाथा-
न्सिद्धांश्चतुःसिन्धुरसंख्यकांश्च ॥

---

१. मङ्गल—क०
२. नन्दितः—क०

यतीनपश्याम च पट्प्रवीणान्
मिथः कथासु प्रवणानुपेत्य ॥ ७० ॥

नानकस्तानुवाचेदं निसर्गेण प्रियंवदः[1] ॥
नाथाः सिद्धाश्च यतयः आदेशः सर्वतापसाः ॥ ७१ ॥

आयाहि बाल ! सफलीकुरु जन्म तूर्ण-
मादेश आदिपुरुषस्य विशुद्धबुद्धेः ॥
अस्मै प्रदेहि चपकं ननु तीर्थपूर्ण-
गोरक्षनाथ इति वाचमुवाच तुष्टः ॥ ७२ ॥

ऋङ्गरः शीधु चपक[1] पिबेत्युक्त्वा समार्पयत्[2] ॥
किमिदं ? कथमुत्पन्नमिति ? तं स्माह नानकः ॥ ७३ ॥

ततो ऋङ्गरनाथेन सनाथेनान्ययोगिभिः ॥
गोरक्षस्याशयं [3]बुध्वा गिर एता उदीरिताः ॥ ७४ ॥

इदममृतमतीव तुष्टिहेतुः
परमपवित्रमघौघविघ्नहारि !
हरति सपदि दैन्यदुःख-
[4]चिन्तालपमधिकं मनसः करोति पीतम् ॥ ७५ ॥

[2]द्राक्षादिसन्धाय[5] निधाय यन्त्रे-
विधाय तापं कलयेद्[6] मपकम् ॥

---

1. चपच=द्राक्षारस-, द्राक्षासवो वा ऋङ्गरनाथः श्लो० ७५ तः ८१ यावत् चपक- वर्णयति । "स" इत्यत्र चषक इति पाठ- ।
2. चपकनिर्माणविधि- ।
१. प्रियम्वद —स०
२. त्युक्त्वा—च०
३. वध्वा—स०
४. चिन्ता—क०
५. सन्धाय—क०
६. कलयेथ—क०

स एव सद्भिर्विधिना निपीतः—
सिद्धीरनेका निदधाति पाणौ ॥ ७६ ॥
यत्रास्ति भोगो नहि तत्र मोक्षः
यत्रास्तिमोक्षो नहि तत्र भोगः ॥
[१]श्रीसुन्दरीतर्पणतत्पराणां
भोगश्च मोक्षश्च करस्थ एव ॥ ७७ ॥

प्रवृत्ते [1]भैरवीचक्रे सर्वे वर्णाः द्विजातयः ॥
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ॥ ७८ ॥

न ये पिबन्ति प्रतनैर्मुनीन्द्रै—
रभ्यर्हितां मोहवशाः पुमान्सः ॥
सुरां महाभैरवदेवशेषां
तेषां विमुक्तिः खलु दुर्लभैव ॥ ७९ ॥

सौत्रामण्यां[2] कुलाचारे सुरापानं न दुष्यति ॥
इति तत्त्वविदः सन्तो निन्दकेभ्यो न बिभ्यति ॥ ८० ॥

पिबति यो रसमेतमपेतमी—
विपटलीकृतबोधविलोचनः ॥
विधिनिषेधमयादिह पाशवः—
स यदिहेति निमेति न कालतः ॥ ८१ ॥

विषयाभिपलुब्धानां गोष्ठीरगणयन् गुरुः ॥
उवाच नानकस्तत्र परमात्मसुखोर्म्मितः ॥ ८२ ॥

---

1. भैरवीचक्रे स एव प्रवृत्तो भवति अथवा भैरवीचक्र तदैव प्रवृत्तं भवति यदा कश्चिद् भैरवदेवशेषां सुरां पिबति ।
2. सौत्रामणी = यज्ञो वेदविहितः ॥
१. "श्री सुन्दरी सेवनतत्पराणां" इत्यभियुक्तोक्तः पाठ. ।

रागद्वेषकषायविषयमधूकं सुखं गुडं क्षिप्त्वा ॥
भाण्डे विचारनामनि वैराग्याग्निं प्रदीप्य कष्टेन ॥ ८३ ॥

मानसनलिकायन्त्रे निश्चयनाम्ना सुशौण्डिकेनालम् ॥
प्रेम्णा परमस्य पुंसो मधुना पीतेन सह सद्भिः ॥ ८४ ॥

ध्यानावदंशसेवी मत्तोऽहं तन्मयं जगत् पश्यन् ॥
गलिताऽहं-मम भावः पामरपेयं न बहु मन्ये ॥ ८५ ॥

त्रिभिर्विशेषकम्

स्मृतिं द्वादशादिव्रतं बोधयन्तीं
विहातुं महाज्ञानिनो यूयमास्त ॥
अधिक्षेपवाक्ये परेण प्रयुक्ते
ज्वलन्तो भवन्तो हि किं ज्ञानिनो न ? ॥ ८६ ॥

उत्पादयन् महामोहं पीतं कतिपयैः क्षणैः ॥
ज्ञानस्य साधनं मद्यमद्यश्रुतिपथं गतम् ॥ ८७ ॥

तोपं स्थिते सङ्करनाथनाम्नि सिद्धाःस्वबुद्धेरनुरूपमूचुः ॥
विख्यातकीर्तिर्यतियोगिमुख्यस्तत्रास्यदेवं किल पर्वताख्यः ॥८८॥

पराङ्मुखः परललनाधनादितो–
न यौवनद्रविणमदेन यो हतः ॥
समाहितः प्रविदितनादविन्दुकः
प्रपद्यते सपदमरूपरेखकम् ॥ ८९ ॥

ईशो वदन्नपतयो[१] नियमैः सशौचैः
चेतो निगृह्य विहितैर्गृहमेधिनोऽपि ॥

---

१. जपति–ख०

सिद्धं व्रजन्ति परमां क्मिु वीतरागाः
भिक्षाभुजः सुरसरिज्जलशुद्धिचित्ताः ॥ ९० ॥

गोरक्षोऽभ्यधित-शरीर-शोषणं-
यो वैराग्याद्धिपयरसास्पृहःकरोति ॥
प्रारब्धक्षपणकृतक्षणोऽवधूतः
पूतः स व्रजति भरं भरं विहाय ॥ ९१ ॥

योगशोधितशरीरमनोभिः
कामकोपरहितैर्यमिमुख्यैः ॥
ब्रह्मलभ्यमितरैः सुदुरापं-
चर्पटो विकपटो वदति स्म ॥ ९२ ॥

उदासीनो लोके नियतमथ ऊर्ध्वं परिमृशन्
पुरेशानं ग्रन्थिं शशितपनयोर्योगकलया ॥
सुषुम्नायां विभ्रन् यजति न तनु मृत्युविजयी
यतिर्गोपीचन्द्रोऽवददिति वितण्डोऽनुभवतः ॥ ९३ ॥

वैराग्ये विषयेषु सर्वसमये विभ्रत्समीरक्रियो-
र्भीते हृत्कमले विभाव्य विमले ज्योतिः परं सन्ततम् ।
तस्मिन्मायिकविश्ववस्तुनिधुरे चित्तं स्थिरं स्तम्भवत्-
कुर्याद् भर्तृहरिर्मुमुक्षुषु परां शिक्षामिमामभ्यधात् ॥ ९४ ॥

किं मृत्योः परिहारतः ? किमु चिरं सञ्जीवनोपायतः ?
किं छायातपसेवनाय ? तपनात्किं कर्णमिन्द्रादिभिः ?॥
संसारी न नचात्मधृत उदितः संशुद्धबुद्धो क्वचिन्-
युद्धः कायमनःक्रियाभिरसि ? नेत्याग्यद् गुरुर्नानकः ॥ ९५ ॥

---

१. जल-ब०

कामक्रोधमदाभिमानममतामूढो हृषीकैर्जितः-
सिद्धिं विन्दति को नु दुर्लभतरां लुब्धो भवे भूयसि ? ॥
तस्मात्तत्प्रविहाय निर्जितमना भित्त्वा दृढां वासनां
कश्चित्तत्त्वमुपैति चर्पट इति प्रोवाच वाचांनिधिः ॥ ९६ ॥

कामक्रोधमदाभिमानममताहङ्कारितानात्यजं
नान्यस्यापनयेन दण्डमयते धन्यो नृपे धार्मिके ॥
भुञ्जानो विषयान्नियत्युपनतान् वात्सल्यतः सद्गुरो-
स्तत्त्वं प्राप मपेतमोह इति तं श्रीनानकोऽभाषत ॥ ९७ ॥

गृहीत्वा शिवं शक्तिमद् वा विमुञ्चन्
मनोनिग्रहात्क्रोधकामादिजेता ॥
जनः पारमायाति संसारसिन्धोः-
पटुश्चर्पटो वाचमेतामुवाच ॥ ९८ ॥

शिवोमेऽस्वरूपं ग्रहस्तस्य कीदृङ्-
न शक्तेः परित्यागतः कश्चिदर्थः ? ॥
मनः किन्तु कुर्याद् भवाम्भोधिपारे ?
स्थितोस्मीत्यवोचद् गुरुर्नानकस्तम् ॥ ९९ ॥

नित्यं जानाम्येकमोङ्कारवाच्यं-
न स्वप्नेऽपि द्वैतमातर्कयामि ॥
पञ्चाग्रे मे पञ्चविंशत्युपेता-
लीलामात्राद् विश्वनाभं सृजन्ति ॥१००॥

रसनां त्रितयं चतुष्टयं न-
ममोदाहरति ध्रुवं यते ? ॥

---

1. चर्पटनानकसम्वाद. श्लो० ७४ तः १०२ यावत् यत्र नानको महामहिमशालिनो महिमानं तं वर्णयति ।

नवसप्तदशापिसंयतान्
नियतं ज्ञानगुणेन विद्धि मे ॥१०१॥

चतुर्दशैकविंशतिमया पुरोपवाहितः ॥
न सन्ति खेशयश्च मे तथैव पञ्चसम्मतिः ॥१०२॥

घुघ्घूनाथं वीक्ष्य तूष्णीकमेव–
स्मेरास्योमुं नानको व्याजहार ॥
त्वं किं तूष्णीं तिष्ठसि प्रौढयोगिन् ?
वाचश्चित्रा ब्रूहि मित्रार्थरम्याः ॥१०३॥

पृष्टो वारिपतिः सुतेन भृगुणा ब्रह्मावदन्मौनतः
शब्दानां हि [1]चतुष्टयी प्रसृतिरित्येतच्च निर्धर्मकम् ॥
अप्राप्यैव निवर्तत्तैव रमते वाचा न संग्रहतो ॥
घुघ्घूनाथ इदं जगाद मुदितस्तेनाभवन्नानकः ॥१०४॥

चरणेऽपतत्तमथ नानकं यतिः स उवाच
स उवाच वेत्सि किमुभेदमुत्तम ? ॥
तमुवाच नानकगुरुर्मिदावयोः
कथमस्तु वस्तुगतभेदमस्ति चेत् ॥१०५॥

घुघ्घूनाथो नानकोऽन्योन्यनम्रौ–
चम्पानाथं जोपमासीनमूचे ॥
योगीन्द्रस्त्वं किंनु तूष्णीं स्थितोऽसि ?
वाचो ब्रूयास्त्वन्मतस्यानुरूपाः ॥१०६॥

चम्पानाथोऽब्रूत वाचामभूमि–
र्मन्तव्यो यो वस्तुना देशकालैः ॥

---

1. चतुष्टयीशब्दानां प्रवृत्तिरिति ( महाभाष्य )।

आत्मा ज्ञेयश्चेतसा शोधितेन-
तद्वै मुख्ये किं प्रलापैरनल्पैः ? ॥१०७॥

धन्योऽसि धन्या जननी धन्यो गुरुस्तवोत्तमः
धन्यस्तवोपदेशश्चेत्यब्रवीन्नानकस्ततः ॥१०८॥

चम्बानाथो मङ्गलो घुघ्घुनाथो
पीनानाथो नानकं श्लाघमानाः ॥
प्रापुः प्रीतिं भूयसीं साधुसङ्गे
सम्वादिन्यो मोदयन्ते गिरो हि ॥१०९॥

कनकसिन्धुरिति प्रथितो यतिः
सुरतिसिंह इति प्रथिविं गतः ॥
निरतिसिंह यतस्त्वदमर्पणात्-
कुथमधुर्महतीमबुधन्ततः ॥११०॥

गोपीचन्द्रो मङ्गलश्चाभ्यधाता-
मेते कोऽयं ? किं वृथैव व्रजन्ति ? ॥
सिद्धाः शृङ्गं हारिणं चर्म चाग्निं
मौञ्जीं मालामुत्क्षिपन्ति स्म रोषात् ॥१११॥

वैपुङ्गीनेप्वाहतुःस्म स्मितास्यौ
गर्वाक्रान्तौ भृङ्गरः सङ्गरश्च ॥
कुण्ठः कस्मान्नानका भूरिदानीं
योगीन्द्राणां शक्तिमालोक्य चित्राम् ॥११२॥

तत्र स्मेरो नानकः पादुकां स्वा-
मूचे व्योमारोह रे ? पादुके मे ॥

---

1. हठयोगिनां वस्तु माकाश उड्डीयमानं दृष्ट्वा नानकोपि स्वां पादुकामाकाशे प्रेषयामास ।
तद् दृष्ट्वा गोरक्ष पुनराह प्रसन्नान् नानकम् ।

सातृङ्गीना योगिनामारुरोह-
चर्मादीनां मूर्ध्निऽघोघो गतानाम् ॥११३॥

गोरक्षं मङ्गलोऽब्रूत किं दृष्टो नानकस्त्वया ? ॥
नानकोऽसौ मया पृष्ट इत्युक्त्वा सोऽब्रवीत्पुनः ॥११४॥

[1]कियदङ्गुलिः परिमाणं व्योम ? कियत्तारकायुक्तम् ? ॥
कति पत्राणि महीरुहि ? कति वर्षति वासवो धाराः ? ॥११५॥

मेरुः किं परिमाणो ? वद गुरुता किं कृता जगति ? ॥
कथय कलौ कति देवाः ? कतिकृत्वो नानकायासीः ? ॥११६॥

इति गोरक्षनाथेन पृष्टो नानकतापसः ॥
क्रमादुशनसा[2] पृष्टो देवाचार्य इवावदत् ॥११७॥

चतुरङ्गुलपरिमाणं व्योमयुतं तारकाभ्यां च ॥
द्वे पत्रे च महीरुहि वर्षति नव वासवो धाराः ॥११८॥

मेरुगिरिश्च सपादप्रस्थमितौ गौरवं जगति ॥
देवकृतं कृतयुद्धैः कलियुग एकः स्मृतो देवः ॥११९॥

सकृदप्यहमागच्छं गोरक्षं नानकोऽवादीत् ॥
इति वाणीमय कंथरिनाथः सिद्धस्तमभाषीत् ॥१२०॥

---

1. शुक्र–बृहस्पतिसम्वाद इव गोरक्षनानकसम्वादः ।
2. प्रश्नाः ? उत्तराणि कियदङ्गुलपरिमाणं व्योम ? चतुरङ्गुलि ।
कियत्तारकायुक्तं ? तारकाभ्याम् ।
कति पत्राणि महीरुहि ? द्वे पत्रे ।
वासव कतिधारा वर्षति ? नव ।
मेरुः किं परिमाणं ? सपादप्रस्थम् ।
जगति गुरुता किं कृता ? कृतो गौरवम् ।
कलौ कति देवाः ? एक ।
कतिकृत्वो नानकायासीः ? सकृत् ।

को [1]गुरुः कश्च शिष्योऽस्ति ? किं मूलं कं च मेलकम् ? ॥
एकाकी किं गृहीत्वा स्यात्कायोऽयं किंमयो मतः ? ॥१२१॥
तस्मिन् शक्तिश्च कस्यास्ति ? वृत्तिः केनेति कथ्यताम् ॥
को नाऽमरपुरं याति विचार्य वद नानक ॥१२२॥
शब्दो गुरुर्धृतिः शिष्यो मनोमूलं च मेलकः ॥
पवनो ब्रह्मतत्त्वेन ज्ञातेनैकाकितां व्रजेत् ॥१२३॥
पञ्चभूतमयः कायः शक्तिस्तत्रेश्वरी मता ॥
सत्यस्य सत्तपाश्वृत्तिर्वेद शब्देन केवलम् ॥१२४॥

---

1. प्रश्नाः ? उत्तराणि
को गुरुः ? शब्दः ।
कः शिष्यः ? धृतिः ।
किं मूलम् ? मनः ।
कः मेलकः ? पवनः ।
एकाकी किं गृहीत्वा स्यात् ? ब्रह्मतत्त्वम् ।
कायः किं मयः ? पञ्चभूतमयः ।
तस्मिन् कस्य शक्तिः ? ईश्वरी ।
वृत्तिः केन ? वेदशब्देन ।
का नाडिः ? नवशतानि ।
कति सन्धयः ? षोडशशतीः ।
क वपुषि शोषकः ? पवनः ।
वसति कुत्र मनः ? हृदि ।
" " पवनः ? अधिनाभि ।
कुतोऽध्वनिरुदेति ? प्राणेभ्यः ।
कः पञ्चगुरुः ? मनः ।
कः पचति ? अग्नि ।
किं दिशागमनम् ? उत्तरेणागमनं दक्षिणे न गमनम् ।
आदेशः क्रियते कस्मै ? गुणाय ।
कस्योपदेशतः ? तस्य ।
मनसः कः संस्कारः ? ज्ञानम् ।
ज्ञानस्य किं लक्षणम् ? सन्तोषः ।

सार्वभौमः प्रधानः कः ? को नृपो ? ग्रामणीश्च कः ? ॥
नानकोऽत्र नगरी तनुरात्मात्वधीश्वरः ॥१२५॥

इन्द्रियाणि प्रधानाः स्युर्मना राजा समीरणः ॥
ग्रामणीरिति तेनोक्ते कंथडिः पुनरभ्यधात् ॥१२६॥

वसति कुत्र मनः पवनः स च ?
ध्वनिरुदेति कुतो ? वद केन वा ? ॥
भवति पञ्चगुरुः क इहोच्यतां ?
पचति कोऽशितपीतमनारतम् ? ॥१२७॥

हृदि मनः पवनस्त्वधिनाभि भो ?
वसति पञ्चगुरुर्मन एव च ॥
ध्वनिकरः किल प्राणसमीरणः
पचति वह्निरिति प्रजगौ यतिः ॥१२८॥

कंथडिः पुनरुवाच यतीन्द्र
किं दिशागमनमागमनं च ? ॥
नाड्यः कति च सन्धिसमेताः ?
शोषणो वपुषि कः कथयस्व ? ॥१२९॥

कोमलो वल्लभस्त्र च कीदृङ् ?
नानकस्त्वथ तदुत्तरमूचे ॥
उत्तरेण कल्याणमित्र
दक्षिणेन गमनं च मनुष्य ॥१३०॥

कीर्तिता नवशतानि धमन्यः
सन्धि षोडशशतीमवगच्छ ॥
शोषकः पवन एव शरीरे
मर्ममो मल उदाहियते च ॥१३१॥

द्वारमस्य कथयन्त्यविचित्य
कंथडे ? शृणु पुनः स जगाद ॥
अस्ति किं परिचयेन ? समाधि-
र्याति कस्य नियमेन न विन्दुः ? ॥१३२॥

ब्रह्म केन च भवत्यपरोक्षं ?
याति केन विलयं किल माया ? ॥
नानकोऽथ निजगाद गरीया-
नीश्वर प्रणयतोऽस्ति समाधिः ॥१३३॥

याति चित्तनियमेन न विन्दु-
र्ब्रह्मबोधत उदेत्यपरोक्षम् ॥
सद्गुरोर्विलयमेति च माया
कन्थडिः पुनरपृच्छदथैनम् ॥१३४॥

¹आदेशः क्रियते कस्मै ? स च कस्योपदेशतः ? ॥
मनसः कोऽस्ति संस्कारः ? किं नु ज्ञानस्य लक्षणम् ? ॥१३५॥

मोक्षस्य कथितं द्वारं किं नु ? नानक ? कीर्तय ॥
नानकोऽवददादेशो मुखे तस्योपदेशतः ॥१३६॥

ज्ञानं चित्तस्य संस्कारः सन्तोषो ज्ञानलक्षणम् ॥
मोक्षस्य कथितं द्वारं सद्गुरुर्नेतरो यते ? ॥१३७॥

---

1. प्रश्नाः ? उत्तराणि
   १. आदेशः क्रियते कुत्र ? मुखे ।
   २. आदेशः कस्योपदेशात् ? तस्य सर्वमयस्य ।
   ३. मनसः कः संस्कारः ? ज्ञानम् ।
   ४. किं ज्ञानस्य लक्षणम् ? सन्तोषः ।
   ५. मोक्षस्य किं द्वारम् ? सद्गुरुः ।

उर्मनाथो धर्मनाथ आगतावथ कोपतः ॥
उर्मनाथोऽब्रवीदग्नौ धक्ष्यामि त्वां निरर्गल ! ॥१३८॥

गम्भीरेऽम्भसि मज्जयामि लवशः कृन्तामि गात्राणि ते
भूमौ त्वां निखनामि मूढ ! विदधे तूर्णं चपेटान्मृतिम् ॥
आकाशे लयमातनोमि तव रे ! याम्याः शतं यातना
यच्छाम्यक्षमया करोमि कुमते ! साधो ! मदुक्तं न चेत् ॥१३९॥

त्वां दुर्विनीतसिद्धानां पातयामि पदे पदे ॥
गोरक्षदीक्षां नादत्से तदा पश्यसि मे बलम् ॥१४०॥

उक्तं नानकयोगिना जडमते ! का शक्तिका ते ! यया
दक्षः शक्तिमवेहि मे गुरुकृतां वह्नौ चिरं तिष्ठतः ॥
प्रालेयं पिवतो हिमाचलसमं लोहाचलद् गच्छतो
भूमिं च क्षिपतो नभस्तुलपवत्तूलं तुलायां यथा ॥१४१॥

वर्द्धेय विन्ध्यादधिकं सरोषा-
दगस्त्यवच्छोषयितास्मि सिन्धुम् ॥
नाथेन सिद्धत्वसि मूढनिद्रा-
नमूचयेयं शृणमानिवात्र ॥१४२॥

कुर्यां स्वयङ्कारयिता परांश्च
पराक्रमं च क्रमते कुयोगिन् ! ॥
भूभङ्गतो भस्मकरोस्मि तूर्णं
भवादृशां कार्मणकारिणां च ॥१४३॥

सर्वापि शक्तिः खलु सत्यनाम्न
ईशस्य गर्वो मम नात्र कोऽपि ॥
कुम्भेन तोयं सरसः कृपाऽस्य
परत्र सामर्थ्यमभिव्यनक्ति ॥१४४॥

अयोमिनाथो यतिनं जगाद
भक्ताधिकारिन्! शृणु नानक! त्वम् ॥
विना गुरोस्ते किमु वस्तुबोधः!
सिद्धिश्च तुभ्यं ननु केन दत्ता!॥१४५॥

किं नीयते जन्म मुधैव! मुग्ध!
गोरक्षपादौ प्रणम स्वभक्त्या ॥
दीक्षां तदीयामधिगम्य रम्या
ख्यातस्त्रिलोक्यां भव भव्यतेजाः ॥१४६॥

तमन्तर्वीत्रानकयोगिराजो
भक्ताधिकारी भगवान्न चान्यः ॥
लक्षाणि वेदाद्यमितानि जन्तून्
यो जीवयत्यन्नजलादिदानाद् ॥१४७॥

गुरुं गरीयांसमसौ दिदेश
वात्सल्यतस्तस्य च वस्तुलाभः ॥
सत्सिद्धयः पादतलं श्रयन्ति
क्लेशाः परित्यज्य गता अशेषाः ॥१४८॥

ऊँकारवाच्यो न किलावबुद्धो
ग्राम्यस्त्वदीयो गुरुणा समेतः ॥
लोकोक्तिरेषा न मृषा प्रसिद्धाऽ-
सिद्धः स्वयं साधयते परान् हि ॥१४९॥

निरर्थकं जन्म भवादृशानां
पाखण्डिनां मोहपरिप्लुतानाम् ॥
अहं मदीयाश्च समे कृतार्था
गुरोः प्रसादात्समवाप्य सिद्धिम् ॥१५०॥

घर्गरोऽथ जगाद कः[1] पिता ?
जननी का ? गुरुरस्ति कश्च ते ? ॥
निजदेशमुदीरयस्व रे ?
कतमं मार्गमुपेयिवानसि ? ॥ ५१॥

योगी रोगी वासि भोगी वियोगी
संयोगी वा जङ्गमो वाऽवधूतः ॥
हर्षोऽमर्षः कुत्र ते ? वास्ति तर्षः
क्लेशध्वान्तं याति कस्य प्रकाशात् ? ॥१५२॥

गिरे निशम्य घर्गरी-
गरीयसां गुरुस्तदा ॥
उवाच नानको यमी
यमीशभागमूचिरे ॥१५३॥

सन्तोषो जनकः क्षमा च जननी सत्यं गुरुः काश्यपी
सर्वोऽप्य विषयो निराग विषयो मार्गो न मे कश्चन ? ॥
नात्यन्तं मयि वास्तवो विगणितो योगी वियोगोऽथवा
क्लेशध्वान्तहतिर्भवेन्न नितरामात्मप्रकाशादृते ॥१५४॥

गोरक्षस्तमथाननीत्यमहो ! योगं विना ते मनो
वश्यं वश्यतया विनाऽप्य च कथं जातः प्रबोधोदयः[1] ? ॥१५५॥

---

1. प्रश्ना ? उत्तराणि ।
१ क पिता ? सन्तोष ।
२. का जननी ? क्षमा ।
३. को गुरु ? सत्यम् ।
४ कस्तव देशः ? [illegible] ।
५. कं मार्गमभिगतोऽसि ? न कश्चित् ।
६ [illegible]
७. [illegible]

१. पुष्पनाथ—क०

मोक्षो बोधमृते कथं ? परिगतो जातः कृतार्थः कथं ?
वाग्मिर्मेदिकमस्ति तृप्यसि परं बालो यथा नानक ? ॥१५६॥

कोन्यः कलौ कथय योगकलोपदेष्टा
मामेतरो नयति सिद्धिमुपेत्य शिष्यान् ।
तन्मे मत प्रविश धारय कुण्डलादिं
योगीश्वरो विहर विश्वतले स्वतन्त्रः ॥१५७॥

स्रोतः शुद्धिं कर्मभिः षड्भिरादौ
कृत्वाभ्यस्ते कुम्भके चित्तजित्या ॥
वायौ वश्ये चामनस्कं प्रपन्नो
मुक्तो योगी ह्यन्यनाख्यातिभागी ॥१५८॥

अपानमाकुञ्च्य निरुध्य यत्ना-
त्प्राणं रसज्ञामपि लम्बिकायाः ॥
उपर्युपानीय निरन्तरं योऽ-
भ्यस्येत्स शीघ्रं समुपेति सिद्धिम् ॥१५९॥

आपादादेर्ब्रह्मरन्ध्रावधीह
देहे भूतान्याहुरङ्गस्थितानि ॥
तान्यभ्यासाद्योगिनो जेतुरेत-
ल्लक्ष्मस्पृष्टं दृश्यते सिद्धिशंसि ॥१६०॥

आरोग्यं लघुता तनोः कफमलाल्पत्वं स्वरः सौरभा
क्षुत्-तृण्-मर्पणमुग्रकण्टकपयः पङ्केष्वसङ्गस्तथा ॥
वह्न्याम्यवहारितोष्णसहता दूराच्छ्रुतिर्दर्शनं
मेकस्येव गतिर्भुवि क्षितिरुहे कैश्चीनभक्षारिता ॥१६१॥

अष्टैश्वर्यविचित्रशक्त्यधिगमः कामं त्रिकालज्ञता
भूम्यादेर्विजये क्रमेण कथिता पारैर्गुणाः पञ्चभिः ॥

सौषुम्नीं सृतिमाश्रिते च पवने नादोऽपि वा श्रूयते
बिन्दुर्वह्नितडिद्धचन्द्रतपनाकारस्ततो भासते ॥१६२॥

प्रवेशः पाषाणे नियति गमनं चन्द्रकिरणान्
गृहीत्वारम्भादि-त्रिदशवरनारीसुलभता ॥
अकुण्ठः सङ्कल्पः करतलगतस्येव जगतो
विलोकस्ते सिद्धयेद् मनसि यदि योगि ! त्वमधुना ॥१६३॥

अव्याहता स्वैरगतिस्त्रिलोक्यां !
स्थिरस्चरस्थापि वशे प्रपञ्चः ॥
अखण्डदानं धनदान्महर्द्धे-
स्तव प्रवर्तेत परं किमिष्टम् ॥१६४॥

कं मनोरथमाधाय हृदि मां त्वमिहागतः ?
वद तत् पूरयेयं ते मुधा माभृत्परिश्रमः ॥१६५॥

नानकस्तदनु सर्वबुधोऽपि
सर्वशक्तिरपि शीलसमृद्धया ॥
मन्दमन्दमिदमाल्पदमन्दो
नन्दयन्मुजनयोगिसमाजम् ॥१६६॥

दृष्टानुश्रविक सदोपमखिलं चोद्भूरिरन्तिर्न चेद्-
भक्तिर्योगकलाक्रिया बहुविधा रिक्तैव संलक्ष्यते ॥
वैराग्ये सति सर्वमेव सफलं प्रीत्यै यदारम्यते
गोविन्दस्य विशोधनाय मनसो लब्धुं च भूम्नोऽस्पदाम् ॥१६७॥

तपस्यया योगबलेन चापि
वैरञ्च्यमासाद्य पदं प्रसन्नः ॥
न श्लाघनीयो मम कोऽपि मर्त्यो !
विना शरीरत्रितयव्ययेन ॥१६८॥

सप्तद्वीपा जलधिरशना तत्र सिद्धाः सहस्रं
हं हो ! योगं कथयति भवान् कुत्र कुत्र प्रयात ? ॥
तस्मादीशः सुकृतसुहिता देशिकानां स्वरूपै-
स्तस्मै तस्मै दिशति दयया योगवैराग्यबोधान् ॥१६९॥

योगेन सिद्धयः सन्तु साक्षान्मोक्षाय कल्पते ॥
नासौ ज्ञानोदयद्वारा किन्तु नापवगामि तद् ॥१७०॥

योगस्य तारकं ज्ञानं फलं विद्यास्तु सिद्धयः ॥
शुद्धिसाम्ये हि कैवल्यं सत्त्वस्य पुरुषस्य च ॥१७१॥

द्रष्टु स्वरूपेऽवस्थानं समाधौ परिकीर्तितम् ॥
वृत्तिसारूप्यमन्यत्र योगज्ञैरेव वर्णितम् ॥१७२॥

स्वप्नेन्द्रजालवदलंगलिते प्रपञ्च
आविद्यके स्फुरति चात्मसुखं समन्तात् ॥
मिथ्या शरीरसुखदुःखमवेक्षमाणो
ज्ञानी सदा वहति बोधसमाधिमुद्राम् ॥१७३॥

कर्णभेदपथगस्य मम स्यु-
र्होदयैव भवतो मतशाखाः ॥
सर्व एव मम सम्प्रति मार्गा
भ्रातर. सकलसाधुजनाश्च ॥१७४॥

उपदेश एव मम कर्णविभूषा
हिमघर्मवातसहनं पृथु कन्था ॥
परितोष एव महती खलु ऋद्धि-
र्जगदीशनाम कथनं वरनादः ॥१७५॥

अव्याहताज्ञो जगदीश एव
नान्यः समूर्तित्रयमाकलय्य ॥

करोति विश्वव्यवहारमात्रां
विनास्य वातोऽपि न वाति सौम्य ? ॥१७६॥

गुरोः सुरतरोरहं सपदि पूर्णकामोऽभवं
न किञ्चिदवशिष्यते मम मनीषितं सम्प्रति ॥
भ्रमामि तु भवादृशान् कुतुकतो दिदृक्षु. सत-
स्ततः खलु विरम्यतां मम मनोरथापूरणात् ॥१७७॥

मङ्गलोऽब्रूत गोरक्षं दीक्षितो नानको गुरो ?
सोऽवदन्मङ्गलं सौम्य ? दीक्षितो न परीक्षितः ॥१७८॥

भवादृशाः सत्यमुदीरयन्ति
ज्ञानी च योगी च परं विरक्तः ॥
भक्तस्तथा नानक इत्यमुष्य
शिष्यस्य वाणी गुरुणानुमेने ॥१७९॥

प्राणनाथः समागम्य[1] ततो नानकमब्रवीत् ॥
का मुक्तिरस्ति ? का युक्तिः ? आरोग्यं केन जायते ? ॥१८०॥

किं साधनं विमुक्तेश्च ? लक्षणं किमुदाहृतम् ? ॥
केन वा लभ्यते योगो ? वद नानक ? तापस ? ॥१८१॥

---

1 प्राणनाथनानकसंवाद —
प्रश्ना — उत्तराणि ।
क. का मुक्तिः ? भगवदनुसरणम्
ख. का युक्तिः ? नीरोगता ।
ग. आरोग्यं केन ? दोषक्षयात् ।
घ. विमुक्तेः किं साधनम् ? उपदेशः ।
ङ. ,, ,, लक्षणम् ? प्रभुभानुनेरविवृतिः ।
च. योगः केन लभ्यते ? अभ्यासेन ।

उक्तं नानकयोगिना भगवतः स्मृत्यामविघ्नप्रदं
प्रारब्धोऽपनतं सहाश्रितजनैः संतुष्य यद्भुज्यते ॥
सा मुक्तिर्भगवज्जनानुसरणं युक्तिश्च नीरोगता
दोषाणां समता मता प्रतिहता मा संसृतेः संक्षयात् ॥१८२॥

ब्रह्मज्ञादुपदेश एव कलितो मुक्तेर्महत्साधनं
संसारोह्यशुभाशुभैरविकृतिस्तस्याः परं लक्षणम् ॥
अभ्यासेन समाधिसिद्धिरुदिता वैराग्यतश्चोत्तमा–
दीशस्य प्रणिधानतः प्रतिदिनं हे प्राणनाथाथवा ? ॥१८३॥

प्रासदत्प्राणनाथोऽथ पपात यतिपादयोः ।
तेन पृष्टपदश्चेदमवदत्साश्रुलोचनः ॥१८४॥

धन्योऽसि नानक ? समादिगुणैरुपेतो
नूनं गुरोस्त्वयि कृपा महती परस्य ।
तुष्टोऽस्म्यहं खलु निरञ्जनदर्शनेन
त्वत्तो निरञ्जन ? विभोश्च न कोऽपि भेदः ? ॥१८५॥

नानकोऽवदद्मोहमदानां ज्ञानिनामिति सदातनशैली ॥
तुच्छमप्यतितरां गणयन्ति वीक्ष्य विष्णुमखिलेषु वसन्तम् ॥१८६॥

वीक्षितोऽयमिति नानकयोगी
प्राणनाथमिति मञ्जुल ऊचे ॥
उक्तवान् स तममेयमहिम्न-
स्त्वं यथार्थमकरोः स्तवमस्य ॥१८७॥

प्राणनाथमवदत्परितुष्टो
मर्दनः सुभगवागयमार्यः ।
नानकेन कथितं गतमोहाः
साधवः सुभगमेव वदन्ति ॥१८८॥

नवानां[1] नाथानामथ कथय षण्णां च यतिनां
श्रुतानां सिद्धानामपि चतुरशीतेश्चिरतरम् ।
त्वमाख्याः प्रख्याता मम कुतुकतो मर्दन इति
प्रवक्ति स्म स्मेरास्यगदददखिलं नानकगुरुः ॥१८९॥

गोरक्षनाथो मत्स्येन्द्रो मङ्गलश्चर्पटस्तथा ।
घुग्घुनाथः प्राणनाथो गोपीनाथस्तथैव च ॥१९०॥

चम्पानाथोऽथ सुरतिनाथस्तत्र नवोदिताः
यतीनामपि नामानि शृणु ख्यातानि मर्दन ! ॥१९१॥

गोरक्षो दत्तआत्रेयो हनुमान् भैरवस्तथा ।
लक्ष्मणो भीष्मवर्मा च यतयः षट्प्रकीर्तिताः ॥१९२॥

कङ्करः सङ्करश्चैव सपरो श्रृंगरस्तथा ।
ऊर्मो धूर्मः कनीफाश्च हनीफाश्च सुविश्रुतः ॥१९३॥

लहुरीपाः सङ्करश्च हाजीरश्च स सहरः ।
कन्थडिः सुरतिर्वृद्धिः पूर्णनाथकजालकौ ॥१९४॥

तथा केवलकर्णश्च शम्भुर्विविधलङ्कः ॥
गौराङ्गुलो शरनिधिर्निरतिः पर्वतस्तथा ॥१९५॥

---

I. नवसिद्धा

१. गोरक्षनाथ २. मत्स्येन्द्रः
३. मङ्गलः ४. चर्पट.
५. घुग्घुनाथ ६. प्राणनाथः
७. गोपीनाथ. ८. चम्पानाथः
९. सुरतिनाथ

यतयः षट् :—

१. गोरक्षः २. दत्तात्रेय.
३. हनुमान् ४. भैरव.
५. लक्ष्मणः ६. भीष्मवर्मा ।

ईश्वरो घगरो भर्तृहरिः शमरतस्तथा ॥
रामायतश्च चतुरवचनोग्रघनस्तथा ॥१९६॥

प्रथितो भूतवाः सिद्धस्तथैव कनकाभिधः ॥
अच्छेदनोऽप्यपलकनिधिपिप्पवकस्तथा ॥१९७॥

शिवरामः केशकर्णो गिरिबोधस्तथैव च ॥
सालसो मग्रधारश्च तथा गयलसः स्मृतः ॥१९८॥

चलनानाचितो मुक्तीश्वरो गिरिवरस्तथा ॥
उक्तः स्नूरायनः सिन्धुरायनः प्रीतिपानकः ॥ १९९॥

ज्योतिर्लग्नः शीतजलो विमलज्योतिरेव च ॥
ज्योतिर्मग्नश्च तुलसी योगी भोलशरस्तथा॥२००॥

विष्णुपानो कालनीरस्तथा रामकुमारकः ॥
सिद्धः कृष्णकुमारश्च तथा शङ्करयोगकः ॥२०१॥

वर्मयोगो गुहावासी तथा सूरसती स्मृतः ॥
मीरजो वीरगान्धारस्तथा मीरहुसेनकः ॥२०२॥

सकलन्दरो नीनी च नरेन्द्रनयनस्तथा ॥
सगोवर्द्धनसेनश्च नीलाक्षी कलसंग्यपि ॥२०३॥

एकरङ्गी कर्मनाशी मूलमन्त्री प्रकीर्तितः ॥
तथा केवलकर्मीचात्मरूपी क्लेशधूप्यपि ॥२०४॥

उक्तः कुलविलासी च तथा योगयती स्मृतः ॥
योगगम्भीरनामा च दीपरङ्गी प्रकीर्तितः ॥२०५॥

खलासो मुद्गलो योगी योगी केदारपूर्वकः ॥
तथा विहङ्गमो योगी सम्भालकविचित्रकौ ॥२०६॥

सिद्धाश्चतुरशीतिस्तु कथिताः[1] प्रथिता भुवि ॥
ग्रथिता [1]योगसिद्धेर्येऽन्यथिता न भवाधिभिः ॥२०७॥

मर्दनेन कथितं कथमुक्ता
एत एव यतयो यतिवर्य ? ॥
कामिनिग्रहपरा बहवोऽन्ये
तापसा जगति विश्रुतचर्याः[2] ॥२०८॥

नानकेन भणितं शृणु सौम्य ?
याति शुक्रमितरस्य कथञ्चित् ? ॥
ऊर्ध्वरेतस इमे दृढयोगाः
स्वप्नजागरणसंयतवीर्याः[2] ॥२०९॥

गन्तव्यमग्रे यदि गच्छ साधो ?
इत्युक्तवान्मर्दन नामधेयः ॥
किं बालसिन्धो ? गुरुणेति चोक्तो-
ऽहमग्रुवं तं भगतो यथेच्छा ॥२१०॥

गोपीनाथो मङ्गलः प्राणनाथो
घुघ्घूनाथो यान्तमेनं परीत्य ॥
ऊचुस्तिष्ठास्माकमानन्दहेतोः
किं कृत्यं ते ? सिद्धगोष्ठीगरिष्ठ ? ॥२११॥

कृत्यं साधुसमागमो न तु परं तज्जातमेवाधुना
संसारस्तु गुरोरभाजि कृपयोद्धारैकवान्यस्मृतेः ॥

1. श्लो० १९३ त २०८ यावत ८४ सिद्धानां नामानि।
2. यद्यपि कामिनिग्रहपरा बहवो मनय सन्ति तथापि तत्र एत एव तेषु ऊर्ध्वरेतस इति स्पष्टयन्ति ॥
१. धतुरशी—क०
२. इयो—ख०

युष्माकं रतिरस्तु केवलमिति प्रार्थ्यं मया ज्ञानिने-
त्युक्ता नानकयोगिना जिगमिषा युक्तेन ते व्याहरन् ॥२१२॥

नैरञ्जनी त्वयि कृपा महती बभूव
ज्ञानोदधिर्निरवधिर्विमलो जजृम्भे ॥
आज्ञामवाप्य जगतामधिपस्य गच्छ
पन्थाः शिवोस्तु तव नानक ! निर्विकार ! ॥२१३॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
सिद्धसम्वादो नाम द्वादशः प्रस्तावः ॥

---

## त्रयोदशः प्रस्तावः

वाचस्पतित्वमगमद्धिषणः स्तवेन
यस्यां सुरेन्द्रगुरुतां गुरुतावदग्र्यम् ॥
वाल्मीक्युपज्ञमितरे कवितागुणं च
वाणीं भजे द्रुहिणकण्ठनिवासिनीं ताम् ॥ १ ॥

नानको मर्दनो बालत्रयस्ते पथमुद्गताः ॥
ततो 'ब्यारगिरिं[1] प्राप्ता मर्दनो विस्मितोऽवदत् ॥ २ ॥

कुत्रागताः ? कथिदिहापि ? सिद्धि-
श्चेदस्ति किं ? नेत्रपथं न नेया ॥
गुरुर्जगौ सप्तसहस्रमत्र[2]
सार्धं त्वमागाः खलु योजनानाम् ॥ ३ ॥

ब्यारो गिरिरयं सौम्य ! सर्वसिद्धशिरोमणिः ॥
दत्तात्रेयोऽवधूतोऽत्र स्वपित्यजगरोपमः ॥ ४ ॥

गत्वा ततः 'समशिलातलतल्पशायी'[१][२]
दत्तो व्यलोकि विगताखिलमोहबन्धः ॥
पद्मेक्षणो विसृतपिङ्गजटः[३] सुवक्त्रा[४]
नग्नः पिचिण्डलतया रमणीयरूपः ॥ ५ ॥

1. ब्यारगिरियंत्र दत्तात्रेयः स्वपिति स्म।
2. योजनानां सप्तसहस्रम् = १४००० क्रोशपरिमितम्।
१. तल्प—क०
२. शायी—ख०
३. गत.—ख०
४. सुमुखा—ख०

अस्माभिः प्रणतो न किञ्चिदवदद् दत्तस्ततः प्रोक्तवान्
योगीन्द्रो वपुषि स्थिते कथमहो ! कर्म त्यजेत्कायिकम् ? ॥
सम्भाषादिभिरर्चयन्ति सततं यद्वीतरागक्रुधः
क्षुद्रानप्युपसङ्गतान् प्रतिजनं सन्तो विदन्तो हरिम् ॥ ६ ॥

दत्तोऽवदच्छृणु परेण न कश्चिदर्थः ?
सम्भाषणादिभिरहं [1]स्वसुखानुभूतिः ॥
हंसो जयत्यविरतामजपामयत्नाद्[1]
ध्येयं निरावरणमात्ममहो परोक्षम् ॥ ७ ॥

त्वं नानकोवददपास्तसमस्तमोहं
कस्त्वां परः प्रतिवदेदपरावरज्ञः ॥
किं तु ब्रवीमि ? भवदुक्तिषु सन्दिहानो
मत्वा कमन्यमिदमात्थ ? परेण नार्थः ॥ ८ ॥

तत्त्वज्ञदृष्टिमवलम्ब्य यदीदमुक्तं
ब्रह्मातिरिक्तमसदेव तदापरः कः ? ॥
स्वीकृत्य चेदभिहितं व्यवहारसत्तां
सम्भाषणादिरहितो व्यवहारवर्गः ॥ ९ ॥

अजपयापि[2] विमुक्तजनस्य किं ?
किमु ? मनीषितमस्य हि शिष्यते ? ॥
इदमनुग्रहणाय परस्य चे-
दतिथिसत्कृतिरप्यपराह[3]ता ॥१०॥

---

1. अजपाजपः। यदा हंसः ( सुषुम्णायां स्थित शम्भु ) अनवरतमयत्नाद् सोहम् इति जपति तदा स अजपा जप इति कथ्यते।

१. रह.स्व—क०

२. यामि—क०

३. हना—क०

सो[1]ऽहमित्यजपया स्मरणीयं
विस्मृतस्य महसः खलु रूपम् ॥
स्वप्रकाशमहसामपरोक्षे
तत्र तत्र भवतां किमु यत्नः ? ॥ ११ ॥

पूर्वं जपन्तो जगदीशमेन
सिद्धिं व्रजत्यस्य[१] कृपावशेन ॥
संस्कारतस्तं च जपन्ति भूयः
प्रारब्धशेषेण तनुं दधानाः ॥ १२ ॥

दत्तस्ततो नानकमित्यवादीद्
[२]गुरुश्चतुर्विंशतिमाश्रितोऽहम् ॥
बहु व्यर्था [३]संप्रति तेन नार्यो
लब्धे फले व्यर्थ उपायसङ्गः ॥ १३ ॥

दाम्पत्यमनुमोदन्ते कन्यकाः पुत्रिकागतम् ॥
पञ्चालिका विमुञ्चन्ति सत्ये पत्यौ तु सङ्गते ॥ १४ ॥

[2]आहूयते हि दूरस्थो न तु संनिधिसंस्थितः ॥
परोक्षस्य जपो विष्णोः प्रत्यक्षस्यावलोकनम् ॥ १५ ॥

जपसि किं खलु ? नानकतापस ?
स्मरसि कं मनसः प्रणिधानतः ? ॥

---

1. अजपाजपेन 'सोऽहं' इति स्मरणीय ।
2. परोक्षमूर्तिविष्णुभजनपक्षाश्रयो रामचन्द्रमानवान्यपूजा ।

१ व्रजेत्य—ख॰
२. गुरु—ख॰
३. स्तप्रनि—ख॰

ऋतमुदाहर, कामिह देवतां ?
स्वामियतां[१] वयसा निरमाथयः ॥ १६ ॥

तमुवाच नानकयतिः शृणु सौम्य ?
प्रणवं जपामि [३]मनुमन्त्रमुदस्य ॥
परदेवता प्रकटिता जगदीशो
जगतीजनुस्थितिलयैकविलासी ॥ १७ ॥

दत्तात्रेयः स्मेरवक्त्रो बभाषे
मिथ्या वाच्यं तापसैर्नो[२] कदापि ? ॥
प्राप्तः श्रान्ता यत्कृते भूरिकालं
स्वामात्मानं दर्शयेदञ्जसा सः ॥ १८ ॥

[४]निरञ्जनो निराकारः स कथं दृष्टिगोचरः ? ॥
यदि दृष्टो वद तदा किं रूपः ? किं परिच्छदः[1] ? ॥ १९ ॥

पुनरुवाच यतिर्यतिनां पते ?
वदसि सत्यमदस्तदपि प्रभो ? ॥
न कृपया किमुदेति ? भवादृशा-
मसुलभोऽपि स[2] भक्तिवशंवदः ॥ २० ॥

जीवोपाध्यनवच्छिन्न चेतने रतिरुत्तमा ॥
भक्तिस्तयैव मुच्यन्ते ब्रह्मसंस्थास्[५]तत्त्वतः ॥ २१ ॥

---

1. यतो नानक निरञ्जनस्य विष्णो रूप कथयितुं वाञ्छति "किं रूपः किं परिच्छदः" इत्यादिना ।

2. विष्णुः ।

१. स्वमिव—क०

२. तापय—क०

३. जपगममनु—क०

४. विरञ्जनोसकयं—ख०

५. मृत्वत.—ख०

ज्ञानं भक्तेरङ्गं लोकाद्गीता गिरश्चापि ॥
योगो भक्तौ ज्ञाने प्रयाजवच्चाङ्गतां भजति ॥ २२ ॥

साधनभक्तेर्ज्ञानं
[1]ज्ञानात्फ[1]लभक्तिरुत्पन्ना ॥
साक्षादात्मपदस्थिति-
हेतुर्भक्तेरुदीर्यते स्पष्टम् ॥ २३ ॥

क्वचित्प्ररूढस्त्वनुराग एव
ज्ञानानपेक्षः प्रददाति मुक्तिम् ॥
गोप्योऽनुरक्ताः स्मरकोटिकान्ते
कृष्णो विमुग्धा अपि मुक्तिमापुः[2] ॥ २४ ॥

[2]श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २५ ॥

इय[3] नवविधा भक्तिः करोति परिशीलिता ॥
अनुरक्तिमपि च्छिन्नां प्रेमाश्रुपुलकाङ्किताम् ॥ २६ ॥

मृदुनि मनसि सत्वभाविते सा
भवति पुरातनपुण्यबीजजन्मा ।
[3]अलमलमितरेण साधनेन
प्रकटमिय[3] हुरुते परं पुमांसम् ॥ २७ ॥

---

1. साधनभक्तिः फलभक्तिश्च ।
2. नवधा भक्तिवर्णनम् ।
3. भक्तिरेव सर्वश्रेष्ठ साधनमिति ।
१. फलं—क॰
२. मापु—क॰
३. मया—क॰

मनसो[1] वचसोऽप्यगोचरः
स दुराराध्यतरः परः पुमान् ॥
भजते भजतां मनोज्ञगं
नयनानन्दकरं कलेवरम् ॥ २८ ॥

भक्तच्छन्दानुवर्तित्वं मुकुन्दस्य परिस्फुटम् ॥
प्रह्लादवचनात् स्तम्भादाविरासीन्नृकेसरी[2] ॥ २९ ॥

तमालनीलः कनकावदातया
श्रिया समेतः समुदीय माधवः ॥
निहन्ति तापं सकलं घनाघनो
यथा जनानां तडिता सहोदितः ॥ ३० ॥

अभिनवघननीलकायकान्तिः
कमलदलद्युतिशोणकोणनेत्रः ॥
शरदिजशशिसुन्दराननश्री-
र्मुकुटमणिप्रभया हृतान्धकारः[3] ॥ ३१ ॥

श्रवणसुभगकुण्डलः सुनासो
भुजधृतचक्रगदादरारविन्दुः[4] ॥
उरसि भृगुपदाङ्क[5]वैजयन्ती-
रविरुचिकौस्तुभकान्तिभिर्मनोज्ञः ॥ ३२ ॥

---

1. ३१ त ३५ यावत् विष्णुस्तुतिः ।
१. मनसा वचसाम्—ग०
२. नरकेशरी—र०
३. हृताधका—क०
४. विन्दः—व०
५. पादाङ्क—क०

कनकरुचिरमम्बरं दधानो
गरुडगतो रमया समाश्रितश्च ।
जयविजयमुखैरुपेतपार्श्व-
श्चमरधरैः सुरसन्निभैर्निषेव्यः ॥३३॥

सकलभुवनबीजमादिदेवः
सदयविलोकनवर्द्धितात्मसर्गः ॥
निजजनकरुणागृहीतमूर्तिः
श्रुतिगणगीतकथो मया व्यलोकि ॥३४॥

चतुर्भिः कालापकम्

श्रीवत्सवक्षसमुदारचतुर्भुजाग्रं
जाग्रन्महामणिमयूखकृतप्रकाशम् ॥
[1]फल्गूदरं कुटिलकुन्तलमायताक्षं
[2]स्मेराननं स्मरति शार्ङ्गधरं मनो मे ॥३५॥

कथयेय कथं विभोर्विभो !
महतीं लोचनलोभनीं श्रियम् ॥
गरुडोऽपि यथा भुजङ्गभुक्[1]-
कमला चापि चला निषन्निवौ ॥३६॥

सनकादिनारदमवाद्यसिद्धा
विगतैषणागतकृताकृतशोकाः ॥

---

1 स्तोत्रमनुहरतीह भीष्मस्तवमिन्द्रागमनीय स्तोत्रम् ।
तदात्रास्ति ... साम्य ... भावसाम्य च ॥
2. एवमा नर्तन ... लोलैरपा च । ता अप्सरस्पुर्जित एव ।
१. फलादर—क॰
२. भुग्—क॰

सततं भवन्ति भगवन्तममुं
यन्महनीयमोहनगुणोऽस्ति हरिस्त्वत् ॥३७॥

पश्यसि सदैव देवं
भक्तिज्ञानामृतो दधि त्वमसि ॥
यदि तु परीक्षितुमिच्छसि
मया समं गच्छ वीक्षस्व ॥३८॥

दत्तात्रेयः प्रासदत्तस्य वाक्या-
द्ब्रूते सत्यं नानक ? त्वं ब्रवीषि ।
भक्तौ ज्ञाने योगवैराग्ययोश्च
स्थेम्ना दृष्टस्ते गुरोः सूपदिष्टः ॥३९॥

नारदेन कथितं खलु मह्यं
तारणाय जगतो गतमोहः ॥
नानकोऽवतरति स्म कलौ स
ज्ञानवानिति कलैव मुरारेः ॥४०॥

आब्रजेत्क इतरो हि सुमेरौ ?
सर्वशक्तिसहितस्य न गर्वः ।
कस्य वा भवति कालमहिम्ना ?
त्वं ततो भगवतो ध्रुवमंशः ॥४१॥

त्वां दिदृक्षुरहमत्र चिरस्तु-
राविरासमुपयातमवेत्य ॥
मादृशाः कलियुगे जनभीताः
प्रायशः प्रकटतां न भवन्ति ॥ ४२ ॥

ज्ञानभक्तिसुविरक्तिकथाऽपि
दुर्लभैव कलुषे कलिकाले ॥

दाम्भिकाः प्रकटयन्ति कुतश्चि-
[1]र्जीविकापरिणतामवदर्हाः ॥ ४३ ॥

बोधयन्ति खलु शिष्यगणेभ्यो
यत्र तत्स्वहृदये कलयन्ति ॥
घोषयन्ति [2]षडदोषतया यत्
तोपमात्मनि च ते न भजन्ति ॥ ४४ ॥

सर्वमेतदिति दुष्करमस्मिन्
सत्त्वहारिणि कलौ पुरुषाणाम् ॥
रामनामवरमन्त्रजपं तत्
पारमश्नुय जनानुपदिश्य ॥ ४५ ॥

श्रद्धाभक्तिविवर्जितैः खलु जनैः[3] कर्तुं न किञ्चित् क्षमं
मालिन्यान्मनसः समाधिविधुतिश्चिन्तोदयो दुर्लभः ॥
धर्मग्लानिमुदीक्ष्यते न भगवद्धर्मोपदेष्टाभवा-
नादिष्टः स्वकलाकलौ भगवता तुभ्यं नमो नानक ! ॥ ४६ ॥

नानकस्तं [4]नमन्नूचे [5]हसन्महिमकीर्तनम् ॥
कुरु स्वमीशोऽस्लकाय प्रह्लादाय च बोधदः ॥ ४७ ॥

आत्मैव भूरि तपसे हरिणा [6]प्रसद्य
दत्तात्रये [7]त्वमसि सूनुरगाधबोधः ॥

१. जीविकाय—क॰
२. वरदोष—ब॰
३. जनैश—र॰
४. स्तनमन्—ब॰
५. प्रगुह—ब॰
६. ततात्रये—ब॰
७. प्रसन्महिम—ब॰

त्वद्दर्शनं परिपुनाति जनान् कृपालो !
किं वर्णये तव गुणान् गणितान् पुराणे ? ॥ ४८ ॥

दत्तात्रेयो नानकश्च परस्परनतिस्तुती ॥
व्यधत्तां स्मेरवदनो मर्दनोऽहं च विस्मितौ ॥ ४९ ॥

श्रुत्वाथ नानकगुणानिति बालसिन्धोः
सार्धत्रयप्रहरवर्तिसमाधिमुग्धः ॥
ऊचेऽङ्गदः पुनरुदञ्चितचित्तवृत्ति-
र्भूयः कथा भवतु मन्यकरी भवेऽस्मिन् ॥ ५० ॥

औत्सुक्यादीक्षितमुखः सर्वैः सामाजिकैस्ततः ॥
बालसिन्धुरुवाचेमां कथां श्रोतृमनोहराम् ॥ ५१ ॥

वैणिकोऽवददितश्चल साधो !
साधवो यदि परेऽपि विलोक्याः ॥
उज्जगाम गुरुरद्भुतशक्ति-
र्मर्दनेन च मया च समेतः ॥ ५२ ॥

उन्मयूखमणिभासुरशृङ्गे-
ऽतरामधरणीभृतितुङ्गे ॥
मर्दनेन कथितं कथयस्व
को गिरिः ? क इह साधुधुरीणः ? ॥ ५३ ॥

पर्वतोऽयमनलाचितनामा
साधुरत्र च विरोचनतातः ॥
नानके कथयतीति गिरं नः
पक्षिणो परिमिताः परिवव्रुः ॥ ५४ ॥

ते विचित्रगरुतः शिखरामा-
स्फोटिकोटिपटुकुट्टनकामाः ॥
वीक्षिता न च कदापि धरित्र्यां
मर्दनस्य मम भीतिमकुर्वन् ॥ ५५ ॥

पक्षिणां प्रभुरवोचदथैषां
मानुषीं गिरमुदारशरीरः ॥
नीयमान इव मार्दवमुच्चै-
र्नानकस्य महसा महितेन ॥ ५६ ॥

[1]आकाशपक्षिण इमे तव मानुषस्य
दृष्ट्वाऽन्तरिक्षगमनं कुपिताः प्रकामम् ॥
त्वामर्दयन्ति कथमामशरीरधारी
भ्राम्यस्यगम्यमितरैर्गगनं प्रपन्नः ॥ ५७ ॥

मन्त्रौषधीविविधयोगकलाचलेन
मर्त्यो भवेद्दहनगाहनशक्तिशाली ॥
नैवाथवा सुर इवायमटेत्स्वतन्त्रो
मर्त्येत भूतनिवहेन नभश्चरेण ॥ ५८ ॥

अस्माभिरुज्झिताभूमिरण्डमाकाश एव नः ॥
उद्भिद्य[१] शिशुरुच्छेदिहरेद्गगने ततः ॥ ५९ ॥

न स्थले जलजो जीवेत् स्थलजोऽपि जले न च ॥
न व्योम्नि भूमिजस्तद्वद् व्योमजोऽपि न भूतले ॥ ६० ॥

---

1. स च पक्षिणां प्रभुः मानवं ५६ त. ६२ यावत् कथयति यत् कथं स तत्रागतः केन प्रेषित इति ।

१. उद्भिद्य—च०

पिपीलिकानां हि पुरातनीनां
पक्षोपलब्धिर्मरणार्थमेव ॥
युष्माकमाकाशगतिस्तथैव[1]
किमर्थमत्रागमनं ? वदध्वम् ॥ ६१ ॥

प्रेषितः केन ? किं नामा ? किमर्थं गगनाङ्गने ? ॥
धावसे तावदफलं स्वस्य प्रौढिं विदर्शयन् ॥ ६२ ॥

नानकः स्मितमुखस्तत ऊचे
विद्धि नो वपुरपक्वमिदं नः ॥
तादृशं कथमनर्गलमश्नेद्
दुर्गमं गमनमार्गमिमं तम् ॥ ६३ ॥

नाम नानक इति प्रथितं मे
कामना न पटुता प्रथनस्य ॥
आममेतदखिलं कथमस्तु ?
रामकीर्तनमृते परिपाकः ॥ ६४ ॥

[1]ईशितारमवलोकितुकामा–
स्तत्कृपैकशरणाश्चलिता स्मः ॥
[2]आम्रसेकपितृतर्पणरीत्या
त्वद्विलोकनमवाप्तुमसाधो ? ॥ ६५ ॥

नानकस्य गिरं श्रुत्वा [3]सोनलाचीननामकः ॥
ऊचे प्रणम्य नितरामितरानपसारयन् ॥ ६६ ॥

---

1. दिदृक्षुम् ।
2. आम्राश्च सिक्ताः पितरश्च प्रीणिता इति न्यायः ।
3. सनलाचीननामा गिरिनिम्नरदायी ।

१. मति–क०

श्रुत्वपूर्वयशाः प्रशान्तचित्तो
विदितस्त्वं खलु नानकोऽसि योगी ॥
भवता कृपया कृताः कृतार्था-
वयमेते गिरिरेष पावितश्च ॥ ६७ ॥

[1]प्रह्लादं वदति जनो वसन्तमत्र
कुत्रास्ते स इति ? मर्दनस्तमूचे ॥
तेनोक्तं गिरिशिखरे वसत्यमुष्मि-
न्नास्माकं स तु नृपतिर्मुकुन्दभक्तः ॥ ६८ ॥
ततस्त्रयः सर्वत उन्नतं तं
गता वयं पूर्वतमेकशृङ्गम् ॥
समाहितस्तत्र विलोकितोऽभूत्
प्रह्लाद आह्लादकरो जनानाम् ॥ ६९ ॥
[1]किरीटरत्नद्युतिदीप्यमानः
स्फुरन् महाकुण्डलशोभिकर्णः ॥
विशालवक्षःस्थललम्बहारो[2]
धृताङ्गदाभ्यां रुचिरो भुजाभ्याम् ॥ ७० ॥
करस्फुरत्कङ्कणरत्नरोचिः
पीतं वसानस्तनुपट्टवस्त्रम् ॥
प्रांशुर्नवाम्भोधरनीलकान्तिः
सुनैष्णवव्यञ्जनशोभमानः ॥ ७१ ॥
गृहस्थधर्मापि मनोजयेन
दृढं वशीकारविरक्तियुक्तः ॥

I प्रह्लाद – नानकस्य पर्वतोपरि भक्तेन सह मिलितुं गतो गुरु पर्वतशिखरे ।
१. दर्ति–क०
२. हारो–क०

तनुं दधाना ननु भक्तिरेव
कार्यं गता भागवतानुधर्मा: ॥ ७२ ॥

त्रैलोक्यतुच्छीकरणाय कामं
धैर्यस्य किं नाम नवावतारः ? ॥
किमात्मनि प्रेमरसोक्षितस्य ?
ज्ञानस्य साकारतया विनोदः[1] ॥ ७३ ॥

पञ्चभिः कुलकम्

कर्त्ताकर्तेस्युक्तवान्[2] योगिराजो
भ्रातः कस्त्वं ? मानवोत्रागतः किम् ? ॥
प्रह्लादेनेत्येवमुक्तः स ऊचे
दासो रामस्यास्मि तेनेह तुष्टः ॥ ७४ ॥

सदा गोविन्दभक्तानां साभिलापः समागमः ॥
प्रह्लादो निजगादेदं प्रेमाश्रुपुलकान्वितः ॥ ७५ ॥

पात्रे कुत्र पयः श्रितं[3] ? किमदधास्तस्मिन् ? किमाचं धनं ?
दत्वा दध्यकरोर्मन्थिर्यमथा केनाथ वद्युक्तितः[4] ॥
उद्भूतं नवनीतमग्र किमिदं ? सम्भुज्यकां[5] निर्वृतिं ?
प्रायस्पापहरीं हरिप्रियसखे ? त्वं नानकेदं वद ॥ ७६ ॥

I. ७० त ७ यावत् नानकत्वप्रह्लादवर्णनम् ।

१. तु—ख०

२. स्युत्य—क०

३. श्रुतं—क०

४. युक्तितः—ख० न युक्तितः—क०

५. मुच्यकां—क०

ऊचे नानकतापसो मम मनः पात्रं पवित्रं कृतं
तत्त्वं चोपनिषद्गवीविगलितं दुग्धं विरक्तेः मृतम्[१] ॥
तत्रात्तं धनमर्पितं गुरुवचो मन्था विचारो महा–
नुद्भूतं नवनीतमात्मविषयप्रेमातिमाधुर्ययुक् ॥ ७७ ॥

तदास्वाद्य सुसन्तुष्टो मन्नता पालनच्छटाः ॥
न संस्मरामि दैत्येन्द्र ! दुर्निवाराः शरीरिणाम् ॥ ७८ ॥

प्रह्लादस्तदनु जगाद सुप्रसन्न–
स्त्वं ज्ञानी त्वमसि [२]विरक्तिमांश्च भक्तः ॥
कालेऽस्मिन् बहुजनकार्यमार्यं ! कुर्वन् ॥
कोप्यंशो नियतमवातरो मुरारेः ! ॥ ७९ ॥

तममापत नानकः प्रवीणो
वद दैत्येन्द ! समस्तशास्त्रविद्वन् ! ॥
अवधारितवान्भवान्स तत्त्व
किमु बुध्या च सतां च सङ्गमेन ! ॥ ८० ॥

प्रह्लादस्तमिदमुवाच नानक ! त्वं
सिद्धान्तं शृणु मम सम्मतं सतां च ॥
आनान्याद्भगवत आश्रयेत धर्मान
मानुष्यं चलमतिदुर्लभं प्रपद्य ॥ ८१ ॥

विषयसुखमशेषे लभ्यते दैवयोगाद्
वपुषि खलु तदर्थं व्यर्थयेन्न स्वमायुः ॥
भगवति निजआत्मन्याचरेद्भक्तिमुर्वी
[३]विविधविधुरगुर्वी संसृतिं या भिनत्ति ॥ ८२ ॥

---

१. मृतम्—क०
२. विरक्तमांश्च—क०
३. विघ—क०

बालस्यार्थमपैति रात्रिषु तृषा मुग्धस्य बाल्ये तथा
तारुण्ये तरुणीगृहीतमनसोऽशक्तस्य हा ! वार्धके ॥
आयुर्भूरिकुटुम्बकार्यकलिलस्वान्तस्य शान्तिः कुतः ?
पुंसः संसृतिनिम्नगागुरुनिपतितस्योद्धारवार्तैव का[2] ? ॥ ८३ ॥

प्रकृतिविकृतिषु स्वयं महेशः
स्थिरचरजातिषु भोक्तृभोग्यरूपः ॥
अनुभवसुखसत्य एक एव
ह्यनवगतो निजमायया निगूढः ॥ ८४ ॥

मुकुन्दः सुखमाराध्यः प्रसन्नो येन केनचित् ? ॥
आत्मा सर्वत्र सिद्धश्च भक्त्यैव सुलभः सदा ॥ ८५ ॥

त्रयी त्रिवर्गो विविधा च वार्ता
ज्ञानं च योगः सदुपासनं च ॥
यदर्पितं प्रीतय ईशितुर्मे
मन्ये तदेदं सफलं न चान्यत् ॥ ८६ ॥
वेदैर्गुणानां गणिनः प्रपञ्च-
स्त्रैगुण्यशून्ये नु रमेत तत्त्वे ॥
न मोक्षमिच्छेद्भगवत्प्रपन्नः
स तत्कृपापर्यवसान एव ॥ ८७ ॥

विकारा जन्माद्याः षडपि वपुषो नात्मन इमे
फलानीं ते स्यात्तां सिदिव इव कालेन कलिताः ॥
ध्रुवः शुद्धो हेतुर्विकृतिरहितो व्यापकतमः
स्वदृक्[3] चैकश्चात्मा सकलजगदाधार उदितः ॥ ८८ ॥

---

१. कलित—ख०

२. वा—ख०

३. स्वदृग्वैक—ख०

प्रकृतिविकृतिपुन्सां सङ्गतानां विवर्ते
वपुषि परमतत्त्वं निर्णयेच्छास्त्रदृष्ट्या ॥
स्वनिखननिर्यद्वालुकाभ्यः प्रवीणाः
कनकमुचितयत्नैः कान्तमासादयन्ति ॥ ८९ ॥

अन्वितं व्यतिरिक्तं च ब्रह्मसूत्रं मणिष्विव ॥
पदार्थेषु जगज्जन्मस्थितिसंहारकारणम् ॥ ९० ॥

गन्धैर्गन्धवहो यथा सुमनसामालिङ्गितो भासते ॥
बुद्धेर्जागरणादिभिस्त्रिभिरसौ साक्षी तथा लक्ष्यते ॥
आज्ञानात्स च वासना विरचितः स्वप्नोपमानो भवो
वैधर्म्ये परिभाविते हृदि ततो बुद्धेर्विभूयेत भोः ? ॥ ९१ ॥

बुद्ध्यादितादात्म्यविडम्बनेऽयं
येनास्य जातेच[1] निरञ्जनस्य ॥
यत्नैस्तदज्ञानमपोहनीयं
बीजं हि संसारविपद्रुमस्य ॥ ९२ ॥

धर्मास्ततो भागवतान्[2] श्रयेत
यैः श्रीपतिस्तुष्यति तूर्णमेव ॥
संसारदुर्वारदवानलोऽयं
[3]तस्मिन् क सिध्यत्यमृतच्छटाभिः ? ॥ ९३ ॥

भक्त्या गुरूणां सकलार्पणेन
सतां च सङ्गेन हरिप्रियाणाम् ॥
कथासु विष्णोरनुरागतश्च
सत्कीर्तनैस्तद्गुणकर्मणां च ॥ ९४ ॥

ध्यानेन तत्पादसरोरुहस्य
तन्मूर्तिसन्दर्शनजातहर्षैः

---

१. जातेन—क०
२. भागवताश्च—ग०
३. तस्मिन्—क०

निर्जित्य षड्वर्गमुपार्जयेत
भक्त्या रतिं श्रीमति [1]वासुदेवे ॥ ९५ ॥

युग्मम्

सर्वेषु भूतेषु मम प्रियोऽसौ
[1]राधाधवो राजति पूर्णरूपः ॥
एवं विनिश्चित्य च भूतवर्गं
[3]सम्मानयेन्मानमृदस्य धीरः ॥ ९६ ॥

लीलावतारे रचितानि विष्णो-
र्निशम्य कर्माणि च जातहर्षः ॥
रोमाञ्चितो गद्गदमुद्गताश्रु[2]-
रुच्चैर्पदा गायति वीतलज्जः ॥ ९७ ॥

नृत्यत्यलं कृष्ण ! मुकुन्द ! विष्णो !
इत्याकुलं वक्ति नमत्यदम्भः ।
तदा हरिं ध्वस्तसमस्तबन्धो
भक्त्या प्रपन्नो गतवासनोऽसौ ॥९८॥

युग्मम्

कान्ताः पल्लवकोमला बहुधनं पुत्राः सखायो मही
मातङ्गास्तुरगाः श्रमोपगमिता दुःखप्रदा नश्वरा
आसङ्गं प्रविहाय तेषु मनसा स्निग्धेन सेवेत तं
यो ज्ञातः स्वपदं ददाति भगवान् ब्रह्मादिभिर्वाञ्छितम् ॥९९॥

---

I. श्रीमति वासुदेवे रतिं नवधाभक्त्या उपार्जयेत । षड्वर्गं विजित्य, श्रवणेन, सङ्गेन, कथानुरागेण, सत्कीर्तनेन, ध्यानेन, दर्शनजातहर्षेण च ।

१. कामः–क०

२. मद्गता–क०

३. सम्मानयेत्–क०

वेपया बहुयत्नसाध्यमानाः
सिकतानामिव सेतवो गलन्ति ॥
न सुखं न ततश्च दुःखभङ्गो
लभते प्रत्युत दुःखमेव देही ॥१००॥

न कुलं न वयो बहुज्ञता वा
भगवत्प्रीतिकरी न वर्णधर्मः ।
सकलेषु निवासिनो जनेषु
विमला भक्तिरधोक्षजस्य किंतु ? ॥१०१॥

आस्तामन्यद्वासुदेवस्य नाम
नित्यं मर्त्यः कीर्तयेयश्च कुत्र [1] ॥
प्रायश्चित्तं भूयसां दुष्कृतानां
तद् कामानां लब्धये कामरत्नम् ॥१०२॥

नारायणो नरसखो निजगाद धर्मं
यं नारदाय दयया निवसन् बदर्याम् ॥
गर्भे स्थितस्य कथितो मम तेन सौम्य ?
सोऽयं हृदि स्फुरति तुभ्यमुदीरितश्च ॥१०३॥

प्रह्लादस्येति वाचा स परममुदितो वक्तुकामः कराभ्यां
धृत्वा दैत्येश्वरेण स्वहृदि विनिहितः प्रेमतो भूरिकालम् ॥
अन्योन्यं प्रीतिरासीद् बहुदिनजनितेवातिरम्या प्रकामं
पृष्ट्वा तं द्रष्टुकामो ध्रुवमगमदसौ योगतो योगिराजः ॥१०४॥

राजव्यञ्जनमैक्षत ध्रुवमसौ सौवर्णसिंहासने
नक्षत्रैश्च प्रदक्षिणीकृततनुं खेटैश्च तेजोमयैः ।

---

1. नामभिर्भिन्नो मुमुक्षो भगवन् एव भिन्नवर्णैर्मतः ॥

धर्मेन्द्रानलकश्यपप्रभृतिभिः संसेवितं श्रीहरे–
भक्तिप्रेमरसालसेन मनसा तुष्टस्तदाज्ञाकरम् ॥१०५॥

नक्षत्राणि न दृश्यन्ते मर्दनेनेति भाषिते ॥
जगाद नानको योगी तान्यधो ध्रुवमण्डलात् ॥१०६॥

बालसिन्धो ! ध्रुवं पश्य यतिनेत्यहमीरितः ॥
यथाज्ञापूज्यपादानामिति प्रत्यवदं ततः ॥१०७॥

दृष्ट्वास्मान्ध्रुव इत्युवाच हरिणः कंठीरवस्यास्पदे
केन क्रीडितुमुत्सहन्ति गगने केन स्थ भो ! लम्भिताः ! ।
हिंस्राः खेचरभूचरा बहुविधा मर्त्यान् खमस्थान् बहून्
रस्थान् को नु ररक्ष हन्त ! भवतस्तद्दुर्गमार्गागतान् ॥१०८॥

प्रह्लादस्य स्थानमभ्यागतस्त्वं
भूलोकस्थो नानको मे श्रुतोऽसि ॥
कस्मिन्नर्थे साहसं निर्मिमीषे !
गन्तुं चेतः सस्पृहं कुत्र ते च ! ॥१०९॥

ततो नानकोऽभ्रूत बाल्ये भवन्तं
गृहान्निर्गतं यो ररक्षातिदक्षः ।
स नो रक्षिता सिंहशार्दूलमुख्या
न हिंस्रा विहिंसन्ति यस्यातिदेशे ॥११०॥

मूकं वाक् यतिभातनोत्यचरणं नागारिसंस्पर्धिनं
यो वज्रं तृणतोऽपि फल्गुतृणमप्युज्झिन्नवज्रोदरं
आपद्मोद्भवमापिपीलिकमनुल्लंघ्य स्फुरच्छासनो
यो देवो गमयन्स दुर्गममिदं नः स्वं निनीषुः पदम् ॥१११॥

इति नानकस्य वचनानि निशम्य
प्रससाद स ध्रुव इदं च जगाद ॥

तव सूनृतानि हरिभक्तियुतानि
श्रुतवानहं परमहर्षमुपेतः ॥११२॥

कलासि नूनं कमलाधवस्य
यो नारदाद्यैः सनकादिमिश्च ॥
गम्यं कथञ्चित् प्रथितं ? प्रयासि
वैकुण्ठमावासमकुण्ठशक्तिः ॥११३॥

इह स्वकीयावतुगौ विहाय
प्रयाहि भो ! नानक ! दर्शनाय ॥
आम्नायनिर्णीतमहाविभूते-
र्भूतेषु नित्यं वसतो मुरारेः ॥११४॥

तथेति तं योगिवरो निगद्य
मां मर्दनं तिष्ठतमित्युदीर्य ॥
सुक्तिप्रभावप्रबलीकृतेन
जगाम योगेन जगन्मुकुन्दम् ॥११५॥

यदुक्तं [I]षोडशकोटियोजनं
विरञ्चिलोकान्न कदापि नश्वरम् ॥
विस्तारयुक्तं [II]रदकोटिसंख्यया
तद्धाम विष्णोः स जगाम भक्तिवः ॥ ११६॥

यस्मिन् राजतहैममौक्तिकमयैर्माणिक्यवज्रोद्भवै-
रुत्तुङ्गैर्भवनैर्विभिन्नमभितः स्यातुं न शक्तं तमः ॥
आस्ते कुत्रचिदिन्द्रनीलभवनव्याजेन गारुत्मतः ?
स्थानस्यापि मिषेण कुत्रचिदहो ! तापिच्छगुच्छच्छलात् ॥११७॥

---

I. षोडशकोटियोजनमुन्नत विष्णोर्धाम ।
II. ३२ कोटिसंख्यया विस्तृतम् ।

सारूप्यं समवाप्य कैटभरिपोरेकान्तभक्ताः परं
क्रीडन्तः सततं विमाननिवहैः कल्पद्रुमाणां वने ॥
कल्पान्तोल्वणवीतिहोत्रबहुलज्वालावलीविज्वलद्
ब्रह्माण्डौघचटत्कृतिं सुकृतिनः शृण्वन्ति यत्र स्थिताः ॥११८॥

यत्पारेविरजं विराजतिहरेः सौशील्यतः शीतलं
तेजोभिस्तमसां विनाशिशशिनः सूर्यस्य चागोचरः ॥
नीयन्ते किल पञ्चियोजनबृहच्छायस्य शाखातले
विश्रान्तास्तिलशाखिनो हरिजनैर्यन्मुक्तभक्ताजनाः ॥११९॥

वाप्यो विद्रुमखण्डमण्डिततटाः सोपानवत्यो महा-
नीलैरुत्पलकाननेषु विलसच्चक्राङ्गचक्राङ्गनाः ॥
यस्मिंश्चोपवनानि फुल्लतरुभिर्नैश्रेयसादीन्यलं
नेत्रश्रोतसुखानि कोकिलकलैर्भृङ्गावलीगुञ्जितैः ॥१२०॥

पञ्चभिः कुलकम्

प्राकारः कनकोज्ज्वलो मणिमयः स व्योमसीमां स्पृशन्
दृष्टो यत्परिखासु नीलनलिनामोदैः पयो वासितम् ॥
रम्भाः स्तम्भशुभाः सहेमकलशा मुक्तावलीतोरणाः
दृष्टाः काञ्चनदण्डमण्डितकटैः कक्षाः सुरैरक्षिताः ॥१२१॥

स [1]सप्तकक्षान्यविलम्ब्य योगी
जगाम गोविन्दकृपावलम्बः ॥
सभां मणिव्रातमयूखरम्यां
ददर्श तद्भक्तसुरैः समेताम् ॥१२२॥

तुङ्गे तत्र सहस्रचन्द्रचटुले सिंहासने संस्थितः
कोटीरङ्कुरुविन्दगारुडमहानीलैर्विचित्रं वहन् ॥

---

१. ष्यति–ख०

केयूरस्थितहीरदश्मिरुचिरैर्नित्यं जयश्रीश्रितै-
[1]र्दोर्भिर्दीर्घतरैर्गदासदसिजं शङ्खं च चक्रं दधत् ॥१२३॥

[2]बिभ्राणो मकराकृतिं श्रवणयोर्भूषां प्रकोष्ठद्वये
मन्थानांचलघर्षणोज्ज्वलमहारत्ने स्फुरत्कङ्कणे ॥
हारं वक्षसि कौस्तुभं भृगुपदं श्रीवत्सवन्यस्रजौ
मालां हैमसरोरुहीं स तुलसीमाल्यां [१]पिशङ्गाम्बरः ॥१२४॥

स्निग्धश्यामपयोदसुन्दरवपुः फुल्लारविन्देक्षणो
लक्ष्म्या चामरहस्तया सुरवरैरासेव्यया सेवितः ॥
भक्तैः स्वैः सनकादिनारदमुखैः सूक्तैरनेकैः स्तुतो
वाग्देव्या कलिताकला ललितया वाण्या मुहुर्वर्णितः ॥१२५॥

कर्मब्रह्मपरैः समस्तनिगमैर्द्वेधापि मूर्तैर्नुतो
भूम्यामोदकरण्डचारुकरया सप्रेमसम्भावितः ॥
चन्द्रेणामृतशीकरैर्निजकरैराराधितो दूरतो
वातेनातिसुगन्धिशीतमृदुभिः सञ्जीवितो मारुतैः ॥१२६॥

मूल[3]प्रकृत्या महताहङ्कारेण च सर्वतः ॥
तन्मात्रैरिन्द्रियैर्भूतैर्भूतिमद्भिर्निषेवितः ॥१२७॥

ब्रह्माद्यैः सुरसत्तमैः कथमपि प्राप्तप्रवेशैश्चिरं
दूराद् दैत्यवधावदानजनितं दृष्टो गृणद्भिर्यशः ॥

---

1. साक्षाद्दृष्टेव मानसो ददर्श विष्णुमक्ष्णोः समक्षमिति मानसस्य प्रतीयते महिमा ।

2. त्रिलोकीपतिवर्णनमत्र वैकुण्ठेनासादितं कविना । वाच्यप्रधानवर्णनेऽत्र दृश्यन्ते बहवो गुणा यदुपतेः ।

3. सांख्यमतानुसारं वर्णनम् ।

१. पिशङ्गा—क०

[1]प्रेमस्मेरमुखो निजेशकरुणापीयूषधारां किरन्
दृग्भ्यां लोचनगोचरो यतिपतेरासीत् त्रिलोकीपतिः ॥१२८॥

षड्भिः कुलकम्

त्रयीमयेन तार्क्ष्येणास्तुतमुत्तमसामभिः ॥
सर्वश्रुतिशिरोरत्नं [2]'दूरात्तमनमद्' [1] यतिः ॥१२९॥

सुनन्दनन्दविजयजयप्रबलसात्त्वताः ॥
कुमुदः कुमुदाक्षश्च [2]विष्वक्सेनो बलस्तथा ॥१३०॥

जयन्तः श्रुतदेवश्च पुष्पदन्तश्च पार्षदाः ॥
अभिनारायणं निन्युर्नानकं सादरस्मितम् ॥१३१॥

युग्मम्

प्रणिपत्य दण्डवदसौ प्रणयेन
समुदीतसान्द्रपुलकोश्रुपरीतः [3] ॥
अवधाय दूरमपि वेदपदानां
तमवदत्स्फुटमनोरमशब्दैः ॥१३२॥

तं धर्मवन्धोपासनातत्पराणा—
माम्नायानां गोचरं देवमीडे ॥
विद्याविद्ये स्वे पुरस्कृत्य शक्ती
आतन्वानं मुक्तिसंसारलीलाम् ॥१३३॥

---

1. पूर्वोक्तै रेतावद्भिर्गुणैरुपेतः प्रेमस्मेरमुखस्त्रिलोकीपतिर्यतिपतेर्नानकस्य लोचनगोचरो भूदित्यन्वयः ।
2. कुलकेऽस्मिन्वैकुण्ठनाथं प्रति नानकस्य नमस्कारवर्णनं विद्यते । दूरादेव यतिर्नानकस्तं विष्णुमनमत् ।

१. दूरादेवानमद्यति.—ख०
२. विष्वक्—क०
३. श्रुपरीतः—ख०

देवास्ते ते यज्वनां पूरयन्ति
कामांस्तुष्टाः कर्मभिस्तैश्च तैश्च ॥
यज्वा यज्ञो देवता च त्वमेव
लीलामात्रं वास्तवोऽयं न भेदः ॥१३४॥

अव्यक्तादीन्हेतुमाहुर्भवस्य
ब्रह्माणं वा ये मनुं चेतरे वा ॥
ते त्वन्मायामोहिता विस्मरन्तः
सर्वादिं त्वां बद्धविस्तीर्णवादाः ॥१३५॥

जीवान्नानायोनिभाजो विमूढान्
स्वर्गं श्वभ्रं वानयन्नीश्वरस्त्वम् ।
नोपालम्भ्यस्तत्कृतस्यानुसारी
चित्रं ! क्रीडाकौतुकं कौशलं ते ॥१३६॥

धर्मापोहाद्वस्तुमात्रं ब्रवीति
वेदस्तत्त्वं तावकं निर्विकल्पम् ।
त्वय्यारोपात्संसृतेस्त्वापदाथ—
चैतन्यं त्वं शुद्धमेवावशिष्टम् ॥१३७॥

जीवो मिथ्यावासनावेशवश्यो
यावद्भिन्नस्तावदाप्नोति दुःखम् ॥
त्वामात्मानं ज्ञानदृष्ट्या तु पश्यन्
स्वस्मिन्नेतान्संस्मरन्निर्वृणोति ॥१३८॥

---

१. भेदाः—भ०
२. भवानि—स०

मायाशक्तिस्तावकी यद्गुणाढ्यो[१]
ब्रह्मा[1] विष्णू रुद्र इत्युच्यसे त्वम् ।
जन्मस्थित्युन्माथकर्ता भवस्य
भासि ब्रह्मन् ! निर्गुणो निष्क्रियश्च ॥१३९॥

आनन्दस्ते तावकी चैव सत्ता
लोके भातः सर्वलोकाश्रयस्य ॥
मायामात्रं नामरूपप्रपञ्चो
मिथ्या यद्वत्सैकते वारिधारा ॥१४०॥

यावन्न त्वां वीक्षते तावदेव
मायामात्रं तावतीयं तनोति ।
दृष्टो मायां संहरस्यङ्ग तूर्णं ?
धन्यो धन्यो मायिकस्त्वं सलज्जः ॥१४१॥

हित्वा सर्वं ये भवन्तं प्रपन्नाः
कालध्वस्तं पौरुषं वीक्ष्य जन्तोः ।
तेषां चिन्तामैहिकामुष्मिकाणां
कृत्यानां त्वं भृत्यबन्धो ! जहर्थ ॥१४२॥

ब्रह्माण्डानां नाशकर्ता निमेषा—
न्नानारूपैर्हंसि दैत्यांनुपायैः[२] ।
क्रीडामात्रं सम्भ्रमः कल्पितेभ्यो
बालस्येव क्रीडनेभ्यस्त्वदायम् ॥१४३॥

---

१. न्यो—क०

1. नामप्रपञ्चो ब्रह्मविष्णूरुद्रेत्यादिनामवैविध्यम् ।
रूपप्रपञ्चो मत्स्यकूर्मेत्यादिरूपवैविध्यम् ।

२. नुपायै —क०

धर्मं रक्षंस्तद्विहन्तॄन्विनिघ्नन्
यत्त्वं धत्से मत्स्यकूर्मादिरूपम् ।
स्वैरं गेहे त्वत्कथाः कथ्यमाना
नॄणां तापानाशु निर्वापयन्ति ॥१४४॥

नीरूपं त्वा निर्गुणं गाहमानाः
'श्रान्ता भक्तान् यत्र सुन्मुक्तसीमम् ॥
मेघश्यामे पूर्णचन्द्राननेऽस्मिन्
शोभासिन्धौ स्नान्ति शीते स्वरूपे ॥ १४५॥

चिन्तारत्नं चिन्तकानां जनानां
लक्ष्मीपाण्योः सौकुमार्यस्य साक्षि ॥
योगीन्द्राणां हृत्सरोजा लयन्ति
दुःखध्वंसं पादपद्मं प्रपद्ये ॥१४६॥

स्वर्वेदीनां मानसोल्लासकारी
कस्त्वत्तोन्यः ? पाञ्चजन्यस्वसन' ?॥
दैतेयानां दुर्मदानां मृधेषु
स्तम्भान् कुर्यात् कः करानुद्यतासीत् ? ॥१४७॥

श्रान्तः स्मृत्वा हन्त ? दन्तावलस्त्वां
सद्यो रक्षामार्छ दुग्रावहारात् ॥
नूनं हीनाहं कृतिर्यो भवन्त्वं
मुञ्चेन्मुञ्चेस्त्वं नतं दीनबन्धो ? ॥१४८॥

त्रैलोक्यं त्वं वामनीभूय यत्ना-
दिन्द्रस्यार्थे दैत्यराजाज्जहर्थ ॥

---

I. नीरूपं त्वां गाहमानाः कदाचित् सगुणं तव पूर्णचन्द्राननं दृष्ट्वा खेदं विस्मरन्तीति भावः।

१. मेघ—क॰

त्वद्भक्तानां गौरवं भावि येन
नूनं [१]तस्मिँल्लाघवेऽप्यादरस्ते ॥१४९॥

[२]उद्वृत्तानां दानवानां शिरांसि
छित्वा संख्ये सद्गतिं [३]राति तेभ्यः ॥
देवानां तु म्लानिभाजां प्रमोदं
त्वच्चक्रं त्वद्दर्शनं मुष्टुतस्य ॥१५०॥

पापध्वान्तध्वंसने [1]द्वादशात्मा
सर्वार्थानां पूरणो कामकल्पम् ॥
[४]दृतोचाटे सिद्धमन्त्रो यमस्य
त्वन्नाम स्यान्मे रसज्ञाग्रवर्ति ॥१५१॥

सिद्धैर्ध्यानं नारदाद्यैरजस्रं
[५]सुत्रामाद्यैरर्चितं स्वार्थसिद्ध्यै[2] ॥
भक्तक्लेशाम्भोधि कुम्भोद्भवं ते
पादाब्जं मे मानसे शश्वदास्ताम् ॥१५२॥

मौलिर्नित्यं त्वां नमन्मे मुरारे!
मूर्तिं नेत्रे तावकीं पश्यतां च ॥
हस्तौ स्यातां त्वत्सपर्यासु सक्तौ
पादौ च त्वत्तीर्थयात्रापवित्रौ ॥१५३॥

---

1. द्वादशात्मा दिवाकरो यथा ध्वान्तं नाशयति तथैव त्वं पापध्वान्तं ध्वंसयसीति।
2. दक्षिणः पार्श्वं यदि तस्य स्वर्पपुनेऽकरोस्त्वं तदा मम भक्तस्य कथं न करिष्यसीति भावः।

१. तस्मिन् स्त्वा—क०
२. बद्वृत्तानां—क०
३. याति—च०
४. दुपुतो—क०
५. सुत्रामाद्यैः—स०

लक्ष्मीं वेदं वन्दितां सर्वदेवै-
स्त्वल्लावण्याम्भोधिमग्नां मुरारे ॥ ?
याऽमुञ्चन्ती चञ्चलत्वं परत्र[1]
ध्रौव्यं धत्ते त्वद्गुणौघेन बद्धाम् ॥१५४॥

कान्तिः किन्ते सर्वनीलोत्पलानि
त्यक्त्वा मूर्तिं संश्रिता श्रीरिवेयम् ॥
एकश्चन्द्रो[2] ह्रासवृद्धी विहाय
किं त्वद्वक्त्रव्याजतो ? राजतेऽङ्ग ? ॥१५५॥

भक्तत्राणे यस्य जागर्ति चक्रं
यस्याह्वानादापदो यान्ति नाशम् ॥
यस्य स्मृत्या मङ्गलान्युल्लसन्ति
स श्रीकान्तः पातु मां सर्वभीतेः ॥१५६॥

ब्रह्मावाणी शेषनागः सुरेज्यो
नालं वक्तुं कृत्स्नशो यद्गुणौघान् ॥
पारं यायात्कः ? परस्तन्महिम्न-
स्तस्मात्तुभ्यं देवनित्यं नमोऽस्तु ॥१५७॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
भगवत्स्तुतिर्नाम त्रयोदशः प्रस्तावः

---

1. प्रस्तावेऽस्मिन् नानकद्दनविश्वगुरुस्तोत्रमतीव भक्तिरसगन्धादि राजते । श्लो० १३२ तः १५७ यावत् नानककृतभगवत्स्तुतिः ।

१. तु यत्र—क०

२. एकस्त्वा—क०

३. एवा—क०

## चतुर्दशः प्रस्तावः

या पुस्तकं वहति हस्तविशप्रस्नैः-
भक्तामयं परमथो जपमालिकाञ्च ॥
सिन्दूरसुन्दरविसारिशरीरशोभा
सा भारती भवतु मे भवभीतिहन्त्री ॥ १ ॥

इति स्तुतिं यतिऋषभस्य शृण्वता
प्रसीदता मधुमथनेन भावितम् ॥
वरं वृणीष्व[1] मनसि सन्तमुत्तमं
मदीक्षणं न विफलमस्ति नानक ? ॥ २ ॥

पुरे न[2] मे त्वयि धृतिरुद्बभूव[3] मो ?
यतो भवानलभत दर्शनं मम ॥
न कश्चन प्रभवति ? मामुदीक्षितुं
मदिच्छया किल रहितात्स्वपौरुषात् ॥ ३ ॥

विरज्य यो विषयसुखान् सुदुस्त्यजान्
मनो मयि प्रथममतीव दुर्ग्रहे ॥
निवेसयेत्तमहमुदारपौरुषं
वशीकृतः क्षणमपि विस्मरामि नो ॥ ४ ॥

समुक्षितो हरिमुखचन्द्रनिर्गतै-
र्वचोमृतैरिति यतिनायकोऽवदत् ॥

---

१. वृणीस्व-क०
२. पुरैव—क०
३. दद्यभूव-क०

समुद्वहन्[1] पुलकमुताश्रुलोचनो
रमापतेः सदयविलोकनादतः[I] ॥ ५ ॥

इतः परं वरमवशिष्टमर्थये
कमुत्तमं त्रिभुवनकल्पभूरुहात् ? ॥
तपस्यतां नियतहृषीकचेतसां
न जन्मभिर्बहुभिरपि त्वदीक्षणम् ॥ ६ ॥

कृपामिमां मयि कलिकालसम्भवे
चकर्थ यां स्पृहयति देवसंहतिः ॥
न साधनं स्पृहयसि नाम किञ्चन ?
प्रपत्तितः खलु दयसे दयानिधे ? ॥ ७ ॥

न पूजया भुवनपतेः प्रयोजनं
स्तवेन वा निगमनिरूपितस्य ते ॥
निवेदितैर्जलकुसुमैः प्रसीदसि
स्तुतो जनैस्तदपि विसंष्ठुलैः पदैः[2] ॥ ८ ॥

विमोहणं भवतु न मायया मम
त्वदीयया जनमृगवागुरा हि या[3] ॥
पदाब्जयोस्तव रतिरस्तु शाश्वती
विमुक्तिदा सकलजनस्य या शुभम् ॥ ९ ॥

तव ? प्रियाः सुरवर ? कीदृशा जना ?
जनुर्जनः क्षपयतु केन वर्त्मना ? ॥

---

I. हरिमुखकमलनिर्गतं वचः श्राव श्रात्रं प्रनिपत्य पुनरारभत विष्णुस्तवम् ॥

१. समुद्दहन्—क०

२. पदैः—क०

३. वागुरापि—क०

मुमुक्षुणा कथय कथं विचार्यतां ?
विमुक्तिभाग्भवति च कीदृशः पुमान् ? ॥ १० ॥

ममार्थनाः सफलय नाथ ? कः परः ?
प्रबोधयेद् [1]भवत ऋते विचक्षणाः ॥
परस्परं श्रुतकलहेन भूयसा
प्रतिक्षणं कलिलमतिः कलौ किल ॥ ११ ॥

[2]प्रसेदिवानथ निजगाद माधवः
पुरैव ते विहितमिदं ममेप्सितम् ॥
न मायया व्रजतु विमोहनं जनो
यमिच्छसि त्वमुपदिशस्यथापि वा[3] ॥ १२ ॥

विरोधितां वदति न कुत्रचिज्जने ?
व्यसर्जयत्खलु ममतामहङ्कृतिम्[१] ॥
समः सुखे य उरुणि दुःखसङ्कटे
क्षमीमपि प्रहितमनो मनीषकः ॥ १३ ॥

न तापयेज्जनममुतो न तप्यते
विषीदति क्वचन न मोदते नयः ? ॥
गतव्ययः शुचिरनपेक्षकः सदा
विसर्जितोऽपि च सकलैरुपक्रमैः ॥ १४ ॥

समो रिपौ सुहृदि विमानमानयो-
र्विनिन्दने स्तवनविधौ च यः समः ॥

---

1. ऋते योगे पञ्चमी।
2. प्रसेदिवान् = प्रसन्नोऽभूत्।
3. १२: १८ यावत् विष्णोर्नानकं प्रत्युपदेशात्मकम्।

१. महंहृतौ—ख०
२. समा—क०

सुतोषितो भवति च येन केनचिन् ?
मम प्रियः स हि दृढभक्तिभावितः ॥ १५ ॥

त्रिभिर्विशेषकम्

स्वप्नोपमं सुतसुहृद्धनदारसङ्गं
पश्यन्न तत्र महतीं रतिमादधानः ॥
प्रारब्धभोगसमये गतहर्षशोको
मां संस्मरन् जनुरिह क्षपयेन्मनीषी[1] ॥ १६ ॥

विषयदोषविचिन्तनमन्वहं
प्रथममेव मुमुक्षुरुपाश्रयेत् ॥
शिथिलशक्तिमनोविषयेषु चेद्
भवति तत्त्वविचारसमञ्जसम् ॥ १७ ॥

क्षणे क्षणे विश्वमिदं विलोक्य
वियोगसंयोगविपत्तिरिद्धम् ॥
अनश्वरस्यात्मसुखस्य लब्धै-
र्मयि प्रपत्तिं पुरुषो विदध्यात् ॥ १८ ॥

आत्मास्तिबुध्यादिजडप्रकाशकः
स्वतः प्रकाशो नियतं प्रदीपवत् ॥
विलक्षणो दारुषु सन्निवानलः
[2]कश्चित्तदीयं गुणमाश्रयन्नपि ? ॥ १९ ॥

मायागुणैर्विरचिते पुरुषस्य सूक्ष्म-
स्थूले वपुष्यहमिति भ्रम एव बन्धः ॥

---

1. त्रिभिर्विशेषकेऽस्मिन् विष्णुर्नारदं ब्रूते उपदिशति च यत् जन सर्वदैव धनहर्षशोके भगवन्तं प्रपत्ति विदध्यादिति ।

१. शुपादि—क०

२. क्वचिन्—ख०

तस्योपकारिणि कुटुम्बगणे घने वा
ग्रन्थिर्ममेति मतिरेव सुदुर्विभेदः[1] ॥ २० ॥

आनन्दबोधमधिगम्य मम स्वरूपं
स्वस्याप्यभेदमयुतः[2] कलयेत धीरः ॥
भिन्नाः परस्परमिमे परमात्मनश्च
जीवा उपाधिवशतो [3]ननु वस्तुगत्या ॥ २१ ॥

बन्धमोक्षव्यवस्थैषां[4] वैलक्षण्यं परस्परम् ।
उपाधियोगहानाभ्यां तद्भेदाच्चापि [5]सिद्ध्यति ॥ २२ ॥

प्रतिबिम्बितः पयसि शीतदीधिति—
र्मलिनश्चलस्तदनुसारतो भवेत् ॥
प्रतिबिम्बितेषु यदुपाधिसंक्षयः
शशिना स ऐक्यमुपयान्ति ते नरः ॥ २३ ॥

उपाधिरन्तः करणान्यविद्यावास्य नानक ! ॥
तदावेशादसौ मिथ्या स्वप्नेष्विव विषीदति ॥ २४ ॥

यो बाल्ययौवनजराविकृतेऽपि देहे
जानाति सोऽहमिति जागरणं च सुप्तिम्[6] ॥
वेत्ता सुषुप्तिमपि यः करणैर्हृदा च
बुद्ध्या स एव पुरुषो न मृतो न जातः ॥ २५ ॥

---

१. बंधः—क०
२. भभितः—ख०
३. ननु—क०
४. स्यैषा—ख०
५. सिध्यति—क०
६. सुषुप्तिम्—ख०

ब्रह्माद्वितीयचिदयं सुखमप्रमेयं
मेदस्ततोऽस्य बत वासनया बभूव ॥
तन्नाशमाशु कलयेद्गुरुवेदवाक्यैः
सङ्गैः [1]सतां स्वमनसा मनसादिभिश्च ॥ २६ ॥

तत्त्वज्ञानं मनोनाशं वासनाक्षयमेव च ॥
[1]मुमुक्षुर्व्यवसायेन स्वेन सम्पादयेत् त्रयम् ॥ २७ ॥

इदं सर्वं द्वैतजातमद्वितीये चिदात्मनि ॥
मायया कल्पितं सोऽहमिति तत्त्वमतिर्मता ॥ २८ ॥

वृत्तिसन्तानरूपेण परिणामि मनः स्मृतम् ॥
निरोधः सर्ववृत्तीनां मनोनाश[2] उदाहृतः ॥ २९ ॥

हेतुः क्रोधादिवृत्तीनां संस्कारश्चिरगो[2] दृढः ॥
वासना तत्क्षयो ज्ञेयः क्रोधादीनामनुद्भवः ॥ ३० ॥

मिथः कारणकार्याणामेतेषां साधनं पृथक् ॥
[3]श्रवणादित्रयं तत्त्वज्ञानसाधनमीरितम् ॥ ३१ ॥

योगोऽष्टाङ्गो मनोनाशे कारणं गुर्वनुग्रहात् ॥
प्रतिकूला वासनैव वासनाक्षयकारणम् ॥ ३२ ॥

---

1. मुमुक्षुस्तत्त्वज्ञान मनोनाश वासनाक्षयरूपेतत्त्रयम्
स्वेन व्यवसायेन स्वावमायात्मिकया बुद्ध्या वा सम्पादयेदिति ॥

2. श्लोक सं० २८ सं० ३० यावत् पूर्वोक्तानि त्रीणि वस्तूनि वर्णितानि सन्ति ।

3. श्रवणमननर्निदिध्यासनम् ।

१. स्वतां–ख०

२. श्चोद्गत –ख०

[1]वासना द्विविधा ज्ञेया शुद्धा च मलिना तथा ॥
शास्त्रसंस्कारसम्भूता दैवी संपत्सुपुण्यजा ॥ ३३ ॥

साधनं तत्त्वबोधस्य शुद्धैका वासना मता ॥
त्रिविधा मलिना लोकशास्त्रदेहभ्रमेदजा ॥ ३४ ॥

इमा बाह्या आन्तरी तु मानसी सम्पदासुरी ॥
अनर्थकारिणी कामक्रोधदर्पादिरूपिणी ॥ ३५ ॥

श्रयेत तत्त्वबोधाय मुमुक्षुः शुद्धवासनाम् ॥
बाह्यामाभ्यन्तरीं दुष्टां मलिनामपवर्जयेत् ॥ ३६ ॥

प्राणस्पन्दनिरोधार्थमभ्यस्येत् प्राणसंयमम् ॥
वासनानां विमर्दार्थं वैराग्यं परिशीलयेत् ॥ ३७ ॥

विषयामिषाणि विधिनोपनतानि
कर्मैरदन्ननभिमत्य विरक्तः ॥
खमिवार्यमेव पवना न इवात्र
प्रकृतिस्थितोऽपि न स सङ्गमुपैति ॥ ३८ ॥

जड इव विचरेद्विशेषविद्वान्
परगुणदोषनिरूपणेषु मूकः ।

---

1.



वितथमिति च हर्षशोकशून्यो
हितमहितं स्वयुदीक्ष्य कालपक्वम् ॥ ३९ ॥

यद्यकल्पो मनो रोद्धुं परब्रह्मणि निर्गुणे ॥
समर्थ्यं सर्वकर्माणि मां भजेन्निरहङ्कृतिः ॥ ४० ॥

दारापत्यसुहृद्धनेषु वपुषि स्वे यैरनास्था कृता
मय्येवा सक्तता चिराय मनसा ते साधवो मत्प्रियाः ।
तैः सङ्गं विमदो विधाय हृदये मां भक्तितो भावयन्
मत्प्रेमालसमानसो मम कथाः शृण्वन्कृतार्थो जनः ॥ ४१ ॥

[1]स्त्रीशूद्रपक्षिपशवःसु सुरराक्षसाश्चेद्
भक्त्या ममातिमहतीं गतिमापुरङ्ग ! ॥
किं न द्विजाः सुकृतलब्धकुलाः ! कुलाय-
मेतं विहाय मम धाम समाश्रयेरन् ॥ ४२ ॥

शृणु नानक ! मुक्तस्य लक्षणं त्वमतः परम् ॥
प्रारब्धनिहितं देहं दधतो ममता विना ॥ ४३ ॥

ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ॥
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥ ४४ ॥

सत्त्वापत्तिश्चतुर्थीस्यात्ततो ससक्तिनामिका ॥
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ ४५ ॥

श्रवणं मननं सौम्य ! निदिध्यासनमेव च ॥
भूमिका त्रितयं त्वाद्यं तत्र जाग्रदिति स्थितम् ॥ ४६ ॥

अद्वैते स्थैर्यमायाते द्वैते प्रशममागते ॥
पश्यन्ति स्वप्नवल्लोकं चतुर्थी भूमिकामितः ॥ ४७ ॥

---

१. सुर—क०

पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ॥
षष्ठीं गाढसुषुप्ताख्यां क्रमात्पतति भूमिकाम् ॥ ४८ ॥

षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ॥
किञ्चिदेवैषसम्पन्नस्त्वथवैष न किञ्चन ॥ ४९ ॥

विदेहमुक्तता तूक्ता [1]सप्तमीयोगभूमिका ॥
अगम्या वचसां शान्ता सा सीमा योगभूमिषु ॥ ५० ॥

चतुर्थीभूमिकाज्ञानं तिस्रः स्युः साधनं पुरा ॥
जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः ॥ ५१ ॥

ज्ञानस्य भूमिकास्तिस्रश्चरमाः क्रमतोऽव्रजन् ॥
परमानन्दनिस्पन्दो मुक्त इत्युच्यते बुधैः ॥ ५२ ॥

अत्रैव निष्क्रियमसौ पुरुषो विमुक्तः
प्रारब्धतो वपुरमुष्य विलुप्यमाणम् ॥

भक्तस्य वस्त्रमिव निर्ल्वयनीव ।चाहे-
र्वल्मीकगानममताविषयः कदापि ? ॥ ५३ ॥

दिङ्मात्रमेतदुदितं तव नानक ! त्वं
जानासि तत्त्वमखिलं मनसा श्रुतैश्च ॥

---

1. ज्ञानभूमिः सप्तविधा—i. शुभेच्छा ii. विचारणा iii. तनुमानसा
iv. सत्वापत्तिः v. संसक्तिः vi. पदार्थाभावनी
vii. तुर्यगा ॥

तत्र प्रथमभूमिकायां श्रवणं द्वितीयायां मननं तदा निदिध्यासनं जायते चतुर्थ्यां सत्वापत्तौ लोकं स्वप्नवत्पश्यन्ति जनाः इत्थं च सप्तम्यां प्राप्तौ यजन्तो जना. मुक्ता जायन्ते ॥

१. निर्ल्वं—क० सर्पस्यत्यक्तं चर्म "केंचुली"

अंशोऽसि मे कलियुगे कलयस्व बोधं
मार्गेण मूढमनसां सुगमेन सौम्य ! ॥ ५४ ॥

जन्मान्तरेषु कृतसाधनसम्पदो ये
त्वामाश्रितास्त्वदुपदेशगिरं निशम्य ॥
पास्यन्ति तेधिततत्त्वधियो विमुक्ति—
मित्यर्थमेव तव भूमितलेवतारः ॥ ५५ ॥

एतद्धि दण्डविधृतिः स्मृतिभिर्निषिद्धा
वैखानस ! त्वमपि नैष्ठिकतापि सौम्य ! ॥
स्वस्थानकर्मठतया सततं गृहस्थाः
शैवेषु वैष्णवजनेषु महान् विरोधः ॥ ५६ ॥

उदासीनः समस्तेषु मतेषु ब्रह्मवित्तया ॥
उदासं नाम सन्यासं तस्मादङ्ग ! प्रवर्तय ॥ ५७ ॥

[1]न जटासु न मुण्डत्वे न विभूतौ न चन्दने ॥
दिगम्बरत्वे वसने नाग्रहः स्यादुदासिनाम् ॥ ५८ ॥

नेपथ्यमात्रेण भवन्ति नार्या
गुणैर्विहीनस्य कदापि सौम्य ! ॥
मूल्यं लभन्ते न पयो विहीना
गावः समन्ताद्गलबद्धघण्टाः ॥ ५९ ॥

आस्थापरब्रह्मविदां न लोके
यथा तया वाऽस्त्विति बुद्धिमाजाम् ॥

---

1. उदासं नाम सन्यासं प्रवर्तयितुं भगवदवतारः कलियुगे । परं तत्र संन्यासिनो जटाद्याग्रहो न भवेदिति भगवदुक्तिः ॥ अत्रविषये कविः गुणैर्विहीनस्य गवां दृष्टान्तं ददाति । उदासिनामस्वात्मचिन्तनम् इति नास्ति तेषां कृते नेपथ्यस्यावश्यकता ।

२. मूह—क०

निर्वैरता सर्वमतेषु तस्मा-
दुदासिनामात्मविचिन्तकानाम् ॥ ६० ॥

शिष्यास्तु केशान्बिभृयुः सदैव
शस्त्राणि च म्लेच्छनिवारणाय ॥
ग्रन्थेगुरौ चास्तु परैव भक्ति-
र्देवे द्विजे त्वन्मतसंस्थितानाम् ॥ ६१ ॥

उपासतां ब्रह्म भवन्मतस्था
निवृत्तिमार्गैकरसा भवन्तु ॥
न यन्तु वैराग्यविरोधिकर्म
स्मार्तेन मार्गेण तदा चरन्तु ॥ ६२ ॥

भवन्तु तीर्थानि कृताश्रमाश्चे-
दातिथ्य मायातजनस्य कुर्युः ॥
प्रियम्वदाः सन्तु सदैव मान्याः
सर्वत्र सर्वस्य नये स्थितास्ते ॥ ६३ ॥

शाखोपशाखाभिरिदं त्वदीयं
मतं ततं भावि भवे भवेयुः ॥
सिद्धाः प्रसिद्धा बहवस्तथास्मिन्
दिगम्बरा ज्ञानिधुरन्धराश्च ॥ ६४ ॥

रौद्राक्षी पौत्रजीवी वा प्रायो माला[1] प्रशस्यते ॥
मन्त्रः कालत्रये ब्रह्मसत्यताप्रतिपादकः ॥ ६५ ॥

दासान्तं वापि रामान्त गुरुब्रह्मपदाङ्कितम् ।
नामत्रयाप्यनियम औदासीन्यं हि सर्वतः ॥ ६६ ॥

1. न्माला-क०

ग्रन्थास्ते भाषया सन्तु मन्दानां प्रतिपत्तये ॥
पात्रेण येनकेनापि पयः पानं हि तृप्तिदम् ॥ ६७ ॥

किमधीतैर्महाग्रन्थैरभिमान[1]विवर्द्धनैः[2] ॥
भक्तिर्न मयि चेज्जाता प्रयातानाप्यहं मतिः ॥ ६८ ॥

सन्त्येव सर्वोपनिपत्प्रबंधाः
सूत्राणि भाष्याणि तदर्थकानि ॥
स्त्रीशूद्रबोधाय च बालिशानां
ज्ञानाय नानावचनैर्यतस्व ॥ ६९ ॥

भाषाग्रन्थधान् भवता प्रणीतान्
ये भक्तिवैराग्यविबोधदातॄन् ॥
पठेयुरेते कृतिनो भवेयु-
र्भ्रश्यन्तु निद्वेषकरा नरा ये ॥ ७० ॥

त्वन्मतस्थः परो वापि यस्त्वां नानक ! पूजयेत् ॥
तस्य[1] सिध्यन्तु सर्वेऽर्थाः श्रद्धाविश्वाससम्पदा ॥ ७१ ॥

क्षेत्राणि ते जन्म विहारगोष्ठी
कृतानि ये यान्ति नराः पृथिव्याम् ॥
समृद्धकामा गतपा यदीपा
स्तोपाय मे ते प्रभवन्ति सन्तः ॥ ७२ ॥

तथा यतस्व[2] योगीन्द्र ! ग्रामे ग्रामे गृहे गृहे ॥
यथाखण्डचिदानन्दकथा ऋज्वी प्रवर्तते ॥ ७३ ॥

---

1. नानकपूजया फलश्रुतिरत्र ।
2. नानकं नानकधर्मप्रचारायोपदिशति विष्णुः ।

१. विवर्द्धनैः—क०
२. नियन्पनैः—ख०

तारणाय जगतो गतो भवान्
पाहि तत्कुरु हित हितं नृणाम् ॥
आगमिष्यसि मृतोऽमृतो[1] निशं
सीदतो वनमतो मतोचितान्[2] ॥ ७४ ॥

इत्थं प्रमद्य वदतः पुरुषोत्तमस्य
पादारविन्दतुलसीं सिरशा दधानः ॥
आमन्त्र्य नानकमुनिर्निरगात्प्रसन्न-
स्तत्पार्श्ववर्तिविबुधैरभिनन्द्यमानः ॥ ७५ ॥

आजगाम ततो योगी वैकुण्ठादीशसत्कृतः ॥
ध्रुवस्य लोक आवाम्यां नतः स्मेरमुखाम्बुजः ॥ ७६ ॥

ततः प्रसन्नं तमुदीक्ष्य धीरं[3]–
ध्रुवोऽवदद्विष्णुरुदीक्षितः किम् ? ॥
कीदृग्विधः किं परिवार आस्ते ?
किमावभाषे ? सविधे गतं त्वाम् ॥ ७७ ॥

योगीन्द्रोऽवददीश्वरः स जगतां कर्ता तथा रक्षिता
संहर्ता रविकोटिदीधितिरपि स्वेषां सदा शीतलः ॥
ब्रह्माद्याः सनकादयः सुरमुनिव्राताः सुराधीश्वराः
सेवन्ते श्रुतिभिः स्तुवन्ति च दयादत्ताः[4] प्रवेशाः क्वचित् ? ॥७८॥

तल्लावण्यविमोहिताजलधिजा चेचामरग्राहिणो
केन श्रीरुपमीयतां ? नवघनश्यामस्य तस्यातुला ॥

---

१. मृतोमृतो–क०
२. यथो–क०
३. धीरो–ख०
४. दयादत्तप्रवेशा –ख०

ऐश्वर्यं कलयस्व गोपुरागतो दौवारिकप्रार्थना
प्रह्वस्तिष्ठति सर्वदेव निवहैरुद्धस्तु वृद्धश्रवाः ॥ ७९ ॥

आहूय[1] स्वान्तिकं देवो दयादृष्ट्या व्यलोकयत् ॥
स्तुतः प्रश्नान्ममावोचदुदासिमतमादिशत्[2] ॥ ८० ॥

दृष्टस्त्वयापि सुलभः स हि भक्तिभाजां
बाल्ये तुतोष तव तीव्रतपस्यया यः ॥
तस्यारविन्द नयनस्य निरीक्ष्यरूप-
मस्माभवमनृणकोऽहमहो! कृतार्थः ॥ ८१ ॥

ध्रुवोऽवदत्तमीशानमित एव विलोकये
सनिरावरणं ज्योतिरहमस्मि स एव च ॥ ८२ ॥

स च सर्वांश्च 'यदेक[1] इहस्थित-
स्तदधिकारधरोसि'[2] तदा कुतः ? ॥
अभिदधाविति मर्दननामको
ध्रुव उवाच वचः शृणु मर्दन ? ॥ ८३ ॥

लीलेयं सृष्टिरीशस्य तन्निर्वाहाधिकारिणः ॥
ब्रह्माद्या अहमप्यङ्ग ? व्यवहारे पृथक् कृताः ॥ ८४ ॥

तं नानकोत्र वयं भजाम
आमन्त्रयामो ध्रुव ? हेमवन्तम् ॥
दयादृशा पश्य जनार्दनस्य
त्वं व्यापकं पश्यसि रूपमङ्ग ॥ ८५ ॥

---

१. आहूयैव—क०
२. दुदासि—क०
१. यदेव—क०
२. कारधरोसि—क०

ध्रुवोऽवदद् ध्रुवमसि वैष्णवी कला
कलावमून्कृतसुकृतान्कृतार्थयन् ॥
अवातरस्तरणिरिव प्रकाशय
स्व तेजसा तिमरमुदस्य सत्पथम् ॥ ८६ ॥

इदं पदं यदि रुचितं कृतार्थय
क्षितेः शुभा यदि नियतिस्तदाऽस्तु तत् ॥
खलो मिलन् व्यथयति सज्जनः सतो
विबाधते खलु विभजंस्तु मादृशः ॥ ८७ ॥

प्रणेमतुः प्रीतियुतौ परस्परं
चिराय राजर्षिवरौ सुसङ्गतौ ॥
स्थितस्तदेकः स्वपदे विपण्णधीः[1]
परो जगाम क्षितिलोकमुन्मना ॥ ८८ ॥

सर्वमाचष्ट वैकुण्ठे सम्वादं शार्ङ्गधन्वनः ॥
आवाभ्यामध्वनि शनैर्योगी स्वजनवत्सलः ॥ ८९ ॥

आत्रामाकर्ण्य गोविन्दगदितं विस्मतावुभौ ॥
भूगोलस्य खगोलस्य स्थितिं पप्रच्छ मर्दनः ॥ ९० ॥

गुरुः सर्वज्ञमूर्धन्यो धन्यो गोविन्ददर्शनात् ॥
सप्रमाणं ससस्थानं स्थानं [2]तत्तद्वर्णयत् ॥ ९१ ॥

स्थूलं रूपमिदं हरेर्भगवतो मायागुणैः कल्पितं
ब्रह्माण्डानि विलक्षणानि[1] विविधैर्जीवैर्निविष्टानि च ॥

---

१. ष्य-क०
२. तत्तद्वर्णयत्-क०

कः कार्त्स्न्येन विदाङ्करोतु तदिदं मोहो हि यस्मिन् विदां
तुभ्यं मर्दन? कोविदे तदपि भोः शुश्रूषवे किञ्चन ॥ ९२ ॥

मायामये भगवतो वपुषुपि त्रिलोक्यां
चित्तं स्थिरं सहति सूक्ष्ममपि ग्रहीतुम् ।
स्थूले क्वचित्स्थिरकरः प्रथमं शरव्ये
धन्वीसु सूक्ष्ममपि विध्यति सायकेन ॥ ९३ ॥

लक्षयोजनविस्तारो जम्बूद्वीपोऽयमुच्यते ॥
वर्तुलो नववर्षाणि तस्मिन् भिन्नानि पर्वतैः ॥ ९४ ॥

योजनानां सहस्राणि नवसप्तसुविस्तृतिः ॥
भद्राश्वे केतुमाले च चतुस्त्रिंशदिति स्थितिः ॥ ९५ ॥

धनुर्वस्तं स्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे ॥
दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ॥ ९६ ॥

कमलमिव धरातलं वदन्ति-
र्ललितमिलावृत मत्र कर्णिकेव ॥
कनकगिरिरुपाश्रितः सुरोच्चै-
र्विलसति योजनलक्षतुङ्गशृङ्गः ॥ ९७ ॥

योजनानां सहस्राणि द्वात्रिंशच्चास्य मूर्धनि ॥
मूले षोडशविस्तारः प्रविष्टस्तावता महीम् ॥ ९८ ॥

सहस्रैर्वेदवसुभिर्योजनानां बहिः स्थितः ॥
इलावृतस्योत्तरत्र रम्यके नीलपर्वतः ॥ ९९ ॥

हिरण्मये श्वेतगिरिं शृङ्गवान्कुरुवर्षगः ॥
क्षीरोदावधयो दीर्घाः प्राच्यां सीमा महीधराः ॥१००॥

---

१. विलक्ष–च०

I. श्लोक ९४ त १४२ श्लोक यावत् अर्थात् सर्गान्त यावत् भूगोलादि वर्णनं कृतमस्ति ॥

इमे त्रयस्तथोत्तुङ्गा योजनायुतसंख्यया ॥
विस्तीर्णा द्विसहस्रा च योजनानामुदाहृताः ॥१०१॥

निषधोद्रिर्हरिवर्षे
किंपुरुषे हेमकूटाख्यः ॥
हिमशैलोऽपि[1] च भारत–
इलावृतो दक्षिणे भागे ॥१०२॥

विस्तृतिस्तुङ्गतावैषां नीलाद्रिवदुदाहृता ॥
माल्यवान्पश्चिमे भागे पुरस्ताद् गन्धमादनः ॥१०३॥

इलावृतस्य ग्रावाणां[1]
वानीलनिषधायतौ ॥
केतुमालं च भद्राश्वं
परिच्छिद्य स्थितावुभौ ॥१०४॥

योजनानां सहस्रे द्वे
विस्तीर्णौ परिकीर्तितौ ॥
दिक्षु मेरोरूपष्टम्भा[2]
मंदरो मेरुमन्दरः ॥१०५॥

सुपार्श्वः कुमुदश्चैवायुतयोजनविस्तृताः ॥
चूतजम्बूकदम्बाश्च न्याग्रोधस्तरवः क्रमात् ॥१०६॥
एकादशशतान्येषु योजनानि समुन्नताः ॥
पयोमध्विक्षुरससज्जलपूर्णह्रदा अपि ॥१०७॥

---

१. शैली–ख०
१. धावाणां–क०
२. पृम्भो–क०

वनानि नन्दनं चैत्ररथं वैभ्राजसंज्ञकम् ॥
सर्वतो भद्रसंज्ञं च क्रमात्तत्र नमः सदाम् ॥१०८॥

अरत्नीनां शतान्यष्टावेकषष्ठ्याधिकानि च ॥
मानं मन्दरमाकन्द फलस्य परिकीर्तितम् ॥१०९॥

अरुणोदा नदी याति रसालरससम्भवा
इलावृतस्य पूर्वस्यां दिशि मन्दरतोयुता ॥११०॥

गिरिजानुचरीस्तस्याः पिबन्ती रसमुत्तमम् ॥
स्पृशन्वासयते वातः समन्तादशयोजनम् ॥१११॥

जम्बूफलानां मानङ्गसदृशां स्यन्दते रसैः ॥
मेरुमन्दरतोजंबूनदीलावृतदक्षिणे ॥११२॥

तस्या रसा सेकवशान्मृत्तिकारोधसोर्द्वयोः ॥
शुष्कासमीरसूर्याभ्यां जाम्बूनदमुदीर्यते ॥११३॥

कदम्बकोटराज्जाताः सुपार्श्वशिखराच्च्युताः ॥
वहन्ति मधुनो धाराः पञ्च पश्चादिलावृतात् ॥११४॥

पिबतां ता मुखोद्भूता निश्वासाः शतयोजनम् ॥
आमोदयन्ति सततं मोदयन्ति मनांसि च ॥११५॥

विभाति न्यग्रोधः शतवल्शनामा कुमुदगो
नदास्तस्योदीच्यां विदधति वतेलावृतमभि ॥
जनानांमानन्दं दधिमधुसितादुग्धघृतसत्-
विभूषा वस्त्राद्यैरपि विविधभोज्यैरनुदिनम् ॥११६॥

तद् गृह्णतां नवलयः पलितं जनानां
स्वेदोद्गमो विविधविघ्न भवानचिन्ता ॥
वैवर्ण्यमश्रुजडता त्रिविधो न तापो
दौर्गन्ध्यमिन्द्रियहतिर्न जरा न मृत्युः ॥११७॥

विंशतिः केशराकाराः कुरङ्कुरादयः ॥
सर्वतः पर्वता मेरोः कर्णिकात्र चकासति ॥११८॥

जठरो देवकूटश्च मेरोः प्राच्यां धराधरौ ॥
सहस्रयोजनादग्रे द्विसहस्रं पृथून्नतौ ॥११९॥

अष्टादशसहस्राणि योजनानामुदग्गतौ ॥
पवनः पारियात्रश्च प्रतीच्यां तस्य संस्थितौ ॥१२०॥

कैलाशः करवीरश्च दक्षिणस्यामवस्थितौ
त्रिश्रृङ्गमकरौ तस्मादुदीच्यामुपकल्पितौ ॥१२१॥

मेरौ [1]नवपुराणि स्युर्मनोवत्यमरावती ॥
तेजोवती संयमनी[1] तथा कृष्णाङ्गना[2] परा ॥१२२॥

श्रद्धावती गन्धवती तथाचान्या महोदया ॥
यशोवती च ब्रह्मेन्द्रब्रह्मादीनां यथाक्रमम् ॥१२३॥

विष्णुनामपदाङ्कुष्टं भित्वा ब्रह्माण्डतश्च्युता ॥
मेरुस्थब्रह्मसदने चतुर्धा याति जाह्नवी ॥१२४॥

---

1. मेरौ नव पुराणि—
   (i) मनोवती । (ii) अमरावती ।
   (iii) तेजोवती । (iv) संयमनी ।
   (v) कृष्णाङ्गना । (vi) श्रद्धावती ।
   (vii) गन्धवती । (viii) महोदया ।
   (ix) यशोवती ।

1. मेरस्य ब्रह्मसदनात् जाह्नवीगतिश्चतुर्धा—
   (i) सीता गन्धमादनं गच्छति ।
   (ii) भद्रा चारुनारवं याति ।
   (iii) महाभवा माल्यवन्तं याति ।
   (iv) केतुमाला पश्चिमं सागरं गच्छति ।

१. संयमनी—क०
२. कृष्णाङ्गना—क०

सीता निरश्विसदनाद्गन्धमादनमौलुपी ॥
भद्राश्वमन्तरा प्राच्यां क्षारसागरगामिनी ॥१२५॥

चक्षुर्माल्यवतः शृङ्गं गाहमाना महाजवा ॥
केतुमाला प्रसर्पन्ती पश्चिमं याति सागरम् ॥१२६॥

भद्रा सुमेरुशिखरादुदकागार गामिनी ॥
शृङ्गवन्तमतिक्रम्य प्रविशत्युत्तरान् कुरून् ॥१२७॥

तथैवालकनन्दापि हेमकूटावघट्टिनी ॥
वहन्ती भारते वर्षे दक्षिणं याति सागरम् । १२८॥

यामभि व्रजतः पुंसः पूर्वपुण्यैः पदे पदे ॥
राजसूयाश्वमेधादि यज्ञानां सुलभं फलम् ॥१२९॥

भारते कृत्वे जन्तुर्यच्चु कर्मशुभाशुभम् ॥
द्वीपान्तरे तस्य भोगः स्वर्गे च नरकेषु च ॥१३०॥

वर्षान्तरेषु पुरुषोऽयुतवर्षजीवी
स्वस्वर्गशेषसुखभोगकृतावतारः ॥
नागायुतोऽद्भुतबलो वनितैकगर्भा
त्रेतासमो भवति तत्र समोपि कालः ॥१३१॥

विहरन्ति तत्र वनितासखाः सुरा
विपिषु फुल्लनववल्लिचारुषु ॥
कलहंससारसकृतस्वनास्वलं
मणिदीर्घिकासु विकचोत्पलासु च ॥१३२॥

इलावृते चन्द्रधरः परः पुमान्
शिवा प्रकोपाद्वितरास्तु योषितः ॥
स्तुवन्ति संकर्षणमत्रदैवतं
यशोभिरस्यैव सदा शुभङ्करैः ॥१३३॥

भद्रस्तत्रास्तु भद्राश्चेद्धर्मसूनुः समाहितः ॥
स्तौति सर्वैर्निजजनैर्हयग्रीवं रमापतिम् ॥१३४॥

प्रह्लादो हरिवर्षे
वर्षस्थैः सज्जनैः सहितः ॥
नरहरिमुज्ज्वल यशसं
भक्त्या रोमाञ्चितः स्तौति ॥१३५॥

केतुमालेऽपि भगवान् कामदेवो हरिः श्रिया ॥
स्तूयते रुचिरालापस्मितालोकमनोहरः ॥१३६॥

रम्यके च मनुः स्तौति मत्स्यरूपिणमीश्वरम् ॥
तद्दर्शपुरुषैः सर्वैः पुरा तस्मै प्रदर्शितम् ॥१३७॥

हिरण्मये च तिष्ठन्तं कूर्ममूर्तिं मधुद्विषम् ॥
वर्षस्थैः पुरुषैः स्तौति पितृणां पतिरर्यमा ॥१३८॥

उत्तरेषु कुरुषु स्थितो हरिः
सौकरं मखमयं वहन् वपुः ॥
स्तौति तं वसुमती समन्विता
वर्षवासिपुरुषैः प्रहर्षितैः ॥१३९॥

सीतापतेः किं पुरुषे हनूमान्
युतः स्तुतिं किं पुरुषैः करोति ॥
उदारतामस्य जनानुरागं
स्मरन् परं प्रेमसमुद्रमग्नः ॥१४०॥

श्रीपतिं भारते वर्षे नरनारायणात्मकम् ॥
नारदः सांख्ययोगाभ्यां प्रजाभिः स्तौति सङ्गतः ॥१४१॥

श्रीशैलो विन्ध्यः सह्याद्याश्च महीधराः ॥
नर्मदाद्याश्च सरितो भारते सन्ति भूरिशः ॥१४२॥

वाञ्छन्ति भारते वर्षे जन्म देवगणा अपि ॥
यत्र सद्यः शुभाचारैर्वासुदेवः प्रसीदति ॥१४३॥

वदन्त्यष्टावुपद्वीपान् जम्बूद्वीपस्य मर्दने ? ॥
स्वर्णग्रासश्वयुक्तस्य आवर्तन इति स्मृतः ॥१४४॥

उक्तो रमणकोमन्दहरिणा पाञ्चजन्यकः ॥
सिंहलश्चैव लङ्का च नामतः परिकीर्तिताः ॥१४५॥

लक्ष्ययोजनविस्तारः समन्तात् क्षारसागरः ॥
जम्बूद्वीपात्ततः प्लक्षद्वीपस्तु द्विगुणो मतः ॥१४६॥

प्लक्षो जम्बू प्रमाणोऽस्ति सौवर्णो द्वीपनामकृत् ॥
तस्मिन्नास्ते सदा सप्तजिह्वो देवस्तनूनपात् ॥१४७॥

प्रियव्रतसुतस्तस्मिन्निध्मजिह्वो विरक्तधीः ॥
विभज्य सप्तवर्षाणि स्वपुत्रेभ्यो ददौ किल ॥१४८॥

शिवं च यवसं चैव सुभद्रं शान्तमेव च ॥
क्षेमामृतामयानि स्युस्तस्मिन् वर्षाणि नामतः ॥१४९॥

मणिकूटो वज्रकूट इन्द्रसेनस्तथैव च ॥
ज्योतिष्मांश्च सुपर्णश्च हिरण्यष्ठीविनामकः ॥१५०॥

मेघमाल इति प्रोक्ता मर्यादागिरयस्तथा ॥
सप्तैव तत्र वर्षाणां समानां भेदकारकाः ॥१५१॥

अरुणा नृमणाङ्गिरसा
सावित्री सुप्रभाता च ॥
प्रथिता ऋतम्भराख्या
नदी च सत्यम्भरा तत्र ॥१५२॥

हंसापतगोर्द्धायनाः
सत्यांगास्तत्र वर्णाश्च ॥

उपतिष्ठन्ते निगमैर्-
भगवन्तं भास्करं भक्त्या ॥१५३॥

समेन क्षरसोदेन प्लक्षद्वीपः समावृतः ॥
द्विगुणः शाल्मलिर्द्वीपः प्लक्षतुल्योऽत्र शाल्मलिः ॥१५४॥

गरुडस्य गृहं तत्र श्रुत्वा यः स्तौति केशवम् ॥
प्रियव्रतसुतोपज्ञबाहुस्तत्र विभक्तवान् ॥१५५॥

वर्षाणि सप्तपुत्रेभ्यः शृणु तन्नाम मर्दन ? ॥
सुरोचनं सौमनसं वर्षं रमणकस्तथा ॥१५६॥

देववर्षं पारिभद्रमाप्यायनमिति स्मृतम् ॥
अविज्ञानं च गिरयः स्वरसः शतशृङ्गकः ॥१५७॥

वामदेवश्च कुन्दश्च कुमुदः पुष्पवर्षकः ॥
सहस्रश्रुतिरित्येव सरितोऽनुमतिः स्मृताः ॥१५८॥

सिनीवालीसरस्वत्यौ कुहूश्च रजनी तथा ॥
नन्दा राकेति कथिता वर्णाः श्रुतिधरः स्मृतः ॥१५९॥

तथावीर्यधरश्चैव वसुन्धर इषुन्धरः[1] ॥
यजन्ते वेदविद्वांसो देवं कुमुदबान्धवम् ॥१६०॥

समेन शाल्मलिर्द्वीपः सुरो देनावृतो[2] बहिः ॥
द्विगुणोतः कुशद्वीपः कुशोत्रज्वलनोपमः ॥१६१॥

हिरण्यरेता इत्युक्तः प्रियव्रतसुतो नृपः ॥
विभज्य सप्तवर्षाणि स्वसुतेभ्यो न्यवेदयत् ॥१६२॥

---

१. इषु–ख०
२. देवावृतो–क०.

वसुश्च वसुदानश्च स्मृतो दृढरुचिस्ततः[1] ॥
सत्यव्रतो नाभिगुप्तो विविक्तो नामदेवकः ॥१६३॥

इति तस्य सुतावर्षो नामान्येतादृशानि च ॥
शैलाश्चक्रश्चतुःशृङ्गः कपिलश्चित्रकूटकः ॥१६४॥

[2]देवानीकश्चोर्द्ध्वरोमा द्रविणः परिकीर्तिताः ॥
सरितो रसकुल्या च मधुकुल्या तथैव च ॥१६५॥

श्रुतविन्दा मित्रविन्दा देवगर्भा घृतच्युता ॥
मन्त्रमालेति कथिता वर्णाश्च[3] क्रमतःशृणु ॥१६६॥

कुशलः कोविदश्चैवाभियुक्तः कुलकस्तथा ॥
प्रजानभःसदामास्यं[4] वैश्वानरमुपासते ॥१६७॥

कुशद्वीपो घृतोदेन[5] समेन बहिरावृतः ॥
ततो बहिस्तद्द्विगुणः क्रौञ्चद्वीपोऽस्ति मर्दन ॥१६८॥

क्रौञ्चो नाम महाशैलस्तस्य संज्ञा प्रवर्तकः ॥
न केवलं गुहस्यापि क्रौञ्चदारणनामकृत् ॥१६९॥

पुरा प्रकोपाच्छिखिवाहनेन
शक्त्या स्वशक्त्या व्रणितस्य तस्य ॥
दुग्धो दधिद्वीपसमा व्रणस्य
पूर्त्यै ध्रुवं सिञ्चति किञ्च दुग्धैः ॥१७०॥

---

१. दृढरता:–ख०
२. देवानी–ख०
३. वर्णाश्च–क०
४. मास्यं–ग०
५. घृतोदेन–क०

प्रियव्रतस्य पुत्रोऽत्र घृतपृष्ठो ददौ पुरा ॥
वर्षाणि पुत्रनामानि पुत्रेभ्यः सप्त मर्दन ! ॥१७१॥

आमो मधुरुहो मेघपृष्ठो[1] भ्राजिष्ठसंज्ञकः ॥
सुधामा लोहितार्णश्च वनस्पतिरिमे सुताः ॥१७२॥

शुक्रश्च वर्द्धमानश्च भोजनश्चोपबर्हिणः ॥
नन्दश्च नन्दनश्चैव सर्वतोभद्र इत्यपि ॥१७३॥

शैला नद्यो[2] मयामायामृतौघाऽप्यार्यका[3] तथा ॥
उक्ता तीर्थवती शुक्ला सपवित्रवती मता ॥१७४॥

वर्णास्तु पुरुषस्तत्र ऋषभो द्रविणस्तथा ॥
देवकोञ्जलिना यान्ते मायादेवीमुपासते ॥१७५॥

ततःपरस्ताद् क्षीरोदाच्छाकद्वीपोऽस्ति मर्दन ! ॥
द्वात्रिंशल्लक्षगणितयोजनायाम एष तु ॥१७६॥

शाकस्तरुस्तं द्वीपं तु सुरभीकुर्वतेऽमितः ॥
प्रियव्रतसुतो मेधातिथिस्तत्र विभज्य तु ॥१७७॥

सप्तवर्षाणि पुत्रेभ्यस्तन्नामानि ददौ पुरा ॥
पुत्राः पुरोजवास्तस्य मनोजव इति स्मृतः ॥१७८॥

पवमानश्च कथितो धूम्रानीकस्तथैव च ॥
चित्ररेफो निगदितो बहुरूपः प्रकीर्तितः ॥१७९॥

विश्वाधारश्च गिरय ईशान उरुभृङ्गकः ॥
बलभद्रश्च कथितस्तथा शतकेसरकः ॥१८०॥

---

१. पृष्टो—क०
२. मद्योनद्यो–क०
३. मयामृतौघाप्या–क०

उक्तः सहस्रस्रोतश्च देवपालमहानसौ ॥
नद्यस्तत्राऽप्युदासंज्ञीत्युभयस्पृष्टिरेव च ॥१८१।

उक्ता पराजिता पञ्चपदी च परिकीर्तिता ॥
सहस्रस्तुतिसंज्ञा च तथा निजधृतिः स्मृता ॥१८२॥

वर्णा ऋतव्रतः सत्यव्रतो दानव्रतस्तथा ॥
अनुव्रतोऽनिलं देवं प्राणायामैरुपासते[1] ॥१८३॥

[2]दण्डिमण्डोदधिर्द्वीपं समस्तमुपगूहते ॥
परस्तात्पुष्करद्वीपो द्विगुणस्तत्र पुष्करम् ॥१८४॥

कनकायुतपत्राणि चासनं परमेष्ठिनः ॥
प्रियव्रतसुतो वीतिहोत्रः स्वात्मजयोरदात् ॥१८५॥

वर्षं रमणकं चैव धातकिश्च तदाख्ययोः ॥
मानसोत्तरसंज्ञोऽस्ति योजनायुतमायतः ॥१८६॥

तुङ्गस्तथा द्वीपमध्ये वर्षसीमाकरो गिरिः ॥
दिक् चतुष्टयवर्तिन्यः शक्रादीनां पुरोऽत्र च ॥१८७॥

परितो भ्रमतो मेरुं रवेः संवत्सरात्मकम् ॥
अहोरात्रेण देवानां चक्रं भ्राम्यति तत्र च ॥१८८॥

स्वकर्मणा विशुद्धेन पुरुषाः परमेष्ठिनम् ॥
यजन्ते विश्वकर्तारं देवानां प्रपितामहम् ॥१८९॥

स्वादूदकेन द्वीपोऽयं समेन परिवेष्टितः ॥
ततः परस्तादचलो लोकालोको व्यवस्थितः ॥१९०॥

---

१. सर्वस्मिन् वर्ण्यमाने द्वीपे चत्वारिवस्तूनि वर्णितानि सन्ति। नद्यः, गिरयः, वर्णाः, उपासनाश्च।

२. दण्डिमण्डो—क०

प्रकाशस्यान्धकारस्य मर्यादाकारकः स च ॥
योजनानां सार्धकोटिः सप्तलक्षी च साधिका ॥१९१॥

मेरोः परस्ताद् भूरस्ति मानसोत्तरतः पुरः ॥
तावती स्वादुजलतः समुद्रात्परतो मही ॥१९२॥

तत्र तु प्राणिनः सन्ति ततः काञ्चनमेदिनी ॥
एकोनचत्वारिंशद्भिः लक्षैः कोट्यष्टकं युतम् ॥१९३॥

योजनानां तु सा तत्र देवा दीव्यन्ति नेतरे ॥
लोकालोकस्य शैलस्य, मेरोश्चान्तरमेकतः ॥१९४॥

सार्द्धद्वादशकोट्यः स्युर्योजनानां महामते ! ॥
ध्रुवादप्युन्नतो यस्माल्लोकालोको महाचलः ॥१९५॥

ततस्तं नातिवर्तन्ते[1] सूर्यादीनां गभस्तयः ॥
[2]अन्धकारो योजनानां सार्द्धद्वादशकोटयः ॥१९६॥

ततः परस्तात्कथिता विशुद्धा योगिनां गतिः ॥
भूमण्डलमिदं सौम्य !, पञ्चाशत्कोटियोजनम् ॥१९७॥

ऋषभः पुष्करचूडो वामनसंज्ञोपरालितो दिक्षु ॥
शिरसा भुवं दधाना दिग्गजायोजिता विधिना ॥१९८॥

ऊर्ध्वखण्डप्रमाणं तु पञ्चाशत्कोटि योजनम् ॥
पञ्चविंशतिकोट्यस्तु खण्डयोरन्तरं विदुः ॥१९९॥

कालस्य च दिशां चैव जनानामायुषस्तथा ॥
निमित्तं कर्मणा कर्म साक्षी सूर्यो विभाजकः ॥२००॥

---

१. सूर्यादीनां किरणानि लोकालोक पर्वतं नातिवर्तंते तस्यात्युन्नतत्वात् ।
२. अन्धकारात्परस्तात् योगिनां गतिः कथिता । अन्धकारस्य च योजनानां सार्धं द्वादश-कोटयो गतिः ।

युगाक्षकोटिबद्धस्य वायुपाशस्य कर्षणात् ॥
ध्रुवेणारोहणं भानोः प्रवेशोचरमण्डले ॥२०१॥
याह्यं तु मण्डलं याति शीघ्रस्तद्दक्षिणायने ॥
रात्रिवृद्धिर्दिनह्रासस्ततो भवति मर्दन ! ॥२०२॥
वैपु वैपाशसाम्येन सममण्डलवेशने ॥
समागतिर्दिनमणेरहोरात्रसमानता ॥२०३॥
मेषेतुलायामेकस्मिन्नहोरात्रे समानता ॥
तथापि सूक्ष्मवैषम्यात्साम्यमित्येव कीर्त्यते ॥२०४॥
वृद्धिह्रासौ प्रतिदिनं विषमौ सूक्ष्मदर्शने ॥
तथापि घटिकामासे सामान्येन प्रकीर्तिताः ॥२०५॥
वृषभे मिथुने वृद्धिर्दिनानां कर्कटादिषु ॥
ह्रासः किं तु निशोपेक्ष्यवृद्धिरित्येव कीर्त्यते ॥२०६॥
मन्दशीघ्रसमा नाभिर्गतिभिर्मानसोत्तरे ॥
नवकोटयेकपञ्चाशल्लक्षं भ्राम्यति भास्करः ॥२०७॥
सर्वग्रहाणां त्रीण्येव स्थानानि शृणु मर्दन ! ॥
स्थानं जरद्गवं मध्यं तथैतावचदुत्तरम् ॥२०८॥
वैश्वानरं[1] दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥
वीथीत्रयेण प्रत्येकं त्रिधामार्गं[2] प्रचक्षते ॥२०९॥
अश्विनीकृत्तिकायाम्या नागवीथीति शब्दिता ॥
रोहिण्यार्द्रामृगशिरे गजवीथ्यभिधीयते ॥२१०॥
पुष्योऽश्लेषा तथादित्या वीथी चैतावती मता ॥
एतास्तु वीथयस्तिस्र उत्तरोमार्ग उच्यते ॥२११॥

---

१. वैतानसं—ख०
२. मार्गो—ख०

तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभीमता ॥
हस्तश्चित्रा तथा स्वाती गोवीथीति नु [1]शब्दिताः ॥२१२॥

ज्येष्ठा विशाखा मैत्रश्च वीथी जारद्गवी मता ॥
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥२१३॥

मूलापाढोत्तरापाढा[2] अजवीथ्यभिशब्दिता ॥
श्रवण च धनिष्ठा च मार्गी [3]शतभिषक् तथा ॥२१४॥
वैश्वानरी भाद्रपदे[4] रेवती चेति कीर्तिता ॥
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥२१५॥

मानसोत्तरशैलोऽस्ति सुमेरोः पूर्वतः पुरी ॥
देवधानी सुरेशस्य दक्षिणे समवर्तिनः ॥२१६॥

संयमन्यभिधेया च निम्लोचन्यपि वारुणी ॥
विभावर्युत्तरे सौम्या क्रमात्तासु भवन्ति च ॥२१७॥

उदयोऽपि च मध्याह्नोऽस्तमयश्च निशीथकः ॥
सुमेरोर्दक्षिणे तेषामैन्द्राः पूर्वोदयो मताः ॥२१८॥

पश्चिमस्थास्तु याम्यायाः पूर्वाद्या हरितो विदुः ॥
उत्तरस्थाः सुमेरोर्या वारुण्यास्तु च ता विदुः ॥२१९॥

याः पूर्वे तास्तु सौम्यायाः प्राच्याद्या जानते दिशः ॥
मेरुस्थानां तु मध्याह्ने सदा तिष्ठति भास्करः ॥२२०॥
प्रदक्षिणावर्तवहन् प्रवहाख्येन वायुना ॥
भ्रमज्ज्योतिश्चक्रवशान्मेरुर्दक्षिणतो रवेः ॥२२१॥

---

१. ती—क०
२. पाढी—ख०
३. भिषा—ख०
४. भाद्रपदो—ख०

निःसरन्निव यत्रार्को भूमेस्तत्रोदयं विदुः ॥
प्रविशन्निव यत्रास्यां तत्रास्तमय उच्यते ॥२२२॥

उदयास्तमयौ चैव सर्वकालं तु सम्मुखौ ॥
दिशास्वशेषासु तथा जानीहि विदिशासु च ॥२२३॥

यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ॥
तिरोभावं च यत्रैति तत्रास्तमय[1] उच्यते ॥२२४॥

नास्तं गमनमर्कस्य नोदयः सर्वदा सतः ॥
उदयास्तमयाख्यं हि दर्शनादर्शनं रवेः ॥२२५॥

शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ॥
विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान्द्वे पुरे तथा ॥२२६॥

यस्य यत्रोदितः सूर्यः सा प्राची तस्य वामतः ॥
मेरुस्तद्द्वीपवर्षाणां सर्वेषामुत्तरः स [illegible] तु ॥२२७॥

योजनानां चतुस्त्रिंशल्लक्षाण्यष्टशतानि च ॥
मुहूर्तेन रथो गच्छन् पुरीर्भ्राम्यति भास्वतः ॥२२८॥

एकचक्रो द्वादशारः षण्णेमिश्च त्रिनाभिकः ॥
संवत्सरात्मको भानोर्भ्रमत्याकाशगो रथः ॥२२९॥

तस्य नीडस्तु षट्त्रिंशल्लक्षयोजनमायतः ॥
निस्तीर्णस्तुर्यभागेन तावानेव युगः स्मृतः ॥२३०॥

अरुणः सारथिस्तस्य सप्ताश्वा वामगामिनः ॥
अधो मेरौ परस्त्वक्षो वायुस्थो मानसोत्तरे ॥२३१॥

---

1. सूर्यस्योदयास्तमयस्य च न कश्चिद्विशेषो नियमः॥ परन्तु यत्र दृश्यते भास्वान् स तेषामुदय, यत्र च तिरोभावं याति तत्रास्तमय। इत्थं रवेर्दर्शनादर्शनं उदयास्तमयाख्यमस्ति।
2. प्राक् प्रत्यगुदगवाग्वर्णनम्।

लक्षत्रये योजनानां नक्षत्राणां स्थितिस्ततः ॥
द्विलक्ष्यमुशना भानोः पुरः पश्चात्सह व्रजन् ॥२४३॥

लक्षद्वये योजनानां बुधस्तस्योपरि स्थितः ॥
भास्वतः पुरत पश्चात्सह वा परिसर्पति ॥२४४॥

लक्षद्वये योजनानां बुधादूर्ध्वं कुजस्थितिः ॥
द्विलक्षयोजने तस्मादूर्ध्वं देवगुरोः स्थितिः ॥२४५॥

[1]द्विलक्षयोजने तस्मादूर्ध्वं सूर्यसुतः स्थितः ॥
तथैकादशलक्षोर्ध्वं स्थिताः सप्तर्षयस्ततः ॥२४६॥

सत्रयोदशलक्षाणि योजनानां स्थितो ध्रुवः ॥
ऋषिभ्य ऊर्ध्वं खचरैः[2] क्रियते यः प्रदक्षिणः ॥२४७॥

ज्योतिश्चक्रमिद प्राहुः शिशुमारप्रतिष्ठितम् ॥
धृतमीशेच्छयैवैतत् तत्र वा वायुमण्डले ॥२४८॥

रवेरधस्तात्स्वर्भानुस्तिष्ठत्ययुतयोजने ॥
पिदधाति रवि यत्तु ग्रहणं तत्प्रचक्षते ॥२४९॥

अयुतयोजनभुक्तमहर्पते[3]
रविसहस्रमितं तु निशापतेः ॥
ऋषिकपंक्तिमहस्रमितं विदु-
र्बुधगणास्तमसः खलु मण्डलम् ॥२५०॥

भूर्लोकश्च भुवर्लोका ध्रुवावधिरुदाहृतः ॥
आदित्यादाध्रुवं सौम्य ! स्वर्लोक इति गीयते ॥२५१॥

---

१. विल्स—च०
२. तचरे—स०
३. महर्पति—च०

महर्लोकस्ततोप्यूर्ध्वमेककोटिप्रमाणतः ॥
कोटिद्वय तु संख्यातो जनो भूर्लोकतो जनैः ॥२५२॥

चतुःकोटिप्रमाणस्तु तपोलोकोऽस्ति भूतलात् ॥
उपरिष्टात्क्षितेरष्टौ कोट्यः [1]भव्यमीरितम् ॥२५३॥

भूमेरधस्ताद् भुवनानि सप्त
प्रत्येकतुल्लायुतयोजनानि ॥
माया विना यत्र मयेन पूर्वैः
सुवर्णरत्नैरचिता विभान्ति ॥२५४॥

अतलं वितलं चैव सुतलं च तलातलम् ॥
महातलमिति प्रोक्तं रसातलमतः परम् ॥२५५॥

पातालमुच्यते तेषु स्वर्गादप्यधिकं सुखम् ॥
[2]दैत्यनागा जरामृत्युरोगदुःखविवर्जिताः ॥२५६॥

वाप्यः प्रफुल्लकमला विमलाम्बुपूर्णाः
स्वर्णालवालधरणीरुहरम्यतीराः ॥
सोपानसञ्चरटनुत्तमनागकन्या
मञ्जीरमञ्जुनिनदैर्मदयन्ति चेतः ॥२५७॥

मयपुत्रो बलो[2] नाम निवसत्यतले सुरः ॥
येन षण्णवतिर्मायाः कृता मायाविभिर्धृताः ॥२५८॥

जृम्भमाणस्य वदनात्तिस्रस्तस्याऽभवन् स्त्रियः ॥
स्वैरिणी कामिनी चैव पुंश्चली जनमोहिनी ॥२५९॥

---

1. अतल, वितल सुतल, तलातल, महातल, रसातल पातालमिति भूतलादधस्तात् ।
2. पुरा बलो नामासुरोऽतले ऽवसत् । जृम्भमाणस्य तस्य वदनात् तिस्रः स्त्रियः स्वैरिणी कामिनी पुंश्चली चेति निःसृता ।
१. 'कोऽस्य सः' इति नास्ति 'क' इत्यत्र ।
२ दैत्या–क०

[1]वितले सुरतासक्तो भवान्या हाटकेश्वरः ॥
हाटकान्तस्य वीर्येण नदी तस्यास्तु हाटकम् ॥२६०॥

सुतले तु ततोधस्तादास्ते दैत्यपतिर्बलिः ॥
यस्य भक्त्यावशो विष्णुर्गदावान् द्वारि तिष्ठति ॥२६१॥

निरस्तो येन दिग्जेता पादाङ्गुष्ठेन रावणः[1] ॥
लघुगारवमुत्सृज्य प्रयातायुतयोजने ॥२६२॥

तलातले ततोधस्तान्मयो नाम महासुरः ॥
त्रिपुरारातिना विष्णोश्चक्रात् त्रातोवतिष्ठते ॥२६३॥

महातले काद्रवेयागणाः क्रोधवशाभिधः ॥
तक्षकाद्या वैनतेयाद्बिभ्यतो नित्यमासते ॥६६४॥

रसातले ततोधस्ताद्दैतेया दानवास्तथा ॥
निवातकवचा नाम कालेयाः पणयोऽपि च ॥२६५॥

वसन्ति देवद्रोग्धारो हिरण्यपुरवासिनः ॥
शुन्या समरया प्रोक्ताः परं ते च बिभ्यति ॥२६६॥

पाताले च ततोधस्ताद्वासुकिप्रमुखा भृशम् ॥
फणामणिकृतोद्योतास्तिष्ठन्ति बहुमस्तकाः[2] ॥२६७॥

---

I (i) वितले हाटकेश्वर ।
(ii) सुतले बलि ।
(iii) तलातले मयो नाम दैत्य ।
(iv) महातले काद्रवेया गण ।
(v) रसातले दैतेया दानवा कालेया पणयश्च ।
(vi) पाताले ।
(vii) पातालादधस्तात्सहस्रवदन शेष ।

१. रावण—क०
२. प्रयाता—क०

योजनानां सहस्राणि त्रिंशस्तस्याप्यधो विभुः ॥
श्रीमान्सङ्कर्षणः शेषः सहस्रवदनः स्थितः ॥२६८॥

क्वचिन्मूर्धनि यस्येयं फणामणिगणोज्ज्वले १ ॥
भूमिः सिद्धार्थवद्भाति सपर्वतवनार्णवा ॥२६९॥

इति निशम्य तु मर्दन उक्तवान्
वद गिरोः नरकाः क ? कथं जनः ? ॥
नरकमेति कथं दिवमश्नुति
प्रथय कर्मगतीः पृथुचेतन १ ॥२७०॥

ऊचे गुरुर्भुवोधस्तादष्टाविंशतिसंख्यकाः ॥
जलादुपरि[2] वर्तन्ते नरकाः पापिदण्डदाः ॥२७१॥

वैवस्वतस्य नगरी दक्षिणस्यां दिशि स्थिता ॥
अग्निष्वात्तादयस्तत्र पितरो नरका अपि ॥२७२॥

तामिस्रश्चान्धतामिस्रो महारौरवसंज्ञकः ॥
कुम्भीपाको रौरवश्च कालसूत्रमुदीरितम् ॥२७३॥

असिपत्रवनं प्रोक्तं तच्छूकरमुखं पुनः ॥
अन्धकूपश्च संदंशः कृमिभोजन उच्यते ॥२७४॥

तप्तसूर्मिः प्रकथितो वज्रकंटकशाल्मली ॥
क्षारकर्दमनामा च सरक्षोगणभोजनः ॥२७५॥

वैतरणी पूतदोला लाभश्च प्राणरोधाख्यः ॥
विशसनमवीचिरुक्तो यः पानंत्यारमे पादः ॥२७६॥

---

1. श्लोक स० २७१ तः नरकवर्णनं नान्तरेन कृतमस्ति ।
2. भुवोधस्ताज्जलादुपरि नरकाः सन्ति ॥
तत्र तामिस्रादयः पञ्च नरकाः कालसूत्रमिति कथ्यते ।

शूलप्रोतो दन्दशूकस्तथा वदतिरोधनः ॥
पर्यावर्तनमंज्ञश्च सूचीमुखमिति स्मृतः ॥२७७॥

वित्तापत्यकलत्राणि परस्य हरते तु यः ॥
तामिस्रे ताडितो याम्यैः स मोहमधिगच्छति ॥२७८॥

वञ्चयित्वा तु पुरुषं तस्य दारधनादिकम् ॥
यो भुङ्क्ते सोऽन्धतामिस्रे भ्रश्यते नष्टदृङ्मतिः ॥२७९॥

बिभर्ति भूतद्रोहेण कुटुम्बं केवलं तु यः ॥
रौरवे रुरुभिः क्रूरैर्हिंस्यते म्रियते न सः ॥२८०॥

स्वदेहपोषको यस्तु केवलं क्रूरकर्मणा ॥
स महारौरवे हिंस्रैः क्रव्याद्यैः परिभूयते ॥२८१॥

यः पशून्पक्षिणो हन्ति करुणापरिवर्जितः ॥
कुम्भीपाके तप्ते तैले यमदूतैः स पच्यते ॥२८१॥

अगम्यकन्यासुतयोजने च
ताम्रे समन्ताज्ज्वलदग्नितप्ते ॥
स कालसूत्रे परिदह्यते यो
देवं द्विजं द्वेष्टि निजं च तातम् ॥२८३॥

अनापदित्यनेद्वेदमार्गं पाखण्डमेति यः ॥
असिपत्रैर्द्विधारैः स छिद्यते कशयाहतः ॥२८४॥

राजा वा राजपुरुषो दण्ड्ये दण्डं दधाति यः ॥
स शूकरमुखे गाढमिक्षुवत्परिपीड्यते ॥२८५॥

यूकामत्कुणमक्षिकं च मशका ये रक्तभोज्या कृता
निर्वेगेन विवेकशून्यमनसो जानन्ति नान्यव्यथाम् ॥

1. २८५ त ३०५ पर्यंत नरकयातनाविवेचनम् ।

तान् यो हन्ति विवेकवान् हि मनुजः क्षिप्तान्धकूपे स तै-
र्दष्टो नष्टमतिर्भ्रमत्यविरतं ध्वान्ते नितान्ताकुलः ॥२८६॥

न जुहोति यो न ददाति पञ्चमखान्करोति न मन्दधी-
रुदरम्भरिर्विलिप्सुष्टवत्स्वयमत्ति नित्यमुपार्जितम् ॥
कृमिभक्ष्यमाणकलेवरो व्यथितः क्षुधा परितो भ्रमन्
कृमिभोजने कृमिभोजनो बहुयोजने स विषीदति ॥२८७॥

हिरण्यरत्नं विप्रस्य यश्चोरयति मूढधीः ॥
सन्दंशे सप्तसंदंशैः पिशितं तस्य कृष्यते ॥२८८॥

अगम्यामगम्यं स्त्रियं वा पुमांसं
नरः कामिनीकामतः संसृजन्तौ ॥
समालिङ्गितौ लोहसूर्म्याग्निमध्या
महावेदनां सप्तसूर्मौ लभन्ते ॥२८९॥

यः सर्वगामी पश्वादिगन्ता कामी नराधमः ॥
कर्षन्ति तं समारोप्य वज्रकण्टकशाल्मलीम् ॥२९०॥

रूपशोणितविण्मूत्रमांसकेशवसा मृतिम् ॥
भिन्दन्ति धर्मसैन्ये वैतरिण्यां पतन्ति ते ॥२९१॥

वृषलीपतयो विनष्टशौचा
गतलज्जाः पशुवृत्तिमाचरन्तः ॥
मलशोणितमूत्रपूयपूर्णे
तदनन्ते नरकार्णवे पतन्ति ॥२९२॥

ये विश्वकद्रुमिरुपद्रुतवत्यजीवा
हिंसा विहाररसिका हरिणान् हरन्ति ॥
ते प्राणरोधनिरये यमदूतबाणै-
र्विद्धाः श्वसन्ति निपतन्ति धरां सुराद्याः ॥२९३॥

दाम्भिका दम्भयज्ञेषु ये निघ्नन्ति वृथा पशून् ॥
निघ्नन्ति तान्विशसने नरके यमकिङ्कराः ॥२९४॥

ग्रामे येऽग्निमुचो विलुण्ठनकृतो लुण्ठन्ति सार्थांश्च ये
खादन्त्युग्रतवज्रसारदशना उत्कृत्य कृत्तिं बलात् ॥
साक्ष्यो योऽनृतमाह मोहनकरो नृणां क्रये विक्रये
कर्ता मानतुलादिकूटमनृजुः सोऽधःशिराः पात्यते ॥२९५॥

शैलाग्रात् शतयोजनाभ्रनिभे वीचौ शिलासङ्कटे
निर्भिन्नस्तिलशो न मृत्युमेयहे मूर्ध्नस्ततः पात्यते ॥२९५A॥
द्विजो द्विजस्य पत्नी वा सुरां पिबति मोहतः
अपः पाने द्रुतं लोहं पातयन्ति तु तौ यलाः ॥२९६॥

अपकृष्टोऽवमन्येत स्वोत्कृष्टांस्तु मदेन यः ॥
स क्षारकर्दमे मुङ्क्तेऽवाक्शिरास्तीव्रवेदनाः ॥॥२९७॥

पशूकृता ये पुरुषा यजद्भिः
कामैरनेकैरिह मृतसंघात् ॥
निदार्य रक्षोगणभोजने तान्
[1]परश्वधैस्ते रुधिरं पिबन्ति ॥२९८॥

ये विश्वास्य प्रोतैः शूले
जन्तुघातैः[2] संक्रीडन्ते ॥
शूलप्रोते शूलप्रोता-
[3]स्ते कद्धाद्यैर्निष्पुष्यन्ते ॥२९९॥

---

1, प्रथमद्वितीयचरणयोरभाव पाण्डुलिपायत्र ।

१. श्रठं —क०

२. अनुघातै —क०

३. स्तैनुन्ना—क०

उद्वेलयन्ति भूतानि ये क्रूरमनसस्तु तान् ॥
[1]दन्दशूके दन्दशूका दंशन्ति बहुभिर्मुखैः[2] ॥२००॥

अन्धावटे कुशूले
जनान्निरुन्धन्ति ये दर्पात् ॥
अवटनिरोधननरके
तेऽगरधूमैर्निरुध्यन्ते ॥२०१॥

अतिथीन् गृहागतान्यो
वक्रदृशा पश्यति क्रूरः ॥
पर्यावर्तननरके
तदक्षि गृध्राादिभिर्ह्रियते ॥२०२॥

यः साचि वीक्षत इह स्वगुरुनरिभ्यो
दक्षः कदर्य उपधारितचोरशङ्कः ॥
[3]तत्तुन्नवाय इव दत्तगणोपमस्य
सूचीमुखे वपुषि सीव्यति सूत्रजालैः ॥२०३॥

प्राधान्येन तवोदितास्तु नरका वैचित्र्यतः कर्मणां
नृणां मर्दन ! मर्दनाय विहितास्ते सन्ति नानाविधाः ॥
शेषस्वर्गसुखस्य दुर्गतिमहादुःखस्य यद् भुञ्जते
भूमौ तत्स्फुरमेव पश्यसि सदा सुस्थांश्च दुःस्थान् जनान् ॥२०४॥

पापानामपि पुण्यानां जाले निपतितो जनः ॥
मुमुक्षुस्त्वरते यस्तु स प्रत्युत निबध्यते ॥२०५॥

---

१. दंदशूके—ख०
२. मुख —ख०
३. तत्तुन्न—ख०

तस्मादसत्कर्म विहाय दूरे
सत्कर्म कुर्वन् हरितोषणाय ॥
निवृत्तिमार्गस्वरसः शरण्यं
श्रीश प्रपन्नः समुपैति मुक्तिम् ॥३०६॥

विपाकः कर्मणां प्रोक्तो मुनिभिस्तत्त्वदर्शिभिः ॥
वदामि तुभ्यं संक्षेपात्तं च मर्दन ! मच्छृणु ॥३०७॥[1]

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ॥
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥३०८॥

ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ॥
हेमहारी तु कुनखो दुश्चर्मा गुरुतल्पगः ॥३०९॥

महापातकजान्घोरान्नरकान्प्राप्य दारुणान् ॥
कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह ॥३१०॥

मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ॥
खरपुक्कसवेनानां सुरापो नात्र संशयः ॥३११॥

कृमिकीटपतङ्गत्वं स्वर्णस्तेयी समाप्नुयात् ॥
तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥३१२॥

यो येन [1]संवसत्येषु स तल्लिङ्गोऽभिजायते ॥
अन्नहर्ताऽऽमयावी स्यान्मूको वागपहारकः ॥३१३॥

धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासकः ॥
तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः ॥३१४॥

परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य[2] च ॥
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥३१५॥

---

1. १०९ श्लोकात् कर्मणां विपाकविचारः ।

१. सवसत्येव—ख०
२. स्वय—क०

हीनजातौ प्रजायेत पररत्नापहारकः ॥
यत्र शाकं शिखी हृत्वा गन्धान्छुच्छुन्दरिः शुभान् ॥३१६॥

मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः ॥
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥३१७॥

मधुदंशः पलं गृध्रो गाङ्गोधाग्नि बकस्तथा ॥
श्वित्री वस्त्रं श्वारसं तु चीरी लवणहारकः ॥३१८॥

प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि ॥
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥३१९॥

केन कर्मविपाकेन स्वर्गं यान्ति नरा गुरो ? ॥
मर्दनेनेति संपृष्टो निजगादाथ नानकः[1] ॥३२०॥

निष्प्रत्यूहं क्रतुशतं यः कश्चित्कुरुतेऽवनौ ॥
जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजाम् ॥३२१॥

तुलापुरुषदानादिमहादानानि षोडश ॥
ये यच्छन्त्यमलात्मानस्ते लभन्तेऽमरावतीम् ॥३२२॥

अक्लीबवादिनो धीराः संग्रामेष्वपराङ्मुखाः ॥
विक्रान्ता वीरशयने तेऽत्र तिष्ठन्ति भूभुजः ॥३२३॥

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥
परपीडां न कुर्वन्ति न ते यान्ति यमालयम् ॥३२४॥

शरणागतवत्सला नरा
अबलाबालकवृद्धरोगिणाम् ॥
कलयन्ति दरिद्रतां च ये
हितमेते त्रिदशालयालयाः ॥३२५॥

---

1. ३२१ श्लोकात् तेषां कर्मणां विचारो येन यान्ति नरा स्वर्गम् ।

वापीकूपतडागादिकारका वृक्षरोपकाः ॥
गोग्रासदायिनः स्वर्गे वसन्ति बहुवत्सरान् ॥३२६॥

तुलसीं रोपयेद्यस्तु विष्णुपूजनतत्परः ॥
अयुतानि युगाना तु स्वर्गलोके स पूज्यते ॥३२७॥

शिवसेवनतत्परः सदा
शिवनामस्मरणे गतक्षणः ॥
रमते शिवसन्निधौ पुमान्
यमदूतास्तमुदीक्ष्य बिभ्यति ॥३२८॥

मठं यतीनां कुर्वन्ति ये च विश्राममन्दिरं ॥
धर्मशाला च विपुला ते चिरं स्वर्गवासिन ॥३२९॥

अतिथिर्विमुखो न याति यस्मा-
न्नियतं तस्य विरिञ्चिलोकवासः ॥
वितरान्नमपेक्षसे यदि स्वो
यम ऊचे किल केसरिध्वजाय ॥३३०॥

न परान्नरुचिः पुमान् मुमुक्षुः
सततं स्नानपरः प्रभातकाले ॥
त्रिपदाजपतत्परस्तपस्वी
त्रिदिवं याति न यातनां यमस्य ॥३३१॥

कदाचिदपि गङ्गाया कथंचित् स्नाति यः पुमान् ॥
स स्वर्गं नियतं याति न याम्यास्तस्य यातनाः ॥३३२॥

अप्रतिग्रहशीलो यः प्राणायामपरायणः ॥
सत्यवादी शुचिर्दान्तः स्वर्गस्तस्य करे स्थितः ॥३३३॥

गुरुशुश्रूषकः शिष्यो भार्या पतिपरायणा ॥
पुत्रः पित्रोर्भक्तियुक्तः सर्वे स्वर्गनिवासिनः ॥३३४॥

'द्वादशाक्षरमनुं[1] प्रजपन्तो
वैष्णवा विगतमोहमदा ये ॥
ते पुनन्ति भुवनं स्वमहिम्ना
माधवस्य सविधे च वसन्ति ॥३३५॥

एकादश्युपवासाः
शालग्रामस्य पूजनं विधिवत् ॥
नित्यं तदम्बुसेवा
रेवागङ्गादितीर्थैः किम् ? ॥३३६॥

यः पूजयेद्धरिं[2] चक्रे शालि[3]ग्रामशिलोद्भवे ॥
राजसूयसहस्रेण तेनेष्टं प्रतिवासरम् ॥३३७॥

शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम् ॥
तत्र दानञ्च होमश्च सर्वं कोटिगुणं भवेत् ॥३३८॥

धर्मेण वासस्त्रिदशालये स्या-
दधर्मतो हा नरके निवासः ॥
दानाद्धनं तेन विना च दैन्यं
मोक्षो मुकुन्दस्मरणेन शश्वत् ॥३३९॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
भूगोलादिवर्णनं नाम चतुर्दशः प्रस्तावः ॥

—:०:—

---

1. मनुशब्दः मन्त्रविशेषे देवविशेषे च प्रयुक्तोऽस्ति सर्वत्र शास्त्रे । "ॐ नमो भगवते वासुदेवाय" इत्यस्ति द्वादशाक्षरमन्त्र. ।

१. द्वादशाक्षरमणुं—क०

२. हरिचक्रे—क०

३. शालिग्राम—क०

# अथ पञ्चदशः प्रस्तावः

वाणीं गृणातु रसनां मम मानसं च
  श्रीशारदा स्मरतु शारदचन्द्रशुभ्राम् ॥
सारस्वतं जयतु [1]मन्त्रमपञ्चपाणि-
  र्वाग्देवतां नमतु [2]संततमेव मौलिः ॥ १ ॥

पश्यन् [1]यतिः करतलामलकायमानं[3]
  त्रैलोक्यवृत्तमिति योगजधर्मदृष्टया ॥
ऊचे विपाकमपि मानवकर्मणां च
  कैलाशमिन्दुधवलद्युतिमाससाद ॥ २ ॥

उत्फुल्लकल्पतरुकाननमध्यवर्ति
  विभ्राजमानमणिनिर्मितगुम्फपुञ्जम् ॥
तस्मिन्महार्हशयनासनयानरम्यं
  दृष्टं निशान्तमतिशान्तसुरैः परीतम् ॥ ३ ॥

[1]मन्दाकिनीसलिलसिक्तजटाटवीकः
  [2]सूर्येन्दुवह्निनयनः शरदभ्रशुभ्रः ॥
भाले वहन् शशिकलां करिकृत्तिधारी
  वैयाघ्रचर्मवसनो भसिताङ्गदातः ॥ ४ ॥

---

I. प्रस्तावस्य प्रारम्भे पूर्वैरतिलङ्घित वर्णनं व्यधायि कविना ।
2. त्रिनयन इत्यर्थः । अथवा नयनमध्ये शिवस्य प्रधानरूपेणैषां निवास इति भावः ।

१. मन्त्र—ख०
२. सतत—ख०
३. मान—ख०

स्मेराननो गरलनीलमलो भुजङ्गैः
स्फूर्जत्फणामणिगणैः परिभूषिताङ्गः ॥
बिभ्रत्करैश्च परशुं हरिदम्बरं च
भक्ताभयं ललितवामतनुर्भवान्या ॥ ५ ॥

आसीन उज्ज्वलरुचौ वररत्नवेद्यां
पद्मासने सुरगणैर्गुणितावदातः ॥
नन्दीश्वरेण गणपेन च षण्मुखेन
भृंगादिभिः प्रथमभूतगणैरुपेतः ॥ ६ ॥

सख्या धनाधिपतिना कृतसुप्रलाप-
श्चिन्तामणिः सकलचिन्तकवाञ्छितार्थौ ॥
आलोकितः पशुपतिर्यतिनायकेन[1]
तत्र प्रणाममपि तस्य द्रागाप्यनन्दत् ॥ ७ ॥

रूप्याचलं शशिधरस्य च तां समृद्धिं
भक्त्या प्रणाममपि नानकयोगिभर्तुः ॥
आलोक्य मर्दन उवाच[2] कएष शैलो[3]
देवश्च कोऽप्यमतुलाद्भुतदिव्यसम्पत् ॥ ८ ॥

तं नानकः प्रणिजगाद महोन्नतोऽयं
कैलासभूधरः सुकृतैकगम्यः ॥
इन्द्रादिमौलिमणिरञ्जितपादपीठ-
स्त्रैलोक्यभूषणमणिर्गिरिशाधवोऽयम्[4] ॥ ९ ॥

---

१. पतिनायरेन–क०
२. उवाद–क०
३. शैला–क०
४. कोऽयम्–क०

मक्षैव शुद्धमवधेहि ननु त्वमेनं
ध्यानाय भक्तनिवहस्य वपुर्वहन्तम् ॥
अस्यैव भालनयनादनलो युगान्ते-
निर्गत्य[1] विश्वमनुतिष्ठति भस्मशेषम् ॥ १० ॥

एवं वदन्नवततार गुरुः पृथिव्यै[2]
मार्गं महान्तमविधृत्य गिरीनुदारान् ॥
ऊचे बुभुक्षित इवासि नु[3] मर्दन ? त्वं
सोऽभूत को मम कृतेऽकृत पाकमत्र ? ॥ ११ ॥

योऽयं गिरिस्तव पुरो बहुतुङ्गशृङ्ग-
स्तस्मिन्नुपेहि मधुराणि फलान्यशान ।
अस्मत्कृते च कतिचिद्द्रुतमानयेति
तेनोदितो गिरिमगात्पुनरागमत्सः ॥ १२ ॥

फलान्यमृतकल्पानि नान्यावाप्यमर्धुज्वहि ॥
मर्दनोऽभूत मोघानि हा ! फलान्यजने वने ॥ १३ ॥
नानकेन कथितं कृतबुद्धे[4] ?
न प्रतीहि विपुलानि फलानि ॥
तान्यदन्ति मुनयो विपिनेऽस्मिन्
ये निलीय कलयन्ति तपांसि ॥ १४ ॥

मर्दनोवददिहैव भसेति
नानकस्तमगदत्फललोमात् ॥

---

१. निर्गम्य—स०
२. पृथिव्यां—स०
३. नु—च०
४. बुद्धे—च०

वस्तुमिच्छसि स[१] तं पुनरूचे
किं चिकीर्षुरसि[२] तत्र यियासुः ? ॥ १५ ॥

तत्र यत्खलु कर्तव्यं ? न कर्तुं शक्यतेऽत्र तत् ॥
इति ब्रुवन्योगिवर्यः शैलसेन्यमुपागमत् ॥ १६ ॥

कोऽपि साधुरधितिष्ठति ? शैल-
सेतमित्यभिदधौ धृतवीणः ॥
नानकोऽप्यगददस्ति च साधु-
र्मर्दन ? [३]स्वयमुपैति च कृत्यः[४] ॥ १७ ॥

किं नामासीति ? पप्रच्छ नानकं मुनिरुन्मना ॥
नानकोऽस्मि निराकार इति योगिवरो जगौ ॥ १८ ॥

तेनोक्तं ध्रुवमसि नानकस्तपस्वी
यो गीतो मम गुरुणा कथाप्रसङ्गात् ॥
किं नामा त्वमसि ? गुरोश्च नाम किन्ते ?
मां ज्ञात्वा स कथमिदं ? यतिस्तमूचे ॥ १९ ॥

अहंकल्याणनामास्मि [1]शीलसेनो गुरुर्मम ॥
धर्म भ्रातरमाह त्वां त्रेतायामिति सोऽभ्यधात् ॥ २० ॥

---

१. समं—क०
२. रमि—
३. त्वं यमु—क०
४. कृत्याः—क०
1. सैन्यदले शीलसेननाम्नो गुरोः शिष्यः कल्याणनामा यतिः प्रतिवसति स्म । तस्य (शीलसेनस्य) नानक. त्रेतायां धर्म भ्राताऽभोत् । तस्मिन् काले नानकस्य नाम गोवर्धन इत्यासीत् । शीलसेनः सदैव कर्ता कर्तेति मन्त्रं जपन्नासीत् ॥

कल्याणो गुरुमित्यूचे धर्मभ्राता तवागतः ॥
तेनोक्तं पृच्छ किं नामा ? कस्मिन्नासीद्युगे स च ? ॥ २२ ॥

नानकं परिपृच्छ्येदं कल्याणः पुनरब्रवीत् ॥
त्रेतायां सहवासी ते स हि गोवर्धनाभिधः ॥ २३ ॥

तस्यादेशेन नीतोऽसौ कल्याणेन तदन्तिकम् ॥
सत्कृत्य स्थापितस्तत्र[1] कर्ता कर्तेति कीर्तयन् ॥ २४ ॥

[I]यद्यस्ति ते गुरुरिहाहममुं दिदृक्षे
श्रुत्वा यतः स इति वाचमुवाच तुष्टः ॥
आपृच्छ्य तं ननु नयामि भवन्तमत्र
तिष्ठेति पार्श्वमगमच्च गुरोरगर्वः ॥ २४A ॥

को गुरुः ? कश्च मन्त्रस्ते ? कस्माद्विद्यामुपाददाः ? ॥
कां कलां कलयन्नत्र ? केनानीतोऽसि ? कीर्तय ॥ २५ ॥

इति शीलसेनवचसामवसाने
यतिनाऽभ्यधायि गुरुरीश्वर एव ॥
वरुणोऽस्य नाम वरमन्त्रमवोच–
ज्जनकाद् गुरोः[3]क्वचिदलभ्यत विद्या ॥ २६ ॥

कलये कलां सकलसत्यचरित्रा–
मिह मां निनाय जगतां पतिरेव ॥
अथ शीलसेनमुनिरेतदवादी–
दिति नानकस्य वचनानि निशम्य ॥ २७ ॥

---

I. श्लोकोऽयं "क" इत्यत्र नास्ति ।
१. दृष्ट्वा–क०
२. पुरो–क०
३. पुरोऽपि–क०

अनुरन्तरस्य गुरुमीक्षणशैले
जनकं वसन्तमवलोकय सौम्य ! ॥
जनकः[1] कुतोभवदिहेति स योगी
कृतविस्मयः ! शिखरिणं[१] तमगच्छत् ॥ २८ ॥

प्रकटीबभूव जनकः स शुकस्तं
प्रणमन्तमादरपरः परिरेभे ॥
नहि योगिनां किमपि दुष्करमस्ति !
न [२]चंक्रणीयचरिता इतरैस्तैः ॥ २९ ॥

तव दर्शनाय शुक ! नानक आगा-
दमुमाद्रियस्व महदादरणीयम् ॥
जनको जगाद तदनु स्मितवक्त्रः
परिषस्वजे [1]शुकममुं प्रणमन्तम् ॥ ३० ॥

वद नानक जप्यते मनुः[2] को !
जनकेनेति यतिर्जगाद पृष्टः ॥
तव सङ्गतितः पुरा प्रतीतं
[3]भगवन्नाम जपामि नान्यमन्त्रम् ॥ ३१ ॥

तवोपदेशात् त्रेतायामपेता विश्वविभ्रमाः ॥
कृपा नृपाल ! भवतस्तापान्पापानि चाऽधुनोत् ॥ ३२ ॥

---

1. नानकस्य अनुरन्तरस्य गुरुर्जनक ईक्षण शैले वसन्नासीत्। गुरुश्चासीज्जनकस्य शिष्यः॥
2. मनु = मन्त्र।
3. भगवच्छब्दोऽत्र विष्णुवाचक एव।
१. शिखरिणा—क०।
२. चक्रणीय—क०

ततः प्रसन्नो जनको जगाद
सर्वं स्मरस्यङ्ग ! पुरा चरित्रम् ॥
यशो मदीयं यदिदं त्वयीपि
तत्रैव तद्धाव्यकृतप्रतायाः ॥ ३३ ॥

वैकुण्ठनाथेन यदादृतस्त्व-
मस्मान्स्मरस्येव चिराय बंधून् ॥
अल्पोपकारस्मरणं प्रभुत्वे
शीलं सतामेतदमत्सराणाम् ॥ ३४ ॥

आनयोर्नैव[1] विच्छेदस्त्रेताया द्वापरे कलौ ॥
परीक्षितुमिदं सौम्य ! स गुरुः [2]प्राहुरस्म्यहम् ॥ ३५ ॥

अशस्य ते भगवतो न गुरोरपेक्षा[1]
शिक्षापरं त्वियमभूज्जगतीजनानाम् ॥
ये स्वप्रकाशनिगमागमसर्वतत्त्वा-
स्तेऽपि श्रयन्ति गुरुमेव पुरातनोऽध्वा ॥ ३६ ॥

अङ्गिराः पार्वतीशस्य रामस्यारुन्धतीपतिः ॥
[2]श्रियःपतिश्च कृत्स्नस्य गुरुराचारतः कृतः ॥ ३७ ॥

गुरुभक्त्या तव नानकास्मि तुष्ट-
स्तव पन्था गुरुसेवनप्रधानः ॥
प्रचरिष्यति सर्वदोषहन्ता
कलिकाले सुगमः समस्तलोकैः ॥ ३८ ॥

---

1. श्लोक– स्पेक्षा इत्यारम्य–जनानाम्' इति यावत 'क' इत्यत्र नास्ति।
2. श्लो विष्णु सर्वेषां गुरुरिति भाव ।
१. यदादृत–ख॰
२. आदयोवयो–क॰
३. प्राहुन् स्यस्म्य–ख॰

नास्तिकान् यवनान् जित्वा कृत्वा निष्कंटकां महीम् ॥
तव शिष्यैरियं कीर्णार्णवनेमिर्मविष्यति ॥ ३९ ॥

प्रीत्या तव ममामेदस्तत्त्वज्ञानद्आपि च ॥
यन्मूलो जनवादोऽयं जनको नानकोऽभवत् ॥ ४० ॥

इह वसेति वदन्तमुदारधी-
रनुमतिं जनकं समयाचत ॥
अनुमतो जनकेन सुतुष्यता
गिरिशिरः सरसि क्वचिदाययौ ॥ ४१ ॥

पप्रच्छ मर्दनस्तत्र साधुरत्रास्ति कश्चन ? ॥
अवादि नानकेनेदमस्ति चायाति च स्वयम् ॥ ४२ ॥

स्नान्तं तत्र जगाद नानकऋषिं किं स्नास्यमुष्मिन्सर- ?
स्यंतःशुद्धिकरी परं भगवतो भक्तिर्न नीरं यतः ॥
विश्लेषे मनसो मुकुन्दचरणादत्याकुलत्वं नु सा
मीनस्येव जला तरंगतरला[1]भक्तिः प्रसक्तिः किल ॥ ४३ ॥

विश्लिष्य मीनः सलिलात्कियन्तं
कालं किल प्राणिति नानकस्तु ॥
मुकुन्दपादाम्बुजतो वियुक्त-
चेता क्षणं प्राणितु नाम किं नु ? ॥ ४४ ॥

इत्येवमुक्तो यतिना मुनिः स
उवाच किं त्वं जनकावतारः ? ॥
योगीश्वरो नानकनामधेय-
स्तपः प्रथिम्ना प्रथितः पृथिव्याम् ॥ ४५ ॥

---

१. दर्मलि—क०

युग्मम्

अहमस्मि यं ब्रवीषि त्वं
वद कोऽसीति नानकोऽपृच्छत् ॥
सुरचपतनामधेयं
मामवगच्छेति स जगाद ॥ ४६ ॥

अभूत्पुरा यो जनकस्य भृत्य
इत्यब्रवीन्नानकयोगिवर्यः ॥
सत्यं स एवेत्यभिधाय भक्त्या
पादौ ववन्दे स यतीश्वरस्य ॥ ४७ ॥

प्रेम्णोपगूढः स च नानकेन
कुटीं मदीयां[1] परिभावयेति[2] ॥
ऊचे तमामन्त्र्य जगाम योगी
स [3]सिन्धुरोऽधो नगराणि पश्यन् ॥ ४८ ॥

ययौ स मत्स्यनगरं लहरीनगरं ततः ॥
सुरत्याख्यं च नगरं शोभितं परया श्रिया ॥ ४९ ॥

मर्दनस्तमपृच्छच्च[4] कस्येदानीं धरापतेः ॥
मण्डलं यासि योगीन्द्र ? तमुवाच यतीश्वरः ॥ ५० ॥

पारे समुद्रं नगरी निर्मिता विश्वकर्मणा ॥
लङ्का विभीषणो यस्यामास्ते तां यामि सम्प्रति ॥ ५१ ॥

---

१. मदीयां–ख० ।
२. परियापयेति–क० ।
३. सं सिन्धु–ख० ।
४. पप्रच्छ–ख० ।

उड्डीनो हनुमानिव
नानकयोगी ततः पारे ॥
शतयोजनस्य सिन्धो-
रवातरच्चेन सह चावाम् ॥ ५२ ॥

सिन्धुरोधसि विलोक्य ततोऽस्मान्
राक्षसाः समगमन्नतिरौद्राः ॥
मर्दनो भयमवाप चकम्पे
[1]तन्सयानि गदितं यतिनेत्रे ॥ ५३ ॥

उवाच नानकः पश्य कर्तव्यं परमेशितुः ॥
अन्धीभूतास्ततस्तेऽसुर्विभीषणमिदं जगुः ॥ ५४ ॥

आयातः म तु सिद्धिमस्य महतीं श्रुत्वा वृतो राक्षसै-
श्चश्चामरवीजितः शशिनिभं छत्रं किरीटं वहन् ॥
यो नाम्नैव विभीषणो भगवतो भक्त्यातिशान्तान्तरः
शीलं मूर्तिधरं नु नानकयतिं पप्रच्छ कोऽसीति च ॥ ५५ ॥

भक्तोऽस्मि रामचन्द्रस्य यतिरित्यवदत्स तु ॥
पपात पदयोर्मूर्ध्ना[1] स्फुरन्मणिगणश्रिया ॥ ५६ ॥

आकर्ण्येति कथां रम्यां नानकस्य तपस्विनः ॥
बालसिन्धो ? सत्यमेतदिति प्रीत्याङ्गदोऽभदत् ॥ ५७ ॥

सत्यमेतदिति प्रोक्ते[2] तेन प्रेमपरिप्लुतः ॥
पश्चाहान्यंगदस्तस्यौ योगनिद्रामुपागतः ॥ ५८ ॥

---

1. इत्येवास्ति पाठोऽमयत्र । यद्यपि "त ≈ यानि" इति नविन्त्यम् ।

१. र्घा–क० ।
२. प्रोक्तो–क० ।

व्युत्थितोऽङ्गद इदं निजगाद
बूहि बाल ! किमतः परमासीत् ? ।।
बालसिन्धुरवदत्समनैषीत्
तं निशाचरपतिः स्वनिशान्तम् ।। ५९ ।।

तात ! रूपरचनापरिपाटी
जातरूपमधिगम्य गृहं[1] तत् ।।
बालसिन्धुरवदत्समनैषीत्
तं निशाचरपति. स्वनिशान्तम् ।। ६० ।।

राजोपचारविभवैर्निर्मीपणकरार्पितैः ।।
रत्नसिंहासनारूढो नानकः पूजितोऽभवत् ।। ६१ ।।

सौशील्यादेनयोः प्रीतिरेधामास परस्परम् ।।
बलादनुज्ञामादाय तस्य योगी जगाम सः ।। ६२ ।।

मर्दनेन कथितं कथयस्व
रामभक्त इति तेऽभिहितेन ।।
पादयोः स निपपात महात्मा
कः कदा ? कथमभूदथ रामः[2] ? ।। ६३ ।।

योगीश्वरेण कथितं शृणु मर्दनेदं
राजाभवद्दशरथो रघुवंशदीपः ।।
साकेतनाम्नि नगरे सरयूतटस्थे
तिष्ठन् शशास सकलां स महीमहीपान् ।। ६४ ।।

---

1. तात इति सम्बोधने । रूपरचनापरिपाटीजातरूप तत् गृहम् अधिगम्य इत्यन्वयः ।
2. श्लोक ६३ से १६८ श्लोक यावत् प्रस्तावात् यावन्नानकेन मर्दनं प्रति कथित रामचरित वर्णितमस्ति ।

१. स ८८–९० ।

तिस्रस्तस्याभवन् पत्न्यो रूपशीलकुलोज्ज्वलाः ॥
कौसल्या[1] च सुमित्रा च कैकेयी चेति विश्रुताः ॥ ६५ ॥

अविन्दतस्तामसुतं नृपस्य
विषीदतो भूरि वयो व्यतीतम् ॥
तमृष्यशृङ्गप्रमुखा मुनीन्द्रा
अचीकरन्निष्टिमभीष्टसिद्ध्यै ॥ ६६ ॥

प्रादुर्बभूव पुरुषो दहनादुदग्रो
मूर्ध्ना वहन्परमपायसपूर्णपात्रम् ॥
दिव्यान्नमेतदवनीश निजप्रियाभ्यो
विश्राणयेत्यभिदधौ स तिरोदधौ च ॥ ६७ ॥

भुक्त्वाऽथ तद्गर्भमधारयंस्ता
महोत्सवं भर्तृदशां दिशन्तः ॥
ग्रहैः शुभैः सूचितभागधेया-
नजीजनन्माररुचः कुमारान् ॥ ६८ ॥

क्षीरोदतीरमुपगम्य सुरैः समस्तै-
रभ्यर्थितो दशमुखस्य वधाय विष्णुः ॥
स्वीकृत्य शल्यहरणं शरणं त्रिलोक्या
वंशे रघोरवततार ततश्चतुर्धा ॥ ६९ ॥

कौसल्या सुषुवे रामं सुमित्रा लक्ष्मणं सुतम् ॥
शत्रुघ्नमपि कैकेयी भरतं शुभलक्ष्मणम् ॥ ७० ॥

दशरथः सुतजन्मनि हर्षितो
वसुचयं व्यसृजन्नवनैचिकीः ॥

१. ई।

१. र्या—ब
२. प्रोत्तो—ब॰ ।

पणवदुन्दुभिकर्करकाहला
ध्वनिरभून्ननृतुर्गणिकागणाः ॥ ७१ ॥

तेजस्विनस्तस्य सुता सुशीलाः
सर्वेऽपि सर्वेतरबुद्धिभाजः ॥
तथापि रामः स्वगुणैरुदारैः
प्रियः प्रजानामभवद्विशेषात् ॥ ७२ ॥

सुबाहुमारीचमुखैर्निशाचरै-
र्मखक्रियाविप्रकरैरुपद्रुतः ॥
अगाधबोधः खलु गाधिनन्दनो
धराधरं राममयाचतावितुम् ॥ ७३ ॥

नेच्छन्नपि स्वगुरुणा कथितानुभावं
प्राणप्रियं दशरथो विससर्ज रामम् ॥
सौमित्रिणा सह गताय पटुप्रभावां
तस्मै बलामतिबलां स मुनिर्दिदेश ॥ ७४ ॥

तं ताटकाभिपतति स्म मनुष्यभक्षा
तां कौशिकस्य वचनात्स जघान धन्वी ॥
अस्त्राणि गाधितनयः शतसंख्यकानि
संहारमंत्रसहितानि दिदेश तस्मै ॥ ७५ ॥

वेद्यां मुनेरुधिरवर्षमहत्सुबाहुं
मारीचमक्षिपदिषोस्तरसा समुद्रे ॥
रामो नमन्मुनिगणं च तुतोष तस्य
वीर्यं विलोक्य सकलोऽपि तपस्विसंघः ॥ ७६ ॥

जनकेन निमन्त्रितो नय-
न्मिथिलां दाशरथिं स कौशिकः ॥

पथि गौतमकामिनीशिला
बहु मेने रघुवीरमुद्धृता ॥ ७७ ॥

प्राप्ता भूमिभृता क्षितिं विलिखिता सीता सुता विश्रुता
तस्याः शुल्कमधीश्वरस्य धनुषः सज्जीक्रिया नेतरत् ॥
विश्वामित्रमिदं जगाद कुतुकाद्रामो निशम्याद्भुतं
पश्येयं भगवन् भवस्य नृपतौ न्यासीकृतं तद्धनुः ॥ ७८ ॥

अत्रान्तरे कौशिकमागतं स
श्रुत्वा विदेहः स्वयमाजगाम ॥
ननाम चानामयमन्वयुक्त
विसिस्मिये वीक्ष्य च तौ कुमारौ ॥ ७९ ॥

पप्रच्छ सोदश्चितचित्तवृत्ति-
रिमौ सुतौ कस्य शुभौ कुमारौ ॥
मुहुर्मनो रञ्जयती जनानां
रसौ सदेहाविव वीररौद्रौ ॥ ८० ॥

विश्वामित्रोऽन्यगादीदवति दशरथः सागरान्तां क्षितिं यो
यस्यायोध्याभिधाना निवसति नगरी चारु तीरे सरय्वाः ॥
तस्येमौ वंशदीपौ मखविहतिकरान् राक्षसान्नाशयित्वा
श्रुत्वा शैवं धनुस्ते नृप समुपगतौ द्रष्टुकामौ मयेह ॥ ८१ ॥

श्रुत्वा तस्य वचो जगाद जनकः कन्या ममाऽयोनिजा
तस्याः शुल्कमकारि तस्य धनुषो ज्यारोपमात्रं मया ॥
आकर्ण्येति समागतैर्नृपतिभिर्नारोपितं तद्धनुः
सज्यं चेद्विदधीत तद्रघुवरः सीतावरः स्यात्तदा ॥ ८२ ॥

तं कौशिकोऽब्रूत समानयन्तु
जनाः धनुः पश्यतु रामभद्रः ॥

ऊर्जस्वलैः पञ्चसहस्रमृत्यै-
रानाययामास नृपस्ततस्तत् ॥ ८३ ॥

अजगरमिव तद्धनुर्द्रढीयः
शिवकरसाक्षिकगौरवं पुराणम् ॥
स्मितवदन उपाददेऽथ रामः
सपदि बभञ्ज स [1]रञ्जयन् जनौघम् ॥ ८४ ॥

उत्थापनमारोपणमाकर्षणमस्य नो विविदुः ॥
वज्रविदीर्णगिरेरिव किन्तु निपेतुर्ध्वनेर्मनुजाः ॥ ८५ ॥

रामस्य बलमालोक्य विस्मितो मिथिलापतिः ॥
आकारयद्दशरथं विश्वामित्राभ्यनुज्ञया ॥ ८६ ॥

आहूतो मिथिलेशदूतनिवहैः श्रुत्वा सुतस्योदयं
राजा पंक्तिरथो ययावतिरयो [2]विप्रैर्वसिष्ठादिभिः ॥
माद्यन्मंदसहस्रसिंधुरघटादानच्छटादुर्दिनैः
कुर्वन् गाढमकाण्ड एव मिथिला[3] रथ्याशिलाः पिच्छलाः ॥ ८७ ॥

समागमे प्रीतिरभूदुदारा
राज्ञोः सुविज्ञातमहामहिम्नोः ॥
जग्राह पाणिं जनकात्मजाया
रामोऽभिरामो विधिवत् सुलग्ने ॥ ८८ ॥

---

१. रच नयन्—क० + ख० ।
२. वसिष्ठाभिः—क० ।
३. मिथिमिला—क० ।

लक्ष्मणायोर्मिला दत्ता भरताय च माण्डवी ॥
शत्रुघ्नाय शुभे लग्ने श्रुतकीर्तिरिति श्रुता ॥ ८९ ॥

कटाक्षवडिशैर्बद्धा मिथिलाया मृगीदृशाम् ॥
पस्पंदिरे मनोमीना न मनाग्वरयात्रिणाम् ॥ ९० ॥

आतिथ्येन सुतोषितो दशरथो रत्नैर्हयैर्दन्तिभिः
प्रेम्णा त्यक्तुमनिच्छतोपि नृपतेर्लब्धाप्यनुज्ञोऽगमत् ॥
मार्गे भीतिमतीव तस्य जनयन् रामो मुनिर्भार्गवः
कोदण्डं परशुं वहन् स्वमहसा क्षत्रं दहन्नागतः ॥ ९१ ॥

रामो राममभाषत त्वमधुना जातो बली क्षत्रियः
कोदण्डस्य गुरोर्मम प्रमथनादेतद्धनुर्वैष्णवम् ॥
मौर्व्या योजनदृष्टवीर्यविभवे युद्धक्षमे मे त्वयि
प्रोद्दामः परशुः पतिष्यति ततः क्षत्रस्य कालानलः ॥ ९२ ॥

आदाय तद्धनुरथस्मितवक्त्रपद्मो
रामश्चकार सगुणं निजगाद चेदम् ॥
नायं शरो मम वृथा कथयस्व लोकान्-
हन्यां तवोत[1]गतिमत्र तपस्विवर्य ! ॥ ९३ ॥

भोगीव भग्नगरलो भृगुजो बभाषे
दत्ता मया क्षितिरियं किल कस्य पापं ?
नास्यां वसामि दिनमेकममुष्य वाचा
लोकांस्ततो जहि गतिं न जयस्तवास्तु ॥ ९४ ॥

तपोर्जितांस्तस्य निहत्य लोकान्
जगाम रामश्च जगाद रामः ॥

१. तवोत्तमगति-प० ।

आत्मानमापद्दिगमान्नरेंद्रो
मेने पुनर्जातमिवात्मजं च ॥ ९५ ॥

रूपशीलकुलोपेताः प्रतिगृह्य स्नुषास्ततः ॥
कौसल्याद्या मुमुदिरे महिष्यः कोशलेशितुः ॥ ९६ ॥

लावण्यशीलसुभगा रघुनन्दनस्य
स्वान्ते नितान्तमवसन्मिथिलेशकन्या ॥
रामोऽपि कामकमनीयतनु क्वचिन्न
विश्लेषमाप मनसो जनकात्मजायाः ॥ ९७ ॥

रामस्य [1]जगति ख्यातैः [2]शौर्योदार्यादिभिर्गुणैः ॥
न पितैव परं प्रीतः किन्तु प्रकृतयोऽखिलाः ॥ ९८ ॥

प्रहितेनाश्वपतिना चिरौत्सुक्येन केश्यान् ॥
नीतौ भरतशत्रुघ्नौ मातुलेन युधाजिता ॥ ९९ ॥

पौरजानपदप्रीतिं विशेषाद्वीक्ष्य राघवे ॥
राजा दशरथो ज्यायानभिषेक्तुं तमैहत ॥१००॥

मन्थरा तदुपलभ्य कैकयीं
दुर्वचं नयमिवाऽवदत्स्खला ॥
पश्य राममभिषिञ्चते नृपो
दूरदेशमपनीय ते सुतम् ॥१०१॥

१, जगत्ख्याते –क० ।
२ शौर्यदर्पा–क० ।

राज्यात् परिभ्रश्यति ते तनूजो
मुग्धे ! मदुक्तं यदि नातनोपि ? ॥
वरौ पतिं प्रार्थय पूर्वदत्तौ
निबन्ध्य पूर्वं शपथैरनेकैः ॥१०२॥

वसत्वरण्ये मुनिवेषधारी
चतुर्दशैकेन समास्तु रामः ॥
अन्येन राज्यं भरतो लभेत
सदेशकोशं बलवाहनाद्यम् ॥१०३॥

हितापि रामस्य नितान्तमेषा
दैवात् तदुक्त्या विकृतिं वमाज ॥
नेष्टे जनो नूनमयं मतीनां
विधातुरध्वानमलं पतीनाम् ॥१०४॥

श्वो भाविन्यभिषेकमङ्गलविधौ रामस्य निर्धारिते
शुद्धान्तं स्वमगान्नृपो दशरथो वक्तुं प्रियायै प्रियम् ॥
क्रोधागारगतां तु तामनुनयंस्तत्सत्यपाशैः सितः
श्रुत्वा तन्मुखनिर्गतौ वत वरावानर्च्छ मूर्च्छां भुवि ॥१०५॥

विवासयामास सुतं सुतघ्नो
राजा रुदन् हन्त ! जरापरीतः ॥
तपस्विवेषा विपिनं प्रयाताः
सीता सुमित्रातनयश्च रामः ॥१०६॥

राजाज्ञया ताननयत्सुमन्त्रो
रथेन गङ्गां गुहनामधेयः ॥
अतीतरत् तान् सगुहं सुमन्त्रं
त्यक्त्वा भरद्वाजमुपागतास्ते ॥१०७॥

तस्योपदेशादगमत्प्रयागा-
च्छ्यामं वटं वीक्ष्य तु चित्रकूटम् ॥
तथा अदूरे कृतपर्णशालो
रामः स रामः स च लक्ष्मणोऽस्थाद् ॥१०८॥

अयोध्यावासिनः सर्वे रामादर्शनदुःखिताः ॥
परावृत्य सुमन्त्रश्च पुरीं म्लानमुखा ययुः ॥१०९॥

निशम्य रामं गतमार्तचित्तः
कौसल्यया सार्धमुवास राजा ॥
वियोगदुःखेन न या सुतस्य
साध्व्याप्युपालब्ध इदं जगाद ॥११०॥

अनुक्तपूर्वं किमिदं ब्रवीषि ?
न कामचारः सुतविप्रवासे ॥
ममैव कालान्तरकिल्बिषस्य
प्रिये ! विपाकः समुपस्थितोऽयम् ॥१११॥

पूर्वं मया यः श्रमणः सुदूरा-
त्कुम्भो वने हस्तिधिया विध्वस्तः ॥
अन्येन शप्तोऽस्मि तदीयपित्रा
पुत्रस्य शोकेन मरिष्यसीति ॥११२॥

तन्मे बुद्धिविपर्ययोऽयमभवन्नार्याऽन्यया वञ्चितो
रामं सर्वजनाभिराममबुधो बालं वनायात्यजम् ॥
हा ! शोकाय नुद प्रसीद सुमते ! तातः परैत्येष ते
वृद्धस्त्वद्विरहादिति प्रविलपन्प्राणान् जहौ पार्थिवः ॥११३॥

वसिष्ठादिभिराहूतो मातामहगृहादथ ॥
न राज्यमैच्छद् भरतो मातरं बह्वधिक्षिपन् ॥११४॥

तैलद्रोण्याः समुद्धृत्य संस्कृत्य पितरं ततः ॥
रुरोद भरतो भूरि वशिष्ठस्तमबोधयत् ॥११५॥

स राजदारः सगुरुः ससैन्यो
जगाम रामं भरतो नु नेतुम् ॥
नासौ परावर्त्तत पादुके स्वे
भक्त्यार्पितोऽदाद् भरताय भूपः ॥११६॥

ते तु भद्रासने न्यस्य नन्दिग्रामे जितेन्द्रियः ॥
राज्यं स सचिवैः सार्धं मुनिवेषधरोऽकरोत् ॥११७॥

[1]दृष्ट्वाऽत्रिमनुसूयां च दण्डकारण्यमागमत् ॥
विराधमवधीद्रामो रक्षाकामो द्विजन्मनाम् ॥११८॥

मुनीन् सुतीक्ष्णप्रभृतीन् विलोक्य
कुम्भोद्भवभ्रातरमाजगाम ॥
अगस्त्यमागच्छदनेन रामो
दत्तायुधः पञ्चवटीं जगाम ॥११९॥

सौमित्रिणा तत्र [2]निकृत्तनासा
दुष्टा भृशं शूर्पणखोपसृत्य ॥
[3]सद्यो जयामास खरादिसेनां
सा राममासाद्य[4] [5]विराममापत् ॥१२०॥

---

१. त्रिमनघू-ख०
२. निकृन्त-ख०
३. नद्यो-ख०
४. मोसाद्य-ख०
५. विनाशमागात्-ख०
विरामं प्रापत्-ख०

चतुर्दशसहस्राणि यातुधानान्निहत्य सः ॥
सप्रेमसंगतोऽतुष्यत् सीतया लक्ष्मणेन च ॥१२१॥

दशाननः सूर्पणखाप्रयुक्तो
मारीचमायो जयति स्म कृत्ये ॥
भीतोऽपि रामात् स च रावणस्य
भीत्या विचित्रो हरिणो बभूव ॥१२२॥

मारीचो मृगमायया परिचरन्नभ्यर्थितः सीतया
तं रामोऽन्वगमद्विदेहदुहितुर्वाचा पुनर्लक्ष्मणः ॥
शून्ये तामहरत् त्रिदण्डिवपुषा रक्षोधिपो रक्षणं
हत्वा हन्त! जटायुषं हतरयो यातः ससीतो दिवि ॥१२३॥

नीयमाना दशास्येन रुदती करुणं बहु ॥
वानरान् वीक्ष्य चिक्षेप सीता स्वाभरणं गिरौ ॥१२४॥

अशोकवनिकायां सा स्थापिता तमनिच्छती ॥
संवत्सरावधिं[I] कृत्वा रावणेन दुरात्मना ॥१२५॥

रामः परावृत्य न पर्णशाला
स्थितामपश्यज्जनकस्य कन्याम् ॥
रात्रिंचरैर्हन्त! हृताऽशिता वा
सीतेति सौमित्रिमभिव्यलापीत् ॥१२६॥

गोदावरीतीरदरीवनेषु
विचिन्वतस्तस्य जटायुषोऽक्रमम् ॥
निहत्य मां राघव ! रावणेन
सीताहृतायां विचिनोपि वत्स ! ॥१२७॥

I. सरावधि षण्मासावधिम् ।
१. दिविदि—क०

इत्युक्तवन्तं मृतमेनमाशु
संस्कृत्य रामो दहने दयालुः ॥
हत्वा कबन्धं शबरीमुदीक्ष्य
पम्पाञ्च सुग्रीवमुपाजगाम ॥१२८॥

हनूमता कारितयोश्च मैत्री
प्रतिश्रुतं वालिविवासितस्य ॥
रामेण राज्यं तपनात्मजस्य
परीक्ष्य तुष्टस्य बलं हि सख्युः ॥१२९॥

प्रियावियोगेन विदूयमान-
माश्वासयामास ततः सखायम् ॥
सन्दर्शयामास च भूषणानि
सीता निरस्ता निकृती कपीन्द्रः ॥१३०॥

किष्किन्धामभिगम्य वालिनमहन्[1] सुग्रीवघातोद्यतं
रामो राज्यमदात् सुताय सवितुः सम्पातिवाक्यात् प्लुतः ॥
सिन्धोः पारमुपेत्य वाततनयो मुद्रां ददन् मैथिली-
माश्वास्याक्षमुदस्य राममनयत् सीताविनीर्णाम्मणिम् ॥१३१॥

सुग्रीवेण समाहूता नानानगनिवासिनी ॥
आगता वानरीसेना कम्पयन्ती वसुन्धराम् ॥१३२॥

अङ्गदो द्विविदो मैन्दो नलो नीलश्च जाम्बवान् ॥
केसरी पनसस्तीरः स्वस्वयूथैः प्रतस्थिरे ॥१३३॥

वीरैः पर्वतयोधिभिः परिवृता गोपुच्छऋक्षोत्कटा
तूर्णं सागरतीरमेत्य महती सेना निविष्टा ततः ॥

---

१. भट्टत्सु—क०

नीत्या संधिमभीप्सुरुद्धतधिया लङ्केश्वरेणोज्झितो
भ्राता तस्य विभीषणोऽथ शरणं रामं शरण्यं ययौ ॥१३४॥

क्रुद्धयद्राघवबाणभीतिकथितस्वोल्लंघनोपायके
संमत्या च नलं चकार विपुले सेतुं ततः सागरे ॥
रुद्धां नागसहस्रवीर्यविकटैर्लङ्कां विशङ्कायित-
लीलाव्रतवलीमुखैर्रघुपतेः संचुक्षुभे तेजसा ॥१२५॥

सुग्रीवः प्रथमं नियुध्य मुकुटं चिक्षेप लङ्कापते-
रासीद्वानररक्षसामविरतं मांसासृजां कर्दमः ॥
यो यो वीर्यमदादपारप्लवनो रात्रिचरो निर्गतः
क्लृप्तोऽभूत्स स वीरवानरभटैः कीनाशदंशातिथिः ॥१३६॥

नीलादिभिः प्रहस्ताद्या हता हनुमता परे
अंगदेन हतावीरा मैन्देन द्विविदेन च ॥१३७॥

बबन्ध बाणैः फणिरूपधारिभिः
सुतो दशास्यस्य तु रामलक्ष्मणौ ॥
गरुत्मतो दर्शनमात्रतो गता
भुजङ्गमास्तौ द्विपतो निजघ्नतुः ॥१३८॥

अन्तर्हितो मेघनादो रामलक्ष्मणवानरान् ॥
विव्याध सायकैस्तीक्ष्णैस्तेऽपतन् मूर्च्छिताः क्षितौ ॥१३९॥

जाम्बवद्वचनाद्वायुसूनुर्द्रोणाद्रिमानयत् ॥
विशल्यकरणीं गंधाद्विशल्यास्ते ततोऽभवन् ॥१४०॥

[2]को वापरः सागरलङ्घने स्याद्
विना हनूमन्तमनन्तवीर्यम् ॥

---

१. गिरो—क०
२. भोग्मोविस:—ख० ।

को वा दशास्यस्य तलप्रहाराद्
रणाङ्गणे व्याकुलतां विदध्यात् ॥१४१॥

कुम्भकर्णदशकन्धरादयो
रामबाणविसरैर्विलिम्पिरे ॥
मेघनादमवधीच्च लक्ष्मणो
होमकर्मणि गतो निकुम्भिलाम् ॥१४२॥

लङ्काधिपत्यमतिसृज्य विभीषणाय
सीतां परीक्ष्य दहने विधिवासवाद्यैः ॥
शस्तः कपीन् युधि हतान् मघवद्वरेण
संजीव्य पुष्पकगतोऽथ जगाम रामः ॥१४३॥

सुग्रीवेण विभीषणेन मरुतः पुत्रेण शाखामृगै–
र्जानक्या सह लक्ष्मणेन मुदितोऽयोध्यां गतो राघवः ॥
राज्यं प्राप धरां शशास सकलामासन्नतन्नेतरो
दुर्भिक्षं न न च क्वचित् सुतमृतिस्त्यक्तो न धर्मो जनः ॥१४४॥

अभिनन्दितुमागतादगस्त्या–
द्दशकंठादिहनूमदादिगाथाम् ॥
भरतादिभिरन्वितः समायां
रघुनाथः श्रुतवान् विसिस्मये च ॥१४५॥

दशसहस्रसमाः सकलां मही-
मशिषदेष निरर्गलशासनः ॥
सुचरितैः सततं रमयन्प्रजा
जनकजां स्वगुणैरनुरञ्जयत् ॥१४६॥

लोकापवादमयशस्करमात्मपत्न्या
भद्रान्निशम्य अपर्यैरुपरुध्य बन्धून् ॥

प्राचेतसाश्रममनाय यदा तदार्यां
सौमित्रिणा प्रियतमामपि राघवस्ताम् ॥१४७॥

शत्रुघ्नश्च्यवनादिविप्रवचनाद् दाराभिषिक्तो व्रजन्
क्रव्यादं लवणं निहन्तुमवसत् प्राचेतस्याश्रमे ॥
सीता तत्र यमौ सुतौ कुशलवौ सूते स्म तस्माद्गतः
सानन्दो मधुरां न्यवेशयदसौ हत्वा रणे राक्षसम् ॥१४८॥

शंबुकं वृषलं निजेन वपुषा स्वर्गं यियासुं तपः
कुर्वाणं विनिहत्य विप्रतनयं रामस्ततोऽजीवयत् ॥
लेभे चामरणं प्रसन्नमनसः कुम्भोद्भवादाश्रमे
गोमत्याश्च तटेऽश्वमेधमकरोत् तीर्थोत्तमे नैमिषे ॥१४९॥

निमन्त्रितास्तत्र नृपाः समागता
विभीषणः सूर्यसुतोऽनिलात्मजः ॥
स ऋक्ष[1]गोपुच्छवलीमुखेश्वरा
दिगन्तवास्तव्यमुनीश्वरा अपि ॥१५०॥

वाल्मीकिरागात् सह सीतया मुनिः
कुशीलवौ तस्य निदेशतो मखे[2] ॥
अगायतां रामचरित्रमुत्तमं
शुश्राव तद्दाशरथिः सबान्धवः ॥१५१॥

अष्टादशसहस्राणि सुवर्णानामदात् प्रभुः ॥
न च तौ तदगृह्णीतां सन्तुष्टौ फलमूलतः ॥१५२॥

रामो रामायणाद् बुध्वा तौ च सीतासुतौ कृती ॥
आजुहाव पुनः शुद्धैर्वाल्मीकिं सीतया सह ॥१५३॥

---

१. स ऋक्ष–क॰
२. मुखे–क॰

तीरे सरय्वाः करणानि रुन्ध्वा
सौमित्रिरंतर्धिमवाप योगात् ॥१६०॥

रामेण राज्यं प्रतिपाद्यमानं
न गर्हमाणो भरतोऽनुमेने ॥
कुशं तदुक्त्या किल कोशलेषु
नृपोऽप्यपिञ्चल्लवमुत्तरेषु ॥१६१॥

सुबाहुं मथुरायां तु वैदिशे शत्रुघातिनम् ॥
अभिषिच्य सुतौ राज्ये शत्रुघ्नः शीघ्रमागतः ॥१६२॥

मैन्दं तथा द्विविदमृक्षपतिं च रामो
यावत्कलिं कलय जीवितमित्युवाच ॥
आकल्पमत्र निवसेति भुवं जिहासु—
र्वातात्मजं च निजगाद विभीषणं च ॥१६३॥

तीर्थे सरय्वाः किल गोप्रतारे
मग्नो निजं धाम जगाम राम. ॥
प्रजाः समग्रा भरतः परे च
शत्रुघ्नसुग्रीवमुखा ययुस्तम् ॥१६४॥

एकादशसहस्राणि समा राज्यं चकार सः ॥
गतोऽथ वैष्णवं लोकमयोध्या निर्जनाऽभवत् ॥१६५॥

वाल्मीकिमुख्यैः कविभिः कृतस्य
कोशश्चरित्रस्य शतं तु तस्य ॥
एकैकवर्णश्रवणेन यस्य
पापानि नश्यति महान्ति सद्यः ॥१६६॥

सोऽयं रामो मर्दन ! ब्रह्मसाक्षा—
त्सम्यग्वेदे तापनीये[1] निरुक्तः ॥

---

१. रामतापनीयोपनिषदीत्यर्थः ।

दैवादन्तेऽप्युच्चरन्नाम यस्य
संसाराब्धेः पारमायाति जन्तुः ॥१६७॥

विभीषणो हनूमांश्च तत्प्रेमग्रवणौ सदा ॥
अहं च भक्तो रामस्य येऽपरे च सचेतसः ॥१६८॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
श्रीरामचरितं नाम पञ्चदशः प्रस्तावः ॥

—: • :—

# अथ षोडशः प्रस्तावः

वाग् देवतां स्मरतु [1]जागरणे मनो मे
स्वप्ने च पश्यतु तदीयवपुं मनोज्ञाम् ॥
लीनं सुषुप्तिसमयेऽस्तु तदीयतत्त्वे
वाण्या विवेकमखिलं कलयेच्च विश्वम् ॥ १ ॥

गृहं [2]कियद्दूरमितो ममेति
वीणाधरोऽपृच्छदुवाच योगी ॥
उत्कण्ठितो यद्यसि मर्दन ! त्वं
तदा नयेयं तलवण्डिकां त्वाम् ॥ २ ॥

यदृच्छयेदं गदितं पियामा
न मेऽस्ति सार्धं भवतो पिता हे' ! ॥
इतीरितो वाद्यधरेण योगी
जगाद पूर्वापरबोधसिन्धुः ॥ ३ ॥

अहं गमिष्यामि यदेश इच्छे-
दन्यस्य हेतोर्न जहीहि सङ्गम् ॥
तं मर्दनः स्माह शरीरपात
किं [3]सन्निधत्ते ? ममसर्ववेदिन् ! ॥ ४ ॥

भवेत्कदा कुत्र स [3]सन्निधौ ते
ममेशितुः स्वर्गगतिप्रदस्य ॥

---

१. जागरित—ख०
२. कियद्दूर—क०
३. सन्निधौ—ख०

किन्त्वेतदाकर्णय दाहनीयो
न भूमिगर्भेऽह्यमनुप्रवेश्यः ॥ ५ ॥

दाहेन देहस्य गतिं लभेयं
विशेषतः सौम्य ? भवत्कृतेन ॥
ऽदग्धदेहा हि सुहृज्जनेन
क्लिश्यन्ति योनीर्विविधा व्रजन्तम् ॥ ६ ॥

ऊचे गुरुस्तं च गभीरघोषो
गान्धारदेशे तव देहपातः ॥
भावी दिने पञ्चम एव भावी
तिस्रोऽग्निशिष्टाः [1]समुपेत्य प्रापुः ॥ ७ ॥

त्वां तत्र वक्ष्यामि विधानतश्च
स्मरन्हरिं मुक्तिमवाप्स्यसि त्वम् ॥
न मर्दनः त्वं तु विधेहि चिन्तां
ममानुवृत्तिर्विफला भवेत्किम् ? ॥ ८ ॥

ननाम मर्दनस्तुष्टो जगाम यतिनायकः ॥
चतुर्थे दिवसे प्राप दरवेलाभिधं पुरम् ॥ ९ ॥

अत्रैव[2] किं मरिष्यामीत्यपृच्छन्मर्दनस्ततः ॥
योगी जगाद मर्तोऽसि श्वः खर्जूरपुरे खलु ॥ १० ॥

प्रारब्धभोगशेषोऽस्ति तत्राहारस्तवानघ[3] ! ॥
मुक्तानामपि हेतुर्हि प्रारब्धं देहधारणे ॥ ११ ॥

---

१. समुपेय दापुः—क०
२. वर्कि—क०
३. सूघ—क०

पञ्चमेऽहनि खर्जूरपुर प्राप्यापि मर्दनः ॥
जघास खर्जूरफलं किञ्चिदस्वास्थ्यमाप च ॥ १२ ॥

घटीत्रयं तत्र दिनस्य शिष्टं
जगाद योगी किमु मर्दनेति ! ॥
श्वासा नवैवोर्वरिता नमस्ते
प्रयामि तं मर्दन इत्युवाच ॥ १३ ॥

योगीव जानासि कथं त्वमेत-
त्तेनेति पृष्टः स इदं जगाद ॥
नाभौ मम ग्रन्थिरभिघतायं
वायोस्ततो [1]वेद्मयनुकम्पया ते ॥ १४ ॥

श्वासेषु गण्यमानेषु मया गुरुनिदेशतः ॥
दशमो नागमच्छ्वासः[2] स ममार हरिं स्मरन् ॥ १५ ॥

ईशं ववन्दे शिरसा यतीशो
जगाद चेदं महिमैष कर्तुः ॥
अवाप्टिमं नेश्वर ईक्षितोऽस्ति
त्वमीश्वरोऽस्माकमनावृतोऽसि ॥ १६ ॥

नववस्त्रवृतं वपुस्तदीयं
विधिवद्दाहमवाप योगिवर्यात् ॥
महतामनुकम्पया महत्त्वं
[1]नितरां फल्गुरपि प्रपद्यते हि ॥ १७ ॥

---

1. दशमतां साम्राज्येन विनोदसमर्पणम्यार्था तरन्यागस्य गरिमा ॥

१. वेद्मयनु—क०

२. श्वासा —क०

न सेतुबन्धो नयनातिथीकृतो[1]
धृतो न रामेशविलोकनोत्सवः ॥
इतीरितो योगिवरो मयाऽवद
न्नदस्ति तीर्थं खलु नाल ? दूरतः[2] ॥ १८ ॥

तथापि व्रज यद्यस्ति तत्रोत्कण्ठा विलोकने ॥
इत्युक्त्वा नानकोगच्छदहं च तदनुग्रहात् ॥ १९ ॥

सेतुर्दृष्टो नलकृतो महासर्प इवाम्बुधौ ॥
तस्य मौलौ मणिरिव श्रीरामेशो विलोकितः ॥ २० ॥

गोरक्षो मत्स्येन्द्रो भर्तृहरिश्चापि लहुरीपाः ॥
चर्पटनाथो गोपीचन्द्रः सिद्धा विलोकितास्तत्र ॥ २१ ॥

भर्तृहरिस्तमपृच्छत्—
किं ज्योतिः ? सर्वशेखर ब्रूहि ॥
को वाऽद्वितीय उक्तः ?
कमपारं वक्षते ? सुधियः ॥ २२ ॥

योगी योगं लभते
केन ? कथं याति निर्वाणम् ? ॥
तत्त्वं कुत्रान्विच्छे—
दपगच्छेद्वैतदुर्मतिः[2] केन ? ॥ २३ ॥

कथं तरे दुस्तर[3]सम्भृति ? भोः ?
जीवन्मृतः कः खलु जीवलोके ? ॥

---

१. तिथिकृतो—क०

२. दूरत—क०

३. संभूति—क०

दीक्षाप्रदः कश्च ? गुरुर्गरीया-
निद वदेर्नानक ? 'सम्प्रधार्य'[१] ॥ २४ ॥

गुरुस्तमूचे शृणु सर्वशेखरं
निरञ्जनज्योतिरुदीरितं परम् ॥
य एष आत्मा स किलाद्वितीयको
न लब्धपारः स हि सीमवर्जितः ॥ २५ ॥

गुरुन्मुखो योगमुपैति योगी
ज्ञानेन निर्वाणमुपैति दान्तः ॥
कोशेषु तत्त्वं मृगयेत शास्त्रै-
द्वैतप्रमोक्ष्यं मननादुपैति ॥ २६ ॥

संसारसिन्धोरुपयाति पारं
विवेकतः केवलविष्णुभक्तः ॥
जीवन्मृतो मानुषदेहधारी
य ईश्वरे प्रेम न संतनोति ॥ २७ ॥

गुरुर्गरीयान्स हि यः स्वशिष्यं
मज्जन्तमुत्तारयते भवाब्धेः ॥

---

१ सप्रधार्य-क०

I. भर्तृहरेः-प्रश्नग्योत्तर मर्नैऽत्र नानेन दत्तम् ॥

प्रश्नाः — उत्तराणि :—

i. किं सर्वशेखरं ज्योतिः = निरञ्जनज्योतिः ।
ii. कः अद्वितीयः = आत्मा ।
iii. केन योगी योगं लभते केन च निर्वाणम् — गुरुणा योगं ज्ञानेन निर्वाणम् ।
iv. तत्त्वं कुत्र मृगयितव्यम् = शास्त्रेषु ।
v. द्वैतमुक्तिः केन अवाप्यते = मननात् ।
vi. को दीक्षाप्रदः = गुरुः ।
vii. कश्च गुरुर्गरीयान् = यः उत्तारयेत् ।

[1]गोरक्ष ऊचे विजितेन्द्रियो यः
सत्यव्रतः साधुनिरोमणिः सः ॥ २८ ॥

जीवोऽयमुक्तो वद किं स्वरूपो ?
विस्तार एतस्य विलोक्यते कः ? ॥

केनारमेतायमुपाधिसिद्धि-
मन्तःस्थितः केन विभाव्यते च ? ॥ २९ ॥

किं ज्योतिरुक्तं सकलप्रकाशं ?
कुतोऽयमागच्छति ? कं प्रयाति ? ॥

[1]पिण्डे विलीने क्वमुपैति जीवो ?
गोरक्षपृष्टो वद नानक ? त्वम् ॥ ३० ॥

ततोवदन्नानकयोगिराजः
प्रत्यक्षितास्खण्ड[2]चिदात्मतत्त्वः ॥

सत्यस्वरूपः कथितस्तु जीवः
प्राणास्तु विस्तार इवास्य देहे ॥ ३१ ॥

संस्कारलब्धस्य कलेवरस्य
रसादिमूर्ति प्रकरोति तेजः ॥

शब्देन चान्तःस्थित एष बुद्ध-
स्तेनैव साकार इव प्रतीतः ॥ ३२ ॥

---

1. मर्दाहरे पश्चात् गोरक्ष प्रश्नाध्याय।

प्रश्नाः :— उत्तराणि :—

i. जीवः किं स्वरूपः = सत्यस्वरूपः

ii. क एतस्य विस्तारः = प्राणाः

iii. उपाधिसिद्धिः केन आरम्भेन = तेजसा

iv. केन अन्तः विभाव्यते = शब्देन

v. सकलप्रकाशं ज्योतिः कुत आयाति क्व च याति = ब्रह्मण।

१. पठे—क॰।

२. संड—क॰।

ब्रह्मप्रसिद्धं सकलप्रकाशं
तवोऽयमागच्छति तत्प्रयाति[1] ॥
पिण्डे[2] विलीने समुपैति जीवः
पिण्डान्तरं[3] ज्ञानजनिर्न यावत् ॥ ३३ ॥

मनोऽतिघातिर्निगमो घनश्च
गुरुश्च शिल्पी सुमतिश्च मुद्रा ॥
सत्संप्रदायः खलु टंकशाला
क्षीरत्वाऽमृतं ब्रह्म निपीय मायेत् ॥ ३४ ॥

गोरक्ष ऊचे बत ! विस्मृतोऽहं
पन्थानमादशं मे पुराणम् ॥
तं नानकोऽभाषत भो यतीन्द्र !
गुरोरलभ्यं न किमप्यवेहि ! ॥ ३५ ॥

अवस्थात्रितये पञ्चपञ्चान्तरक्षचतुष्टये ॥
कोशेषु पञ्चस्वन्विच्छन् सप्तप्रकृतिसङ्गतः ॥ ३६ ॥

नवद्वारे पुरे क्रीडन् दशमं द्वारमाश्रितः ॥
शृण्वन्ननाहतं योगी यत्नादमृतमश्नुते[1] ॥ ३७ ॥

युग्मम्

शास्त्रैः पुराणैर्निगमैरधीतै-
र्निःसंशयं तत्त्वमवाप्यते किम् ? ॥

1. अनाहतध्वनिश्रवणात्परधारणि यत्नादेवामृत लभ्यते । अनस्तत्रापि योगिना यत्न करणीय इति व्यज्यते ॥

१. प्रयाति–क० ।

२. पिडे–क० ।

३. पिडान्तर–क० ।

विना कृपां साधुगुरोः सदैव
मुकुन्दनाम्नामुपदेशकस्य ॥ ३८ ॥

भ्रमन्तु तीर्थानि जयन्तु देवान्
जपन्तु मन्त्रान् [२]गिरिगह्वरेषु ॥
यथो गुरुर्दर्शयिता परस्य
गोरक्ष ! हे भर्तृहरे ! न चान्यः ॥ ३९ ॥

[1]अचलवटाले भावी
सिद्धानां श्वः समागमो भूयान् ॥
[2]शरमुनिजलधिशशाङ्काः
क्रोशा गम्या इतः सौम्य ! ॥ ४० ॥

यदि गच्छसि गच्छ त्वं
नानक ! सिद्धोऽसि सर्वशक्तिरसि ॥
इति गोरक्ष गिरोन्ते
नानक ऊचे विनीतवचाः ॥ ४१ ॥

त्वं व्रज परिणतयोगो
मम तु मनुष्यस्य का शक्तिः ! ॥
उदडायि पादुकां मो-
स्त्वयेति तं स्माह भर्तृहरिः ॥ ४२ ॥

नानक ऊचे सत्यं
वदपि महेशस्य माहात्म्यम् ॥

---

1. अचलवटाल. पर्वतास्य नाम ।
2. १४७५ क्रोशाः ।
१. मुकन्द–क० ।
२. गह्वरे–क० ।

यूयं व्रजत तदाज्ञा
यदि पुनरहमागमिष्यामि ॥ ४३ ॥

उड्डीनास्ते सिद्धा
नानक उड्डीयताहं च ॥
अचलवटाले गत्वा-
ऽश्वत्थतले संस्थितावावाम् ॥ ४४ ॥

पश्चादागत्य गोरक्षो नानकं पूर्वमागतम्[1] ॥
आदेशमूचे तेनोक्तमादेशः परमेश्वरः ॥ ४५ ॥

भर्तृहरिस्तमथोचे
कमिष्टमासेव्य सिद्धतां तनुपे ? ॥
तेनोक्तं जगदीशा-
दिष्टोऽन्यः सिद्धिदोस्ति मम ॥ ४६ ॥

पात्राणि नर्तकानामाचक्रुपुः शक्तितः सिद्धाः ॥
तेषु रुदत्सु दयालुर्योगी भृत्यपर्ययत्तानि ॥ ४७ ॥

मेलके वसिते तत्र ऽत्यभिज्ञाय नानकं ॥
प्राणमन् केऽपि केचित्तु दुष्टभावमदर्शयन् ॥ ४८ ॥

मां नानकोऽब्रोचदितो व्रजावः
पुत्रं ग्रहीतुं खलु मर्दनस्य ॥
तं दर्शयिष्यामि पिता तदीयो
भस्मीकृतो यत्र [2]तमक्षदेशम् ॥ ४९ ॥

---

1. आर्यायामत्र दृश्यतां ।
   नानकसिद्धि ॥
२. तमग–र० ।

गान्धारदेशे भवतश्च साधू
तौ पूर्वनिर्वर्तितसंविदौ मे ॥
समागमस्ते न तयोर्विधेयः
[1]प्रतीच्छतोर्मां किल भूरिकालम् ॥ ५० ॥

मर्दनस्य [1]सहजादसंज्ञकः[2]
सूनुरस्ति तलवण्डिकापुरे ॥
एवमुक्तवति मय्यगादसौ
सार्धमेव तलवण्डिकां मया ॥ ५१ ॥

पितुर्मदीयस्य स चन्द्रभानोः
कूपस्य पार्श्वे निशि सङ्गतोऽभूत् ॥
ऊचे मृतौ मे पितरौ प्रवीणौ
चोलाररायः पृथिवीपतिश्च ॥ ५२ ॥

लालः पितृव्यो म्रियतेऽधुना तु
ज्ञाता स चेद्द्वेष्टयितेह मोहात् ॥
अलक्षितोऽन्यैस्तदितः प्रयाहि
तमाह्वय त्वं सहजादसंज्ञम्[3] ॥ ५३ ॥

गते निशाया घटिका चतुष्टये
ततो गतोऽहं सहजादसंज्ञम्[4] ॥
स निर्गतो मामुपलभ्य पादयोः
पपात कालेन विलोक्य विस्मितः ॥ ५४ ॥

---

1. सहजादः मर्दनस्य पुत्रः ।
१. प्रतीच्छतो–क० ।
२. सज्ञकः–क० ।
३. सज्ञम्–क० ।
४. महाम्–क० ।

उवाच नानकाख्येन प्रेषितौ द्वौ तपस्विना ॥
बालसिन्धो ? त्वमायातो 'भत् पिता कुत्र मर्दनः ? ॥ ५५ ॥

चिरादश्रुतवार्तस्य मर्दनस्य पितुर्मम ॥
दिदृक्षितस्य चास्माभिर्वृद्धस्य वद वार्तताम् ॥ ५६ ॥

अवादिदं शीघ्रमितस्तपस्विनो
निदेशतस्तस्य तु देशमाव्रज ॥
अधीरतां मुञ्च सधीरसत्तम ?
तमस्त्वदीयं सकलं हरिष्यति ॥ ५७ ॥

स दैवशाली व्यचलन्मया सम[2]
सदैव नाम्नो विनयेन सन्मतिः ॥
उपागतो नानकपादपद्मयोः
पपात पातं हरतोर्भवार्णवम् ॥ ५८ ॥

विलोक्य तं योगिवरोऽभ्यधादिदम्
सुखी भव त्वं सहजाद ? सुव्रत ? ॥
गतः पिता कालगतिं तवोन्मना
मनाङ् न तन्नश्वरविश्वविद्भव ॥ ५९ ॥

आश्वासयन्निह भवन्तमुपागतोऽस्मि
मत्तः प्रसादवसनानि गृहाण सौम्य ? ॥
अन्येन येन मनसस्तव तुष्टिरस्ति
तद्वा शृणुष्व मम वैणिकतोऽसि जातः ॥ ६० ॥

सहजाद इदं जगाद नम्रः
शिशवः किं स्वहितं विदन्ति जाताः ? ॥

---

१. भेपिता—क० ।
२. ममागमं—क० ।

उपचारपरा हि तं जनन्यः
स्वयमुत्प्रेक्ष्य तदीयमाचरन्ति ॥ ६१ ॥

यथा दयामासिथ मे पितुस्त्वं
तथा जनस्यास्य दयस्व साधो ! ॥
तव प्रसादात्स्पृहणीयमीहे
लोकद्वयं शोकनिरासनस्य ॥ ६२ ॥

संक्रामति स्नेहऋणं यथैव
पोष्यस्य पुत्रेष्वपि सज्जनानाम् ॥
प्रसेदिवान् सूनृतमस्य शृण्वन्
जगाद योगी स्मृतपूर्वमेतत् ॥ ६३ ॥

यद्येवमागच्छ मया समं त्वं
दाहस्थली यत्र हि मर्दनस्य ॥
दाहो वृतस्तेन न भूमिगुप्ति-
र्मुनिर्मदीयैवमिति प्रसह्य ॥ ६४ ॥

आनन्दजेनाश्रुलवेन तत्र
बलार्द्रपङ्केरुहरम्यनेत्रः ॥
जगाद नम्रः सहजादनामा
भाग्यं मदीयं सहगामिनस्ते ॥ ६५ ॥

आपृच्छ्य मां तत्र जगाम योगी
मया च सार्धं सहजादकेन ! ॥
विलोकमाना नगराणि नाना
वयं समासादितमूलताताः ॥ ६६ ॥

ठुमस्य निकटे देशे नवक्रोशीमिते गतः ॥
नानकः सहजादाख्यामाख्यदेतदुदारधीः ॥ ६७ ॥

गच्छ ग्राममिमं तूर्णं सहजाद विभीहि न ॥
तेनोक्तं तव पार्श्वे मे कृतान्तस्यापि किं भयम् ? ॥ ६८ ॥

ग्रामे तत्र गतः स वैणिकसुतः पुण्ड्रेण भास्वद्रुचा
मालाभिस्तुलसीमयीभिरभितो मुद्राभिरत्युज्ज्वलम् ॥
नाम्ना सज्जनमैक्षत स्मितमुखं तं कर्मणा दुर्जनं
लुब्धाकं पथिकव्रजस्य कपटैर्नस्या प्रवेश्यालयम् ॥ ६९ ॥

वैष्णवो रामनामाङ्कं वसानो वसनं तनु ॥
आसीनः स बहिर्वेश्यां गृहाद्दूरे निरीक्षितः ॥ ७० ॥

विनीतवेषं रमणीयरूपं
नरं निरीक्ष्ये प्रवणं न कस्य ॥
मनोभवेत्तेन स सत्यरामे-
त्यवादयन्तेन समं विवक्षुः ॥ ७१ ॥

सत्यरामेति शनकैरभिधाय नतस्ततः ॥
वैडालव्रतिकोऽभूत कुतो भ्रातरिहागतः ? ॥ ७२ ॥

कोऽसि ? कस्यासि ? विश्रब्धं ब्रूहि विश्रम्यतामिह ॥
सहजादस्ततोवादीत्सहजाद ? शठत्वतः ॥ ७३ ॥

वैदेशिको वैणिकोस्मि नानकस्य महात्मनः ॥
देशान् दिदृक्षुर्भ्राम्यामि वैष्णवांश्च भवादृशान् ॥ ७४ ॥

वस्त्राणि नूलानि तनूनि दृष्ट्वा
तनौ स चोरः सहजादकस्य ॥
भृत्यान् स्वकीयान् द्रवमाजुहाव
जगाद चेदं न परेण वेद्यम् ॥ ७५ ॥

---

१. बहिर्वेश्यां–ख० ।

महात्मनो वैणिक आगतोऽय-
मन्तर्गृहं त्वनयताम्रमाशु[1] ॥
अस्यातिथेयी विधिवद्विधेया
न वाच्यतां येन वयं व्रजाम ॥ ७६ ॥

नीत्वा सत्कृत्य ते तूर्णमन्तर्गृहममुं खलाः ॥
संघट्य च कपाटानि बाहू बध्वा न्यपातयन् ॥ ७७ ॥

संहृत्य वस्त्राणि ततः शरीरा-
त्कौपीनमेकं परिधाप्य जीर्णम् ॥
ऊचुर्धूर्तं कुत्रचिदस्ति वित्तं
तद्देहि[4] नो चेदिह मारयामः ॥ ७८ ॥

स नानकस्य स्मरणं चकार
जगाद चेदं मनसाऽतिभीतः ॥
यमस्य दूता बत जीवतः किं ?
हा हन्त ! कुर्वन्ति कदर्थनां[1] मे ॥ ७९ ॥

संसारभीतेरपवर्जनाय
श्रितोमयानानक योगिवर्य ? ॥
चोरैः प्रणीतामपमृत्युभीतिं
कुतो न दासस्य विनाशयेस्त्वम् ? ॥ ८० ॥

मामुवाच ततो योगी चल बाल ? कुतत्वरः ॥
सङ्कटे सहजादेन स्मृतोऽहं चोरमन्दिरे ॥ ८१ ॥

---

1. सहजादः चोरैर्धृतो नानक सस्मार ॥

१. तत्र—क०

२. प्रुमा—क०

३. मन्त्रे—क०

४. तदेहि—क०

गत्वा सज्जनमासोनं महाभागवताकृतिम् ॥
कर्ता कर्तेत्युवाचाऽयं सत्यरामेति सोऽब्रवीत् ॥ ८२ ॥

तं दुर्जनं सज्जननामधेय
समाजयामास यतिः स पूर्वम् ॥
दोषान्विदन्तोऽप्यखिलान् खलानां
सन्तः प्रकृत्यैव क्रिलाद्रियन्ते ॥ ८३ ॥

भ्रातः सज्जन ? कोऽपि वैणिक इहायातो न किं निह्नुषे ?
किं लभ्य मम ? निह्नवेन भवतो भिक्षोर्भुवि भ्राम्यतः ॥
अन्तस्त्वं व्रज याल ? कालवर्दन कुर्याः शठं वैष्णवं
तत्रोत्थं वचनेषु सत्स्वहमगां यत्राऽभुवन्मार्दनिः ॥ ८४ ॥

स बद्धबाहुर्विधृतो मलिम्लुचै-
र्गृहीतवस्त्रो मलमल्लकावृतः ॥
विलोक्य मां दीन उवाच चोरव-
द्धृतोऽस्मि चौरैश्च दिगम्बरीकृतः ॥ ८५ ॥

मयोक्तमस्य वस्त्राणि दत्त वैष्णवतस्कराः ॥
तैरुक्तमित्यमेवायमागतो मलमल्लकी ॥ ८६ ॥

आयाहि सहजाद ? त्वमम्बरं तव दुर्जरम् ॥
इत्युक्त्वा स हि नीतोऽभूत् यत्र नानकमज्जनौ ॥ ८७ ॥

वस्त्राणि कुत्रेति विलज्जमानं
तं वीक्ष्य दूराद् गुरुराबभाषे ॥
स उक्तवान् वैष्णवतस्करस्य
भृत्यैर्हृतानि प्रसभं निबध्य ॥ ८८ ॥

आतिथ्यमेष कः कर्तुं प्रवेश्य पथिकान् गृहे ? ॥
सर्वस्वं लुण्ठयत्याशु करोति प्राणमङ्कटम् ॥ ८९ ॥

स्मेरस्तदा नानक आबभाषे
भ्रातः कथं सज्जन ! सज्जनोऽसि ? ॥
असेवितोप्यावरणव्यपायं त्वमञ्जसा मार्गजुषां करोषि ॥ ९० ॥

पक्षैरतिस्वच्छतरैर्मनोज्ञो
ध्यायन्नशब्दं पयसि स्थितश्च ॥
विलम्बितो मत्स्यगणानुपेता
न लग्नदं तद् ग्लपतेव कोटः ॥ ९१ ॥

पुष्पैः कोकनदाकारैर्हरन्ती हृदयं चिरम् ॥
फलेषु तूलं दधती शाल्मलिः सेविता क्षुधा ॥ ९२ ॥

पुराणकूपः कुल्वे [1]संवृतो हरितैस्तृणैः ॥
दूरादुदञ्चिताशानां गवां ग्रासमसंशयम्[2] ॥ ९३ ॥

पुण्ड्रं तव स्वच्छतरं ललाटे
माला विशाला हृदि काष्ठमय्यः ॥
ते तूर्ध्ववस्त्राण्यतिनिर्मलानि
मलीमसं कर्म करोषि किं भोः ? ॥ ९४ ॥

अनेन वेषेण विशेषसौम्य-
स्त्वमध्वगान् वञ्चय किञ्च कामम् ॥
सर्वस्य तिष्ठन् हृदयारविन्दे
प्रपञ्चसाक्षी तु न वञ्चनीयः ॥ ९५ ॥

---

1. श्लोक सं० ९१ तः ९६ पर्यन्तं नानकः सज्जननामानं चौरराजमुपदिदेश । ततः ■ चौरश्चरणयोः पतितो यतेः ॥
१. सम्वृतो—ख०
२. शंसय—क०

सुखावहे सम्पति भाति यच्चे
कर्मेह मर्मव्यथनं परस्य ॥
याम्यैः प्रयुक्ता स तु यातनासु
आतर्मवान् वेत्स्यति तस्य तत्त्वम् ॥ ९६ ॥

पादयोः पतितस्तस्य गिरं श्रुत्वेति सज्जनः ॥
उवाच नीचकर्माहं शरणं त्वां समाश्रितः ॥ ९७ ॥

ममैव पुण्यैर्जनुरन्तरार्जितैः
प्रवर्तितः पापहरो भवान् ध्रुवम् ॥
पुनः करिष्यामि न कर्म कुत्सितं
एतत्तु मे क्षाम्यतु दुष्कृतं महत् ॥ ९८ ॥

स वत्सलो दीनजनेषु नानकः
कृतोपदेशस्तमिदं वचोऽब्रवीत् ॥
गुरुस्तवायं सहजादसंज्ञको
धनैरशु वस्त्रवरैश्च पूजय ॥ ९९ ॥

तदर्थमेवागमनं ममाभव-
त्क्ववान् कृतार्थः शरणागतो हरेः ॥
कृते हि पापे तु तपन्ति ये परं
स्मरन्ति कृष्णं न च ते दुराशयाः ॥१००॥

ततः सुवस्त्रः सहजादसंज्ञको
यतीश्वरोऽहं च गता जवान्विताः ॥
उपेत्य रार्जूरपुरे च संस्थिताः
कृतं यतो मर्दनदाहचत्वरम् ॥१०१॥

सहजादसमापत योगिवरो
जनकस्य तवेह हि दाहपदम् ॥

वसतः स्वजनेन सहात्र तवा-
पचितिं कलयिष्यति पौरजनः ॥१०२॥

तेनोक्तमायास्यति मे कुटुम्बं
भवन्निदेशात् तलवंडिकायाः ॥
मनोस्तु दृश्येत कथं मया नु?
भवातपक्लान्तिशरच्छशाङ्कः ॥१०३॥

गुरुणोक्तं यदीच्छा ते तदा द्रक्ष्यसि मां पुरः ॥
प्रत्यक्षे मम भक्तानां चिन्तामात्रमपेक्षितम् ॥१०४॥

गान्धारदेशाय गुरुर्जगाम[1]
त मुद्गलोऽभापत विष्णुमित्रः।
म्लेच्छोक्तिभिर्विश्वविरक्तभिच-
स्तस्यास्य वाचामिति गुम्फ आसीत्? ॥१०५॥

किं नामासि? वदस्व नानक? निराकारः कथं भक्तितो?
विष्णोः को गुरुरस्ति? ते तु वरुणः प्रत्येमि नैतत्तव ॥
नानारूपधरो गुरुर्हि भगवानेकस्तु शिष्याः परे
तेनोन्मीलितलोचना जगदिदं पश्यन्ति यत्तन्मयम् ॥१०६॥

प्रणमन् लब्धतत्त्व स शिष्यतामगमद् गुरोः ॥
वली गान्धार इत्येवं तस्य नामावदद् गुरुः ॥१०७॥

गान्धारदेशादगमद्देशमन्य स देशिकः ॥
भ्राम्यन्ति स्वेच्छया सिद्धा जनान्नेतुं कृतार्थताम् ॥१०८॥

---

1. सजूंर पुरे सहजाद मर्दनदग्धशरीर दर्शयित्वा सहजाद च तत्रैव स्थापयित्वा गुरु गान्धार जगाम। तत्र विष्णुमित्रो नामा मुद्गलस्तस्य शिष्य सजात। यतिवर स्तस्य नाम वलीगान्धार इत्यकरोत्॥

चिदराबगरात्कश्चिदागतो दक्षिणापथात् ॥
यवनोऽसरफो नाम मित्रं मुद्गलमैक्षत ॥१०९॥

अन्यादृशमिवालक्ष्य तमपृच्छन्महोज्ज्वलम्[1] ॥
कुतस्तव प्रभावोऽयं ? प्रभावा विश्वजित्वरी ॥११०॥

कुतोऽसि ज्ञानगम्भीरो ? निष्कम्प इव वारिधिः ॥
केनोपदिष्टो मन्त्रो[2] वा ? सद्यः सिद्धिकरस्तव ॥१११॥

वली गान्धार ऊचे तं नानकः सिद्ध आगतः ॥
तद्वाक्यश्रवणादेतज्जातं तदनुकम्पया ॥११२॥

तन्निशम्य बभूवासौ नानकं द्रष्टुमुन्मनाः ॥
अनैषीद्वासरांस्तत्र तत्समागमनेच्छया ॥११३॥

भ्राम्यन् देशे कुत्रचिन्नानकस्तु
रात्रौ यामार्द्धावशेषे ददर्श ॥
क्षत्रोद्भूतं षोडशाब्दं कुमारं
स्नानोद्युक्तं शीततोये तडागे ॥११४॥

प्रालेयस्य शिलां विदार्य शिलया तत्तोयसंरोधिनीं
सस्नौ धीरतरः स शीतबहले काले च देशेऽपि च ॥
चर्मोर्णायुपिनद्धसर्वतनुभिर्गेहे क्वचित्संवृते
यस्मिन् दारुणवारुणानिलचलद्दन्तैः स्थितैर्जन्तुभिः ॥११५॥

तं स्नातं नानकोऽपृच्छत्कोसि कस्योपदेशभाक् ? ॥
स ऊचे तव कोऽनार्यः ? पथिकः किं नु पृच्छसि ? ॥११६॥

---

१. महोज्ज्व–क० ।
२. मन्त्रो–क० ।

मृगये भ्रातरं सौम्य ! चिरविप्रोषितं मम ॥
इति नानकमाषायामभाषत वद्धः पुनः ॥११७॥

किं नामा ? कस्य पुत्रोभूद् ? भ्राता ते नानकोऽब्रवीत् ॥
विमलज्योतिरित्याख्यस्ताम्रूलिकसुतः स तु ॥११८॥

भृत्यो जनकराजस्य पुनर्वद्धुरुवाच तम् ॥११९॥

त्रेतायां जनको राजा त्व कलौ किल वर्तसे ॥
असंबद्धं वदसि किं ? स्वप्नोन्मादसमुद्भवम् ॥१२०॥

स स्वयं प्रत्यभिज्ञाता वचनाडम्बरैरलम् ॥
नानकेनेति कथिते कुमारः पुनरब्रवीत् ॥१२१॥

तदा ते नाम किमभूदिदानीं किं नु वर्तते ? ॥
भ्रातुश्च तव किं नाम ? कदा मृत्युर्भविष्यति ? ॥१२२॥

आश्रन्तर च कुत्रास्ति ? नानकः पुनरभ्यधात् ॥
गोवर्द्धनाभिधः पूर्वं योऽहमासं शुभव्रत ? ॥१२३॥

स नानक निराकार इति गीयेऽधुनाजनैः ॥
दीनानाथ दयालुश्च भ्राता त्वमसि निश्चितम् ॥१२४॥

आश्रन्तरस्य जनने तव मृत्युर्भविष्यति ॥
सो पृच्छद्भाविनो भ्रातुः संगमो मे भविष्यति ॥१२५॥

नानकेन तदा प्रोक्ते त्रिकालज्ञानसिन्धुना ॥
तव वार्तां विदित्वा स सत्यवादी भविष्यति ॥१२६॥

गतः परं पदं भ्राता तदा त्व लप्स्यसे गतिम् ॥
दीनानाथ दयालो ! त्वं दृष्टो विसृजमामतः ? ॥१२७॥

---

1. "ख" इत्यत्र ११९ श्लोकयो प्रथमद्वितीयचरणयोरभाव ।

दीनानाथस्ततोऽब्रूत धर्मभ्राताऽसि मे गुरुः ॥
आवासे वस मे कञ्चित्कालं येन ततोऽपि सः ॥१२८॥

मृतस्य मम संस्कारं करिष्यामि यतो गतिम् ॥
आप्नुयां तव सिद्धस्य हस्तादस्ताघसञ्चयः ॥१२९॥

अब्रूत नानकः पूर्वमावयोः समयोऽभवत् ॥
तद्वशादहमागच्छे बहुकार्याकुलोऽपि सन् ॥१३०॥

त्वां दृष्ट्वा सुखितोऽभूवं सतां मार्गमुपागतम् ॥
गतिस्तु गुरुवाक्येन चित्तस्य विजयेन च ॥१३१॥

दीनानाथ दयालुनाथ कथितं या ते [1]स्रवंती यते ।
मेरोरुत्खनने जगत्त्रयशुचेरास्वादने शक्नुयात् ॥
कश्चित्किन्तु न मानसस्य विजये योगो जगादाग्रहा-
दभ्यासेन निरागतश्च शनकैः शक्यं विजेतुं मनः ॥१३२॥

संसारसिन्धुतरणे तरीरिव सुनाविकैः ॥
सज्जनैर्दीयते [2]भुक्तिमुक्तिमिच्छुः श्रयेत तान् ॥१३३॥

ज्ञापयन्ति परमेश्वरं परं
साधवः सपदि दीनवत्सलाः ॥
ईश्वरे त्वधिगते गतं तमो
विभ्रमस्य सकलस्य कारणम् ॥१३४॥

यज्ञास्तपांसि तीर्थानि श्रम एव हि केवलम् ॥
मुकुन्दचरणाम्भोजे नाविच्छिन्ना यतो रतिः ॥१३५॥

अष्टाङ्गयोगाद्वशतामुपैति
चेतो मुरारेः सदुपासनेन ॥

---

१. पंपते—ख० ।
२. मुक्तिमुक्ति—ख० ।

सतां कृपातोऽभिदधे कुमार—
स्ततः स सार्थीकृतपुण्यभारः ॥१३६॥

साधनानि भवानाह दुष्कराणि बहूनि मे ॥
चरमेण तु मत्कार्यभार्यः तत्रावधार्यताम् ॥१३७॥

दीनानाथदयालुः पात्रं जन्मनान्तरस्य मित्रं च ॥
अनुजग्राह यतीन्द्रः समाधिमाधेहि तमवोचत् ॥१३८॥

कृते समाधौ [1]महसोऽवलोकना-
द्विलीनदुःखत्रयमोहविभ्रमम् ॥
गुणैरसंस्पृष्टममोघवैभवं
चिरं चिदानन्दमहोज्वलं महः ॥१३९॥

व्युत्थितः परमतोषनिर्वृतो
नानकस्य पतितश्च पादयोः ॥
स त्वदश्यत निवातवारिधे-
र्धीरयन्निव गम्भीरतागुणम् ॥१४०॥

त्रिदिनं नानकस्तस्थौ दीनानाथस्य सन्निधौ ॥
आनान्याचास्य वैराग्यं वीक्ष्य सन्तुष्टमानसः ॥१४१॥

वलि गान्धारनिकटे चतुर्थदिवसे गुरुः ॥
पुनरायान्ननामासावूचे [2]च महती कृपा ॥१४२॥

असीमं च सुखं मेऽभूद्बोचन्नानकस्ततः ॥
कृपासुख च श्रीशस्य मनुष्यो हि द्वयोः क्षमः ॥१४३॥

अद्य श्वो वा रविर्भावी किं परस्य ? करिष्यति ॥
ततो यवनसंन्यासी गान्धारनिकटे स्थितः ॥१४४॥

---

१. स्वमतात्तव-ख०।   २. च-ख०।

जगाद सरफो नाम परीक्षां [1]विदधद्यतेः ॥
शिरस्त्रं चोलकं चैव तन्तुमालां च नानक ! ॥१४५॥

कटौ परिकरं कन्थां [2]पादुकां खर्परं तथा ॥
वहन्ति यतयः कस्मादिदं वद विदांवर ! ॥१४६॥

ऊचे नानकतापसः शृणु शिरस्त्राणं परं बिभ्रते
नोष्णीषं यतयो न वा धनजुषां भारो न ते[3] मस्तके ॥
एवं योधयितुं हि चोलकश्च विस्तुच्छावृतेर्बुद्धये
माला तन्तुमयीनिबद्धगलकां प्रेम्णा हरेर्नोधयेत् ॥१४७॥

बद्धः परिकरो मुक्त्यै हरिस्मरणशालिभिः ॥
गृहानपेक्षतां मूते कन्थाशीतोष्णरक्षणी ॥१४८॥

कठोरचित्ताः कुमतानुयायिनः
पादानताः पादुकया निरूपिताः ॥
परिग्रहीता न तु यस्य कश्चन
श्रयन्ति तं खर्परवद्यतीश्वराः ॥१४९॥

पात्रं विरक्तेरिति लक्ष्ममात्रं
साभ्यन्तरीका न[4] च शुक्तिरेव ॥
यद् दृष्टमानुश्रविकं च भोग्यं
तृष्णाक्षतिस्तत्र रतिर्मुकुन्दे ॥१५०॥

विदरनगरात्तत्रायातः [5]किलसरफाभिधो
यतिचरणयोः पातं पातं तदेदमभाषत ॥

---

१. दध-क० ।
२. पादत्रा-क० ।
३. न तो-क० ।
४. न च न-क० ।
५. शिला-क० ।

गुरुरसि यच्चे शिष्यस्तेऽहं प्रभूतमते ! मतः
पुनरपि कदा ? पादौ पश्येयमापदुदासिनौ ॥१५१॥

नानकोथ निजगाद मानसं
दर्शनं तु भविता न चाक्षुषम् ॥
प्रीतिरेव[1] सुखदायिनी परं
तां विना हि विफलं विलोकनम् ॥१५२॥

विदरं[2] नगरं व्रजाधुना
यदि ते दर्शनलालसा परा ॥
सहजाद उदीक्ष्यतां त्वया
मम [3]खर्जूरपुरेस्ति वणिकः ॥१५३॥

अयं च वलिगान्धारो महापुरुषतां गतः ॥
काले काले त्वया सौम्य ! मद्बुध्या वीक्ष्यतां सुखम् ॥१५४॥

'ॐ' इत्युक्ते तेन गान्धारनामा
नम्रः प्रोचे किञ्चिदाज्ञापयस्व ॥
सार्धं गन्तुं श्रीमता कामये च
तं योगीन्द्रः प्रीतियुक्तो बभाषे ॥१५५॥

आज्ञेयमेव मम साधुजनानशेषान्
सम्भावयस्व सततं जगदीशबुद्ध्या ॥
गर्वं कुरुष्व न च कञ्चन भो विरक्त !
त्त्रैव तिष्ठ मनुजोद्धरणाय धीर ! ॥१५६॥

---

१. प्रातरेव–क० ।
२. विदुरं–क० ।
३. खर्पूर–क० ।

गान्धार ऊचे तव दर्शनस्य
माहात्म्यतः सर्वमिदं ममाऽभूत् ॥
स्थास्यामि ते पादसरोजचिन्ता
संसक्तचित्तः सुजनानुरागी ॥१५७॥

इति श्री जगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
गान्धारगमनं नाम षोडशः प्रस्तावः ॥

—:०:—

# सप्तदशः प्रस्तावः

हंसासनां कुमुदबान्धवखण्डचूडां
कुन्देन्दुकैरवरुचं वचनाधिदेवीम् ॥
ये धारयन्ति मनसा कवयः प्रवीणा-
स्ते किं न शुद्धमनसः सुतरां भवेयुः ? ॥ १ ॥

ततो गतः केकयमण्डलेषु
मया समं नानकयोगिनाथः ॥
अवोचमेनं व्यदधाः [1] कृतार्थं
गान्धारनामानमलं गुरो ! त्वम् ॥ २ ॥

तेनोक्तमेष त्रेतायां मत्सेवामकरोत्पराम् ॥
मयोक्तं म्लेच्छजातीयः किमभूदीदृशो यदि ? ॥ ३ ॥

सारमेयो हतस्तेन तेन स म्लेच्छतां गतः ॥
इत्युक्त्वा नानकोऽवोचद्दीनानाथोऽपि मे सखा ॥ ४ ॥

त्रेतायां सह संवासी कलौ सिद्धिं परां गतः ॥
विश्रुत्यमरहंसत्वं [2]विवाहादिविवर्जितः ॥ ५ ॥

प्रथमानुभूतगृहगर्तविडम्बाः
परिवर्तमानमनसः भ्रमतो हि ॥
हरिभक्तितो गतभवार्णवपाराः
पदमीदृशं वयमिवाकलयन्ति ॥ ६ ॥

---

१. कृतार्थ-ख० ।
२. विऽवा-क० ।

विरक्तेरङ्कुरस्तस्य सहैव वपुषाऽवत् ॥
वचोमृतैर्मयासिक्तो [1]मोक्षं फलमलं ददौ ॥ ७ ॥

मयोक्तमस्मिन्देशेऽपि साधुश्चेदस्ति कश्चन ? ॥
द्रष्टव्यः सोऽपि भवता ततो गुरुरभाषत ॥ ८ ॥

अस्ति साधुर्न विख्यातोऽधुना द्रष्टव्य एव सः ॥
आवामेवं संलपतावागतौ कञ्चिदापणम् ॥ ९ ॥

युवराजखेलयवनस्य च शून्ये
विपणे गृहे यतिपतिर्निषसाद ॥
तमुपेत्य कोऽपि यवनो निजगाद
ननु कौ युवां किमिह वामथकृत्यम् ? ॥ १० ॥

वन्दारू स्वो मुकुन्दस्य कृत्यं मित्रस्य दर्शनम् ॥
नानकेनेति कथिते यवनः पुनरब्रवीत् ॥ ११ ॥

मित्रस्य[2] तत्र किं नाम ? तत्पितुर्नाम[3] किं वद ? ॥
जातिः का ? येन विज्ञाय वदेयं तव तद्गतिम् ॥ १२ ॥

मानचन्द्राभिधं मित्रं खानचन्द्रश्च तत्पिता ॥
क्षत्रियो नानकस्येति गिरं श्रुत्वा स उक्तवान् ॥ १३ ॥

आगच्छतं मया सार्धं तन्मित्रं [4]दर्शयाम्यहम् ॥
आगन्ता स्वयमेवायमिति तं नानकोऽब्रवीत् ॥ १४ ॥

मानचन्द्रस्तुवाचेदमुपेत्य यवनः स्वयम् ॥
आपणे द्वौ विरक्तौस्तस्त्वां मित्रं स्मरतश्च तौ ॥ १५ ॥

---

१. मोक्षं फल–ख० ।
२. मित्रस्य–ख० ।
३. नाम–ख० ।
४. दर्शयाम्यहं–ख० ।

त्वां मित्रमाहतुस्तस्मादातिथ्यं न मया कृतम् ॥
स्थाने [1]मुकूलादिफलैस्तौ सम्भावय[2] सत्वरम् ॥ १६ ॥

तं मानचन्द्रोऽभिदधौ न मित्रं
ममास्ति कश्चिन्न तथा विरक्तः ? ॥
तथापि गच्छामि विरक्तभाजः
सम्भावनीयाः किल सर्वथैव ॥ १७ ॥

द्राक्षाम्रकूलवातादभव्यपालेवतादिकम्[1] ॥
प्रस्थद्वयं गृहीत्वाऽसौ ययौ नानकसन्निधौ ॥ १८ ॥

अदृष्टपूर्वागतरागरोपौ
स आपणे प्रव्रजितौ ददर्श ॥
फलानि धृत्वा प्रणनाम योगी
तमभ्यधादाव्रज मानचन्द्र ? ॥ १९ ॥

सत्यः कर्वेति [3]तैनोक्ते मानचन्द्र इदं जगौ ॥
नाहं प्रत्यभिजानामि सङ्गतः कुत्र मे भवान् ? ॥ २० ॥

नाम किं युवयोः साधू ? अथो अभिजनश्च कः ? ॥
मया यदि न दृष्टः स्याच्छ्रुतः स्याद्विषयः स तु ॥ २१ ॥

यतिनाऽभिहितं मम सङ्गमनं
स्वयमेव तव प्रतिभास्यति भोः ? ॥
मम नानक पूर्वनिराकृतिरि-
त्यभिधास्यतु वाल इति प्रथिता ॥ २२ ॥

---

1. पालेवतादिकम् इति फलविशेषे ज्ञेयम् ।
१. मुकुला–क० ।
२. संभावय–क० ।
३. तेनोक्ते–क० ।

आयातोऽभिजनाद्गम्यनगरादोंकारवाच्येरितः
पन्थानं सरलं तव प्रथयितुं निःकण्टकं निर्मलम् ॥
वार्ता न व्यवहारगोचर इयं तं मानचन्द्रोऽप्यघा-
स्सत्येयं वितथा वृथा वदितरा तं योगिराजो जगौ ॥ २३ ॥

कामिन्यः कलयन्तु भूषणगणं काचित्कटाक्षक्रिया
सा मिथ्यैव यया प्रसीदति पतिः प्रेम्णा समालिङ्गति ॥
या वेला रमणाभिसारसरसा तामेव सुप्तेऽलसे
तस्मिन्मानिनि निर्गते किमधुना जागर्षि रे यामिनीम् ? ॥ २४ ॥

प्रेमप्रियस्य यदि भामिनि भूषणैः किं ?
स्मेरानने स्मरसि यत्र स तत्र सिद्धः ॥
कान्तस्य नान्तरुपितासि यदि श्रमाय
व्यर्थं निर्मिपि वसनाभरणप्रपञ्चम् ॥ २५ ॥

रासमस्यातिविरसा वाटिकाः फुल्लमल्लिकाः ॥
कुसुमे कुसुमे तत्र मिलिन्दः शर्म विन्दति ॥ २६ ॥

श्रुत्वेति नानकवचो मानचन्द्रेण भाषितम् ॥
तात्पर्यं नावगच्छामि वाचां ते वदतांवर ! ॥ २७ ॥

जीवस्यास्य भवेद्भद्रं येन तद्वद मे स्फुटम् ॥
नानकेनोदितं[1] सौम्य ! शृणु सारार्थसङ्ग्रहम् ॥ २८ ॥

संहृत्य नानाविषयाभिपेभ्यो
मनो मुकुन्दस्य पदारविन्दे ॥
निवेशितं प्रेम रसालसं चे-
ज्जीवः कृतार्थो न च शोचनीयः ॥ २९ ॥

---

१. मोदित—ग० ।

मानचन्द्र उवाचेदमुपदेशोऽतिदुष्करः ॥
कर्पन्ति विषयाश्चित्तमयस्कान्ता अयो यथा ॥ ३० ॥

कृपैव साधिकैतस्य सद्गुरूणां भवादृशाम् ॥
इत्युक्त्वा निपपाताऽसौ नानकस्य पदाब्जयोः ॥ ३१ ॥

हस्तोऽस्य मस्तकेऽन्यस्तो दण्डो दत्तश्च योगिना ॥
अज्ञाननिद्राभङ्गोऽभूत्प्रभातमिव चामवत् ॥ ३२ ॥

महापुरुषतां गते मानचन्द्रे जितात्मनि ॥
कर्ता कर्तेति सङ्कीर्त्य जगाम यतिनायकः ॥ ३३ ॥

तुङ्गे शृङ्गे सरसि विमले कुत्रचिद्रात्रिशेषे
सस्नौ योगी तमभिपुरुषः कश्चिदेतज्जजल्प ॥
मज्जन् शीते पयसि वपुषः क्लेशदः किं वृथात्वं ?
जीवान् निघ्नन् स्थलजलचरान् बद्धमिथ्याफलाशः ॥ ३४ ॥

सहस्रेणापि किं शुध्येद् घटैर्मलमयं[1] वपुः ॥
आत्मा तु सततं शुद्धो बालिशाः स्नान्ति तद् वृथा ॥ ३५ ॥

ऊचेऽथ नानकमुनिः खल ! ते खलत्वं
[1]किं वेत्सि धर्ममविलोकितवेदशास्त्रः ॥
उत्प्रेक्षितैश्च पुरुपापसदैर्गृहीते-
राहारमैथुनपरैर्विहितः कुतन्त्रैः ॥ ३६ ॥

सिद्धिः क्वचिद् क्वचिदसिद्धिरयत्नतोऽपि[2]
सिद्धिः क्वचित्तु विपरीतमिति प्रसिद्धम् ॥
शक्नोति तेन न परं पुरुषप्रयत्नो
हेत्वन्तरं किमपि वर्तत इत्युपेयम् ॥ ३७ ॥

---

१. द्वटं–ख० ।
१. ज्चेत्सि–ब० ।
२. द्विर–ब० ।

तत्र स्वभाव उचितो वदितुं जडः स
नेष्टे विलक्षणकृतौ [1]तदमी [2]अनन्ताः ॥
वाच्या. सचेतन इति प्रतिवक्षि चेत्त्व-
मीशः स एव पुरुषोऽखिलकर्मसाक्षी ॥ ३८ ॥

बुध्वा विपाकममयं सफलं ददाति
वेदास्तु तेन गदिताः परमं प्रमाणम् ॥
तर्कोऽप्रतिष्ठित तथा क्रमते न तत्र
दृष्टिद्वयेऽदृष्टविषये श्रुतिरास्तिकानाम् ॥ ३९ ॥

हिंसाभयात्त्वमसि वैधविधेर्विमोके
लुप्येत कर्म सहसा त्रिविधं जनानाम् ॥
आमोदितैश्च निगमैः क्रतवः प्रदिष्टा
हिंसा परा न विपरीतकरा यत स्युः ॥ ४० ॥

कूपखानकवत्तस्माज्जनः कर्मसु वर्तते ॥
तेनैव हन्ति दुरितं श्रेयस्तेनैव विन्दति ॥ ४१ ॥

यूयं किल गुरोर्भक्ताः परं जीवदयालवः ॥
गुरोः शिरोमणे जातान् कृमीन् हरथ वा न वा ॥ ४२ ॥

अहंमतिर्जनस्यास्य देहावच्छिन्न आत्मनि ॥
शुद्ध्यशुद्धी ततस्तस्मिन् शास्त्रोक्ते को नु वारयेत्? ॥ ४३ ॥

ईश्वरा रामकृष्णाद्या वशिष्ठाद्या विवेकिनः ॥
लोकसङ्ग्रहमुद्दिश्य न कर्म निजहुः शुभम् ॥ ४४ ॥

---

1. ३६ श्लोकात् ४४ श्लोकपर्यन्त मानव स्नात क्षपणक वेदप्रमाणानि श्रावयामास । श्रुत्वा च स क्षपणको नास्तिको गिरिं ययौ ।
अत्र बौद्धसम्मतिन आचरणस्य खण्डन कृतमस्ति मानवेन । 'न हंसोद्धुवन्ति नास्तिका" इत्यनेन बौद्ध नास्तिक मपने माख ॥
२ वदम-ब० ।

इति श्रुत्वा गतस्तूर्णीं ततः क्षपणको गिरौ ॥
अप्राक्षं योगिनमहं क एष मलिनाकृतिः ? ॥ ४५ ॥

तेनोक्तमीश्वरं वेदं न स्वीकुर्वन्ति नास्तिकाः ॥
तदन्तर्गत एषोऽपि मूढो वद्धमुखश्चरन् ॥ ४६ ॥

सन्तिरन्त इमे व्योम सूक्ष्मैर्भृतैः समावृतम् ॥
वाष्पैस्तन्मरणत्रासाद्बद्धास्याः स्नानवर्जिताः ॥ ४७ ॥

जगाम बालनाथस्य पर्वते नानकस्ततः ॥
बालगुद्रायिनस्तस्माददूरे योगिनो मठः ॥ ४८ ॥

क्रोशत्रयीं भ्रमन्ति स्म शिष्यास्तस्य तु सर्वतः ॥
श्रान्तेभ्योऽन्नानि पानानि यानानि ददति स्म च ॥ ४९ ॥

आयामागत्य तैरुक्तं मठं नयलतं यती ॥
चिरं विश्रम्यतां तत्र भोजनाच्छादनार्चितौ ॥ ५० ॥

नानकेन ततः प्रोक्तं न नौ किञ्चित्प्रयोजनम् ॥
अवदन् स्वगुरुं शिष्यानत्रायात उभौ यती ॥ ५१ ॥

विरक्ताविति विज्ञाय तद्गुरु स्वयमागमत् ॥
उवाच नानकं वीक्ष्य तेजस्विनमनुत्तमम् ॥ ५२ ॥

व्योम्नि भ्रमन्ति धृतवारिभराः पयोदा
चण्डो[1] रवश्चलति[2] विस्फुरतीह विद्युत् ॥
धावन्ति पक्षिपशवः स्वनिकेतनाय
गेहे युवामपि यती वसतं मदीये ॥ ५३ ॥

ऊचे गुरुर्विपिन एव वयं भ्रमाम-
स्तत्रास्मदर्थमकरोत्किल मन्दिरङ्कः ॥

---

१. मन्द्रा-क० ।
२. श्रो-चलति-क० ।

वृष्टिः क्वचिद्भवति दुःसहवारि विद्युद्-
घर्मः क्वचिद्भवति शर्मविनाशकारी ॥ ५४ ॥

वालगुद्रायिणा प्रोक्तं सत्यमेतद्यतीश्वर ? ॥
अयत्नोपनतं किन्तु क्षिपन्ति न विवेकिनः ॥ ५५ ॥

ततो गतो नानकयोगिवर्य-
स्तथाश्रमे सर्वसमृद्धिरम्ये ॥
समाचिते गोमहिषीमहोक्षै-
रश्वैरनेकैरुपशोभिते च ॥ ५६ ॥

स दर्शयामास चलन् समन्ता-
द्यतीश्वरं स्वस्य परां विभूतिम् ॥
यतीश्वरोऽभूत रजोगुणस्य
ह्ययं प्रपञ्चो न मुनेर्मनोज्ञः ॥ ५७ ॥

वालगुद्रायिणा प्रोक्तं नाम किं युवयोर्यती ? ॥
कथितं योगिराजेन वालसिन्धुरहं यते ? ॥ ५८ ॥

नानकोऽहं निराकारस्ततः स पुनरब्रवीत् ॥
तापसो यः सुविख्यातः स एवासि परोऽथवा ॥ ५९ ॥

मया तदुत्तरं प्रोक्तं स एवायं यतीश्वरः ॥
वालगुद्रायिणा नत्वा तदुत्तरमुदीरितम् ॥ ६० ॥

विपवृक्षस्य पत्राणां शाकं गोक्षुररोटिकाः ॥
भुञ्जे विभवविस्तारोऽतिथिसत्कृतये कृतः ॥ ६१ ॥

परोपकाराय कृतः प्रपञ्चो
न योगिनेन्धाय[1] भवेत्कदाचित् ? ॥

१. वन्धाय—क०

इति स्वबुद्धया[1] प्रमितं मया तु
सर्वास्ववस्थासु दया न दुष्टा ॥ ६२ ॥

योगी जगौ तदनुसात्त्विक एष बन्ध
उद्बन्धनी कनकरज्जुरपि ह्यभव्या ॥
बद्धो बभूव हरिणो पृथुकोपकारा–
द्राजा चिराय भरतो मनसोत्सुकेन ॥ ६३ ॥

तथापि कल्याणकृतो न दुर्गति-
र्मनो विशुध्येत् सुकृतेन कर्मणा ॥
परा विरक्तिस्तदनन्तरं भवेत्
प्रबोधमोक्षौ न ततो विदूरतः ॥ ६४ ॥

धन्योसि बालगुद्रायिन् ! प्रवृत्तिस्ते पराधिका ॥
विभवे विद्यमानेपि नेन्द्रियैस्त्वं पराजितः ॥ ६५ ॥

कश्चित्कालं स्थितस्तत्र सत्कृतस्तेन योगिना ॥
ततो जगाम लालस्य वर्द्धकेः सदनं यतिः ॥ ६६ ॥

स्थितः कूपस्य निकटे निशम्य स समागतः ॥
कर्ता कर्तेति संकीर्त्य पादयोर्न्यपतद्यतेः ॥ ६७ ॥

स सत्यकर्तेत्यायाहि गुरुप्रिय इति ब्रुवन् ॥
प्रसन्नस्तस्य भवने न्यावसत् सप्तयामिनीः ॥ ६८ ॥

एकदा लाल आचख्यौ त्वं गुरुः साधुसत्तमः ॥
अतस्त्वां परिपृच्छामि निःशंकः श्रूयतामिदम् ॥ ६९ ॥

ब्रह्मचारी गृही वानप्रस्थः पाराशरी तथा ॥
चत्वार आश्रमाः ख्याताः उदासी तु क आश्रमः ? ॥ ७० ॥

---

१ बुध्या–ख०

गुरुणा नानकेनोक्तं शृणु लाल महामते ! ॥
फलानां भक्षणेनार्थो वृक्षाणां गणनेन किम् ॥ ७१ ॥

ज्ञानस्य सम्पादनमेव मुख्यं
सर्वास्ववस्थास्वखिलैः प्रयत्नैः ॥
दृष्टः क्व वर्णाश्रममात्रवर्ती
ज्ञानी विना साधनसम्प्रदायैः ॥ ७२ ॥

वर्णाश्रमाणामपि जायमानो
मानो हि हन्त्येव फलं बलीयान् ॥
कलौ तु कामादिसमाकुलानां
तद्धर्मसिद्धिः सुतरामशक्या ॥ ७३ ॥

साधनात् ज्ञानिनो जाताः स्त्रीशूद्रा दैत्यराक्षसाः ॥
अनेके पक्षिपशवो मन्महे नियमं हि तत् ॥ ७४ ॥

बन्धनानि सकलानि विधूय
द्वन्द्वदुःखसहनो गतरागः ॥
आग्रहं वसनभोजनवासे—
पूत्सृजन् यतिपते न विमुक्तौ ॥ ७५ ॥

मानापमानचकितस्य मनोहरेषु
बद्धस्पृहस्य विषयेषु न बोधसिद्धिः ॥
लोष्टे मणौ स्रजि भुजङ्गम एकबुद्धे-
र्वर्णस्य वाश्रमधरस्य परस्य मुक्तिः ॥ ७६ ॥

स्नानादिशुद्धिकरणेषु कृताग्रहः स्या-
द्योगे गुरौ सुरवरेषु धराधरेषु ॥
वेदान्तवाक्यपरिशीलनभावितश्च-
औदास्यमेव विदधीत परप्रपञ्चे ॥ ७७ ॥

अजगर इव कश्चित्तिष्ठति ज्ञानिवर्यो
भ्रमति जगति [1]कश्चित् मूढविक्षिप्तकल्पः ॥
इदममृतमवेत्यानाग्रहाद्भूरिरूप-
स्तमिह परिपुनीते [2]बीक्षतेऽनुग्रहाद्यम् ॥ ७८ ॥

तद्वस्तु नास्तिकमपि त्रिजगत्यसम्यै-
[3]र्यन्मिन्यते न विविधैर्वचनप्रपञ्चैः ॥
धूलिं विकीर्य वद तेषु ततस्तु तेषां
स्वार्थः यथा भवति येन तमाश्रयेत् ॥ ७९ ॥

पाषाण्डिनो वेदपुराणबाह्या
न तन्मतं धीर उपाश्रयेत् ॥
मतं पुराणं यदिदं पुराणे
मयेदमाविष्कृतमत्र काले ॥ ८० ॥

मुण्डो जटिलो नग्नः कौपीनाच्छादनो वापि ॥
ब्रह्मणि कृतावधानो जगत्युदासीह्युदासी स्यात् ॥ ८१ ॥

वर्णाश्रमाभिमानेन शून्याः सन्त उदासिनः ।
ज्ञानान्तरापकर्तृभ्यः कर्मभ्यश्च बहिः स्थिताः ॥ ८२ ॥

अनुद्धतत्त्वं वैराग्यं ज्ञानसम्पादनश्रमः ॥
व्यवहार उदासित्वं मतमेतदुदासिनाम् ॥ ८३ ॥

क्षमा दया च सन्तोषः सर्वत्रेश्वरदर्शनम् ॥
मैत्री च सर्वजीवेषु संन्यासिव्रतमुत्तमम् ॥ ८४ ॥

---

1. उदासिनः परिभाषते परिभाषया यतिपतिः । श्लोक ८१ तः ८४ पर्यन्तम् ।

१. कान्य –क० ।

२. पुनीत–क० ।

३. मंनिग–क०

लालेनोक्तं गुरोः सर्वं लक्षणं त्वयि लक्ष्यते ॥
संन्यासिनः कति विधाः कथमेते भवन्ति च ॥ ८५ ॥

नानकेन तदा प्रोक्तं गुरुणा सर्ववेदिना ॥
संन्यासस्य विधिं लाल ? तद्भेदांश्च निशामय ॥ ८६ ॥

नानादुःखप्रचुरं
वियोगदौर्जन्यकैतवप्रायम् ॥
विश्वं नश्वरमवयन्
[1]सन्न्यस्येज्जातनिर्वेदः ॥ ८७ ॥

ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमः ॥
अक्रमोऽपि विरक्तत्वं यत्र तत्र [2]परिव्रजेत् ॥ ८८ ॥

विप्रस्यैवाधिकारोऽत्र मन्वादिभिरुदाहृतः ॥
त्रैवर्णिकस्य कथितः सूत्रकारादिभिः स तु ॥ ८९ ॥

ऋणानि [3]त्रीण्यपाकृत्य गृहमेधी परिव्रजेत् ।
अधो मजत्यन्यथा तु मनुनेदमुदीरितम् ॥ ९० ॥

प्राजापत्यां विधायेष्टिं दत्वा सर्वस्वदक्षिणाम् ॥
एकदण्डी त्रिदण्डी वा भवेदात्माहितानलः ॥ ९१ ॥

यतिपात्राणि मृद्वेणुदार्वलाबूमयानि च ॥
सलिलं शुद्धिरेतेषा गोवालैश्चावघर्षणम् ॥ ९२ ॥

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ॥
वृत्ते शरावसम्पाते नित्यं भिक्षां यतिश्चरेत् ॥ ९३ ॥

---

1 कथं क संन्यस्येदित्यत्र नानक विचारः ॥
2. संन्यासग्रहणे न वादो ? विचार ॥
3 गृहे एव त्रीणि ऋणानि अपाकृत्य परिव्रजेत् इति मनोरभिमतम् ॥

एककालं चरेद् भिक्षां न प्रसज्जेत विस्तरे ॥
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ ९४ ॥

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ॥
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ? ॥ ९५ ॥

वैराग्यतारतम्येन कुटीचकबहूदकौ ॥
हंसः परमहंसश्च यतिरुक्तश्चतुर्विधः ॥ ९६ ॥

ज्ञानसंन्यासिनः केचिद् वेदसंन्यासिनः परे ॥
धर्मसंन्यासिनः केचित् तद्भेदा विविधा मताः ॥ ९७ ॥

उदासीनः साधकश्च नैष्ठिकश्च त्वाथयः ॥
विरक्तो ज्ञानसंपन्नः सर्वेष्वेतेषु सत्तमः ॥ ९८ ॥

अथ लालेन गदितं सर्वश्रुतमिदं गुरो ?
शास्त्रानुरूपमुदितं परं पृच्छामि किञ्चन ? ९९ ॥

कपालं जाङ्गालं वामं भैरवं पञ्चरात्रकम् ॥
शैवं पाशुपतं हित्वा मतमेतत् किमाश्रयः ? ॥ १००॥

योगी शशंस भृगुणा किल शप्तमेतद्
दक्षाध्वरस्य हरणे हरपार्षदेभ्यः ॥
प्रायः प्रियं किमपि राजसतामसानां
किञ्चिच्च वेदवचसा वचसाविरुद्धम् ॥१०१॥

निस्तीर्य घोरविपदं किल गौतमस्य
मायागवीमकलयन् पुरतो द्विजास्ताः ॥
स्पृष्टाऽमुना म्रियत गोवधदोषमस्य
संकीर्त्य ते निरगमन् धरणीनिलिम्पाः ॥१०२॥

बुध्वा समाधिविधिना कपटं स तेषां
शापं ददौ भवतु वेदविनिर्गमो वः ॥

तेभ्यः शिवो मतमिदं निजगाद रोषाद्
भ्रश्यन्ति येषु विषयामिषगृध्रचित्ताः ॥१०३॥

अविरोधमनुद्धतं च यावत्
तदुदासीनमतं मया प्रदिष्टम् ॥
अमुना प्रचरन्मुकुन्दभक्तो
लभतामंहु विमोक्षमक्षजेता ॥१०४॥

आपृच्छ्य तं गतः पश्चात्पक्षके [1]श्वशुरालये ॥
बहिर्ग्रामं स्थितस्तत्र श्वशुरेण श्रुतो यतिः ॥१०५॥
मूलः सतांहृदयोऽप्यजितस्य मते स्थितः ॥
श्वशुरस्तस्य भोज्यं च वस्त्राणि च निनाय तम् ॥१०६॥

दृष्ट्वा तदुक्तं यतिनानकेन
यदेशितुः प्रेमरसो निपीतः ॥
क्षुधा तृषा चास्मि तदैव हीन-
स्तापेन पापेन च दुस्त्यजेन ॥१०७॥

भोज्यैरलं नित्यमुपार्जितैर्यै-
र्न दुःसहः शाम्यति जाठराग्निः ॥
यदर्थमुग्रभ्रुकुटीविटङ्कान्
श्रयन्ति धीरा धनिनो विमूढान् ॥१०८॥

जीवन्ति भूतानि कियन्त्यरण्ये
श्रयन्ति किं तानि कुतश्चिदिभ्यान् ॥
हा हा ! हता मे मनुजा भजन्ति
नित्यं धनाध्मातधियो दुरीशान् ॥१०९॥

१. पश्च—ख०।
२. सतांमते—ख०।

तं मूलचन्द्रो निजगाद शीतं
प्रवृद्धमेतद्वसनं गृहाण ॥
ऊचे यतीशोऽम्बरमत्युदार-
मीशो ममाङ्गावरणं चकार ॥११०॥

इयं विशालास्तरणं धरित्री
बाहुर्वरीयानुपधानमेषः ॥
फलं जलं वृक्षसरित्सु सिद्धं
सन्तोषसम्पत्तिजुषो न दीनाः ॥१११॥

भुंक्षे न चाच्छादयसे किमर्थ-
मिहागतोऽसीति ? निगद्य मूलः ॥
गतो विषण्णोऽजितमित्यवादी-
दश्वाग्रुपारुह्य स चाजगाम ॥११२॥

अजितः प्रणम्य तमिदं निजगाद
कुरु भोजनं च वसनानि च धत्स्व ॥
वडवामिमां समधिरुह्य गृहाय
चल साधवः परमनाग्रहशीलाः ॥११३॥

विनीतमेनं गुरुरित्युवाच
यत्रैव तिष्ठामि गृहं तदेव ॥
समागमो वः परमश्च लाभः
सम्भाषणं चापि कृतातिथेयी ॥११४॥

मनो हयं तीव्ररयं मदीय-
मारुह्य धावामि दयामयस्य ॥
न तिर्यगूर्ध्वे जलधेश्च मध्ये
हयी त्वदीयाऽजित ? विक्रमेत ॥११५॥

धर्मशालाऽभवत् तत्र दर्शनायागमत् प्रजाः ॥
मासमात्रं स्थितस्तस्यां मामिदं न्यगदद्यतिः ॥११६॥

त्वं बालसिन्धो ! वद पक्षकेऽस्मिन्
कियद्दिनानन्तरमागतोऽस्मि ॥
मयोदितं ब्रूहि निजां त्वमेव
गतिं न जानामि तवाप्रवीणः ॥११७॥

स उक्तवान् षोडशहायनेऽह[1]-
मिहागतो दृष्टविचित्रदेशः ॥
[2]मासद्वयानन्तरमित्युवाच
गुरुः कुरुक्षेत्रयियासुचेताः ॥११८॥

सूर्योऽपरागः किल संनिधत्ते
गताः कुरुक्षेत्रमनेकलोकाः ॥
आवां व्रजावस्तदपूर्वतीर्थ-
विलासमीशस्य विलोकयाव ॥११९॥

परममिति मयोक्ते योगिराजो जगाम
सममहमपि तेन प्राप्य तत्तीर्थमग्रम् ॥
विविधमतयतीनां संहतिस्तत्र तत्र
बहुविषयजनानां यात्रिणामैक्षि संघः ॥१२०॥

मामुक्तवान्नानकयोगिवर्यो
हे बालसिन्धो ! शृणु मन्निदेशम् ॥
प्रस्थप्रमाणं त्वमजस्य मांसं
मृत्स्थालिकामानय [3]सापिधानम् ॥१२१॥

---

१. नेऽस्मिन्–क० ।
२. नन्तरमेव–क०
३. सापिधानाम्–क० ।

तदानीतं मांसं पचति मयि [1]चुल्ला गुरुगिरा
विरक्ताः सन्यस्ता कति कति गृहस्था न जगदुः ॥
अरे ग्रस्ते सूर्ये पचसि किमिदं जाल्म ? यदमी
जपन्ति स्नान्त्यन्ये ददति विभवं जुह्वति परे ॥१२२॥

नानकस्ताननुवाचेदं क्षुधाऽहमतिपीडितः ॥
तत्या [2]पचामि पललं भोक्तुकामः किमुच्यते ? ॥१२३॥

उद्घूर्णयद्भिरमीभिरिदं न्यगादि
म्लेच्छोपि नाद्य सहवासगुणेन भुङ्क्ते ॥
त्वं मांसमत्सि यदि नास्तिक ? मारयामः
सर्वे वयं वदसि चेन्न विनिश्चयं स्वम् ॥१२४॥

नानकेन कथितं विनिश्चयो
बुध्यते मम तदा निशम्यताम् ॥
यद्भिर्यदि पराचिकीर्षथ
स्वेच्छया कुरुत पूर्वमेव तत् ॥१२५॥

लोकैरुक्तं नास्ति [3]यष्टेः प्रसङ्गो
वाग्भिस्त्वं चेद्बोधयस्यागतान्नः ॥
दूराद् दृष्टो वीतरागो विभासि
ग्रस्ते सूर्ये मांसमश्नासि कस्मात् ? ॥१२६॥

विनोदी नानकोऽब्रूत प्राणत्राणाय सर्वदा ॥
देशकालद्रव्यगतो निषेधो न प्रवर्तते ॥१२७॥

विश्वामित्रेण मुनिना शुनो जघनमीप्सितम् ॥
भोक्तुं श्वपचगेहस्थं निशीथे चौरकर्मणा ॥१२८॥

---

१. कुल्लौ–क० ।
२. च यामि–क० ।
३. यष्टिप्रारब्ध–क० ।

मांसस्याशुचितां यूयं कथं वदथ धार्मिकाः ? ॥
देवपित्रतिथिप्रेष्ठं तत्परं यज्ञसाधनम् ॥१२९॥

जीवस्य ब्रह्मणो वाऽत्र याऽभिव्यक्तिरुदीर्यते ॥
प्रायशो मांसपिण्डे सा सर्वव्यवहृतिक्षमे ॥१३०॥

जिह्वामांसमयी वक्त्रे¹ तया हरिगुणान् गृणन् ॥
वैकुण्ठपदमाप्नोति यदुपेत्य न शोचति² ॥१३१॥

अयाचितं दीयमानं मांसं मत्स्यमबोधतः ॥
निराकरोति यः कश्चित् ? प्रत्यवैति स निश्चितम् ॥१३२॥

अमृतं मांसमश्नाति शिष्टवर्गोऽप्ययन्त्रितः ॥
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक् ॥१३३॥

शास्त्रोपबृंहिता वाचः श्रुत्वात्र सकलो जनः ॥
धर्षितस्तत्प्रभावेण न कश्चित्किञ्चिदुक्तवान् ? ॥१३४॥

तत्रागतः कश्चन बाहुजोऽभूत्
प्रतिष्ठितो भूपतिलेखकेषु ॥
स नानकं वीक्ष्य वहन्नसूयां
द्वेषं दधौ मत्सरतो महान्तम् ॥१३५॥

¹श्रीकन्दरस्य पुत्रोऽभूद् ²वीराहम्लाननामकः ॥
इन्द्रप्रस्थे स्थितो देशनाशाज्ज्वलितशासनः ॥१३६॥

तस्योक्तमार्सीत्पिशुनेन³ तेन
धरापते ! नानकनामधेयः ॥

---

1. श्री कन्दरः–सिकन्दर इति भाषायाम् ।
2. आहं लान इन्द्रप्रस्थस्य राजा ।

१. पक्के–क० ।
२. नशोचिति–क० ।
३. पुसनेन–क० ।

विरक्तवेषः खलु बाहुजोऽस्ति
वहुं वहन् प्रव्रजिताऽभिमानम् ॥१३७॥

पाखण्डधर्मा [1]कुहकः स सिद्धिं
मूढेषु काञ्चित्प्रकटय्य तृप्तः ॥
[1]आर्यस्य[2] च म्लेच्छगणस्य चापि
शास्त्रं तिरस्कृत्य यथेष्टचेष्टः ॥१३८॥

त्वं वै नियन्ता सकलप्रजानां
मुन्मार्गगान् साधिकृतापराधान् ॥
नो पेथयेच्छाचरणैः प्रवृद्धै-
र्नश्येत्पुराणो यवनार्यमार्गः ॥१३९॥

स बोधितस्तेन विवृद्धमन्यु-
राध्मात एव प्रथमं स्वश्रद्धया ॥
आज्ञापयद् भो ! यवनांस्तवार्या-
निहानय प्रव्रजितान्निगृह्य ॥१४०॥

सिद्धाभासा वञ्चयन्ते धनिनः सरलानि मे ॥
तात्त्विकी यदि सिद्धिः स्यादिह प्रकटयन्तु ते ॥१४१॥

ततस्तु नगराध्यक्षो विचार्यैकत्र संगतान् ॥
कुरुक्षेत्रे प्रव्रजितानालहार पदातिभिः ॥१४२॥

प्रतिप्रव्रजितं तत्र पुरटं कष्टघर्षणम् ॥
खारीमितं च गोधूमं पेष्टुं म्लेच्छनृपो ददौ ॥१४३॥

---

1. आर्यधर्मस्य म्लेच्छधर्मस्य च तिरस्कारं करोतीति भाव ।

१. कुटकः-क० ।

२. आर्यस्य-क० ।

भयेन भूता अपि यान्ति दूरा-
द्भयेन दाण्डाजिनिकोऽपि साधुः ॥
ये भीषयन्ति स्म जनान् स्वशापै-
स्ते सूक्ष्मपेषं पिपिषुर्भयेन ॥१४४॥

नानकस्य घरट्टस्तु स्वयं बभ्राम शक्तितः ॥
गोधूमस्य ततः सूक्ष्मा समिता गमिता क्षितिम् ॥१४५॥

भक्ताधिकारी धनखानकस्य
पूर्वं य आसीत्स च तापसोऽभूत् ॥
स नानकाख्योऽयमिति प्रतीता-
स्तच्छक्तितः सर्वजना जजल्पुः ॥१४६॥

म्लेच्छराजस्तदाकर्ण्य बन्धयामास नानकम् ॥
निगडेन न मोक्तव्य इत्युवाच च रक्षिणः ॥१४७॥

बद्धेऽपि तस्मिन् भ्रमणं घरट्टे
गोधूमसम्पेषणमाकलय्य ॥
म्लेच्छेशमूचुः सुजनाः समग्रा
न नानको बन्धनमर्हतीति ॥१४८॥

न हीदृशप्रव्रजितावमानो
भवेच्छुभोदर्क इतीरितस्तैः ॥
मुमोच भीतो यवनो यतीन्द्रं
स्थितः स तत्रैव विशृङ्खलोऽपि ॥१४९॥

ऊचे नानकतापसः स्मितमुखो मायङ्गजानां घटा
नृत्यत्पादतुरङ्ग[1]राजिरतुला दिव्या रथाः पत्तयः ॥

---

१. सुरंग—क० ।

प्रासादाः शशिशुभ्रतुङ्ग[1]शिखराः कान्ताः कुरङ्गेक्षणा
द्वारे काञ्चनदण्डराजितकराः प्रोद्दामदौवारिकाः ॥१५०॥

कारागारमुपाश्रयन्ति शतशो वृद्धा नृपादिद्विपो
गायन्त्यो गणिका हरन्ति हृदयं काव्यैः कवीन्द्रास्तथा ॥
ताम्बूलैश्च सुचर्वितैरविरलं नापैति रागो मुखात्
किं वक्तीत्यवधाय [2]सम्भ्रमपरैर्लालाटिकैः सेवनम् ॥१५१॥

वासा जर्जरचीरचीवरमयं भैक्षैः क्वचिद्भक्षणं
ग्रामे वा नगरे निवीतनिविडारण्ये घटाद्यावृता ॥
कारायां निगडैर्निबध्य त्रिधृतिः सन्ताडनं तर्जनं
केशश्मश्रुनखास्थितेरनशनैरुत्साहतेजःक्षतिः ॥१५२॥

नानकस्य सममेव समग्रं
क्रीडितं तव महेश यदेतत् ॥
योऽस्मि सोऽस्मि लवमप्यनया ते
लीलया पचय मेमिनवर्षे ॥१५३॥

रुणद्धि न त्वामिह कोऽपि गन्छेः
स्वच्छन्दचारी हि भवान् धरायाम् ॥
मयेदमुक्तं गुरुराबभापे
विलोक्य तां वालविभोश्चरित्रम् ॥१५४॥

अस्माभिर्यदनुष्ठेयं तद्गन्धर्वैरनुष्ठितम् ॥
क्रुद्धैः सिद्धैर्यदारब्धं तद्विधत्ते स्वयं विधिः ॥१५५॥

यवनः सप्तभिर्मासैर्दिनैः सप्तभिरेव च ॥
दैवात्स्मरणशेषां हि दशामासादयिष्यति ॥१५६॥

---

१. तुङ्ग—क० ।
२. संभ्रम—क० ।

मया पृष्टं महायोगिन् ? कथमस्य भविष्यति ? ॥
त्रिकालज्ञेन मुनिना नानकेन तदीरितम् ॥१५७॥

उष्णीषैरतिशोभितानि मणिभिर्भास्वन्ति भास्वत् करै-
रस्पृष्टानि सितातपत्रनिबिडच्छायाश्रयात्यप्यलम् ॥
तानि म्लेच्छशिरांसि मुद्गरकरप्रोद्धूर्णकौक्षेयक-
छिन्नानि क्षितिधूलिभिर्विलुलितान्येष्यन्ति लोष्टोपमाम् ॥१५८॥

[1]असूर्यंपश्यानां कुसुमशयनेषु प्रतिदिनं
निषण्णानां[1] यासामविदितगतिर्याति समयः ॥
यवन्यस्तास्त्रुट्यद्विधृतकुचहारा हरि हरि
प्रयास्यन्ति क्षोणौ क्षतचरणपद्मयां[2] प्रतिपदम् ॥१५९॥

न स्मरन्ति यदमी जनार्दनं
पापतापहरणं हि तं सताम् ॥
आपदः परिभवन्ति तेन तान्
पूर्वपुण्यलवलब्धसम्पदः ॥१६०॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
कुरक्षेत्रयात्रानाम सप्तदशः प्रस्तावः ॥

—: ● :—

I. असूर्यंपश्यानां = राजदाराणाम् यासां समयोऽविदितगतिर्याति ता ... क्षोणीं प्रयास्यन्तीति नानकचन्द्र० ॥

१. निषण्णानां—क० ।

२. पद्मया—क० ।

५८

# अष्टादशः प्रस्तावः

वाग्देवता वसतु मे वदनारविन्दे
वर्णैः कृतैः कतिपयैर्विपुलः प्रपञ्चः ॥
यस्या विशुद्धिमधुनापि दधाति पारं
नासादयन्ति सुधियोऽस्य सुधार्णवस्य ॥ १ ॥

पञ्च मासोत्तरं तत्र [1]शायरेणाभिरक्षिता ॥
सुरत्राणपुरं वव्रे [2]मुद्गलानां महाचमूः ॥ २ ॥

घनखानो हतस्तेन सहयुध्वा यथाबलम् ॥
शलभा इव सर्वत्र मुद्गलाः प्रसृतास्ततः ॥ ३ ॥

स देशानात्मसात्कुर्वन् सप्तमे मासि मुद्गलः ॥
वीराहंखानमुद्दिश्य [3]पानीयप्रस्थमागमत् ॥ ४ ॥

आरूढः कलमानिबातिबलिनस्तुङ्गांस्तुरङ्गान् भटा
दीर्घास्ताम्रमुखा महाशनजुषः प्रत्यन्तदेशोद्भवाः ॥
ते दैत्या इव दुःसहा रणभुवि प्रख्याततत्पौरुषाः
संक्षुब्धां क्षितिमाचरन्ननिभृतैः स्वैः स्वैरणीकैरलम् ॥५॥

[4]यवनांहर प्रसर धुन्वतीः प्रजा
धनिनश्च दण्डय पुराणि निर्दह ॥

---

1. शायरः = मुद्गलराजः ॥
2. मुद्गलः = मुगल इति भाषायाम् ॥
3. पानीयप्रस्थः = पानीपत इति भाषायाम् ॥
4. ५,६ श्लोकयोर्बाबरसैन्यवर्णनम् । तत्रानुहरोति माघं कविः ।

हुलितांश्चकार निपयाननुक्षणं
परिघान्विता सपदि मुद्गलानली ॥ ६ ॥

वीराहंसाननामा प्रणिधिनिगदितं तन्निशम्य प्रकोपात्
वाहिन्यः श्राक्षुपेण्यप्रसमपरिपतच्छोणवेण्येव वीरः ॥
पानीयप्रस्थ एव प्रधिनपदुभटध्वाननिर्धूनिताद्रि
प्रागुद्यद्कुद्दन्तावलदलिततरुर्गोचरं प्रत्यगृह्णात्[1] ॥ ७ ॥

सेना सा धावरस्य प्रसममभिपतच्छत्रुसैन्यप्रकोपा-
त्कल्पान्तोत्तालसिन्धुप्रतिभटगमना सर्वतः संररोध ॥
पादातैरश्ववारैरधिभिरथगजैश्छिद्यमाना क्षणेन
क्षोणी धूलीच्छलात्किं शरणमभिययौ.सृष्टिकर्तारमद्धा ॥ ८ ॥

कोणैराहन्यमानाः प्रलयजलधरध्वानघोराश्च भेर्यः
प्राणीत् वीरव्रजस्य त्सरुश्वविरमसोल्लासिनश्चक्रुरप्रान् ॥
धानुष्कैर्धुन्विनानां शरनिकरकिरां सर्वतः शिञ्जिनीनां
निःस्वानैः सैन्ययोः कि स्वनसनिवदिशां कोऽपि शुश्राव किञ्चित्?
॥ ९ ॥

अस्नाल्दैरत्युदात्तस्वरेण
वीणावाद्यैर्गीवि शुभ्रं प्रगीतम्[1] ॥
रोमाञ्चाली कञ्चुकं पर्यधूय-
च्छारं श्रावं भीरवश्चापि शूराः ॥ १० ॥

दन्तैर्दन्तावलानां प्रतिगजहननादुद्धृतिप्रोद्धुराणां
पादैः पादातसैन्यं नलिनवनमिवापिपिष्टां भीऽप्युपाति ॥
हस्त्यारोहानुदस्य स्वयमम[2]रुजवं धावतामुन्मदानां
संग्रामे चेतनानां ठनठननिनदैः कर्णरन्ध्रान्यरुन्ध ॥ ११ ॥

---

1. ७ श्लोके महल्लानाभेयवर्णनम् । इष्टतां छन्दराशौ वीरो रस ।

१. गीतम्—ख०   २. मत्र इति—क० ।

प्राचीमरञ्जयद् देव ! उदयन्नेकतो रविः ॥
प्रतीचीमन्यतो वीराश्चक्रुर्लोहितलोहिनीम् ॥ १२ ॥

आघ्नाता वानरेण प्रसभमसिलतापातिना मुद्गलास्ते
धावद्भिर्घोटकैः स्वैर्नरपतिरुरगान्निन्दयन्मर्दयन्तोः
यातायातैरभीक्ष्णं रणरनसरसाच्छस्त्रपातादभीता
ग्रीष्मग्राहा इवाल्पां सरितमरिचमूमाविलाश्चक्रुरुच्चैः ॥ १३ ॥

स्वसैस्तुपारैर्यवनैः पल्लवैश्च तरस्विभिः ॥
मुद्गलाश्चापि दलिता वीराहंखानसेविभिः ॥ १४ ॥

आयाहि प्रहर प्रतीच्छ जगतीं पश्याधुना नश्यसि
त्रस्यस्यत्र विकत्थनं तव वृथा त्वां रे ! करोमि द्विधा ॥
उद्गूर्णासिकराः करालवदना रक्तारुणश्मश्रवो
जल्पन्तो भुवि भीरुभैरवमिति छिन्ना निपेतुः क्षणात् ॥ १५ ॥

आहृते प्रतिपदं रणाङ्गणे
वाजिवारणनरैः परासुभिः ॥
मांसकर्दमनिमग्ननेमयः
निन्यिरे न तुरगैः रथाः क्वचित् ! ॥ १६ ॥

लोहितं गलविलोच्चलद्ध्रह-
'द्रव्यधार'मचिरेण धारयन् ॥
वारियन्त्रमिव तत्र वीक्षितं
रुण्डमण्डलमदभ्रविभ्रमम् ॥ १७ ॥

---

१. यत्र—क० ।
२. नचिरे—क० ।

[1]छिन्नबाहुचरणाः चतोरसो
भिन्नकुक्षि[2]गलितांत्रवल्लयः ॥
देहि मे जलमिति प्रजल्पतो
वीक्षिता गलचलत्कृशासवः ॥ १८ ॥

चीनखड्गविनिपातपातिते
लोहवर्मणि धरां प्रसर्पति ॥
"मं उघेति" रव आर्त आवमौ
किं नु वीरवपुषोऽपि प्रोद्यतः ? ॥ १९ ॥

पताकिनः संपरिरभ्य शिश्यिरे
मृताः पताकादयिता इवोरसा ॥
अवादिनीर्मानिवतीरिवानम-
न्निपत्य भेरीर्वत । वाद्यवादिनः ॥ २० ॥

सैन्यं स्वं समवेक्ष्य विक्षितभट वीराहमाख्यो बली
वीरैः सादिभिरादृतैरनुदिनं सेनां जगाहे रिपोः ॥
[3]मन्थानाद्रिरिवाममन्थ जलधिं घोरं बलं मौद्गलं
नद्यः शोणितमांसकेशकलिला सद्यस्ततः सुस्रुवुः ॥ २१ ॥

खड्गैः खड्गाभिघ्नन्तस्तु वीरेषु रणरागिषु ॥
स्फुलिङ्गमाला निश्चेरुः क्रोधाग्नीनां कणा इव ॥ २२ ॥

वीराहमाख्येन निकृत्तकण्ठान्
पश्यन् धरायां शतशः स्वयोधान् ॥
सर्वाभिसारेण ससार रोषात्-
संशप्तकीभूय स बाबरस्तम् ॥ २३ ॥

---

१. भिन्न—क० ।
२. तांत्र—क० ।
३. समन्थाद्रि—क० ।

उदरम्भरयः पलैः प्रजानां
प्रधने तत्र ववाशिरे शिवास्ताः ॥
निधनाय जनस्य यन्मखेभ्यो
निरगुः प्रज्वलिता नितान्तमुल्काः ॥ २४ ॥

[1]षडहं समरो बभूव भूयान्
नरनागाश्वविनाशनः समन्तात् ॥
स्ववपूंषि[2] विहाय यत्र शूराः
सुरनारीपरिरंभसान्नमासन् ॥ २५ ॥

सप्तमेऽह्नि परं न बावरो
दुन्दुभिं विजयवानताडयत् ॥
सर्वतः स्वपतिघातदुःखिता-
स्तत्सपत्नवनिता उरांसि च ॥ २६ ॥

[3]वीराऽहंखानकं हत्वा बाबरः शास्ति मेदिनीम् ॥
इन्द्रप्रस्थे बभूवाथ घोषो भेरीपुरस्सरः ॥ २७ ॥

इन्द्रप्रस्थे राजसिंहासनस्थो
राज्ञां राजा बाबराख्यो बभूव ॥
तेनाज्ञप्ता रक्षिणः पूर्वबद्धान्
कारागारे स्थापयित्वा ररक्षुः ॥ २८ ॥

भूयो बद्धं नानकं बाहमाख्यं
नीचैर्दृष्ट्वा यन्त्रणां खिन्नचेता ॥
आपत्तिः किं मुच्यते ? सर्वशक्ते ?
कारागारे चोरवद्रक्षणं ते ॥ २९ ॥

---

१. षडुह्–क० ।
२. वपुषि–क० ।
३. हखानकं–ख० ।

नानकोऽवददीक्षस्व हरेर्लीलामलौकिकीम्
पुत्रिकाः सूत्रधारस्य वयं कर्तुर्वशे स्थिताः ॥ ३० ॥

दशमस्त्वमसीति शब्दतो
दशमोभावमवान्यपैति च ॥
उपरोहति किन्तु कालतः
शिरसस्ताडनसम्भवो व्रणः ॥ ३१ ॥

सप्तमे दिवसे नीतं भोज्यं भोज्याधिकारिभिः ॥
बाबरस्य पुरो जाताः क्रमयो [1]दर्दुरास्तथा ॥ ३२ ॥

आजुहाव ततः क्रोधात्स्वदान् पौरोगवं च सः ॥
श्वानः किमेतदित्यूचे ? कोपरक्ततराननः ॥ ३३ ॥

व्यजिज्ञपन् बद्धहस्तास्ते वयं नापराध्नुमः ॥
बाबरोऽब्रूत दृश्यन्ते क्रमयो दर्दुराः कथम् ? ॥ ३४ ॥

ओदनस्य च मांसस्य स्थाने किमिदमाहृतम् ? ॥
तैरुक्तं यदि [3]मन्युर्नस्तदा चित्रवधो भवेत् ॥ ३५ ॥

पार्श्वे स्थितो [4]मीरविलावलाख्यो-
ध्यक्षः स कारागृहरक्षकाणाम् ॥
उवाच बद्धाञ्जलिरेष [5]मन्तु-
र्नैषां क्रियेयं परमेश्वरस्य ॥ ३६ ॥

तं बाबरोऽब्रूत कुतो ब्रवीषि ?
मया न पृष्टोऽसि कथं च वेत्सि ? ॥

१. भावान-रा० ।
२. दुर्दुराः-क० ।
३. मन्युर्न-क० ।
४. सावराख्य-क० ।
५. मर्तु-क० ।

सोऽब्रूत मृत्येन हि तेन वाच्य-
मपृच्छतेऽपि[1] प्रसमे सुपथ्यम् ॥ ३७ ॥

अहं हि कारागृहरक्षकाणा-
मध्यक्षता भाग्यवतोऽनुजीवी ॥
बद्धो यतिर्नानकनामधेय-
स्तदीश्वरस्यानुमतं न नूनम् ॥ ३८ ॥

ततो बभाषे यवनाधिराजः
स केन बद्धोऽस्ति ? कुतोऽपराधात् ? ॥
तमब्रवीन्मीरगदासनामा
म्लेच्छः पुराध्यक्षतया प्रसिद्धः ॥ ३९ ॥

वीराहमाख्येन धृतास्तु वन्यः
कारागृहे सन्ति निराय रुद्धाः ॥
तन्निग्रहानुग्रहमीश्वरस्त्वं
विचार्य काले न करिष्यसीति ॥ ४० ॥

तन्मध्यपाती यतिरस्ति कश्चित् ?
परीक्षितो नानकनामधेयः ॥
म्लेच्छाधिपोऽभापत गौरवेण[2]
तमानय त्वं मम संनिधानम् ॥ ४१ ॥

गतो हुसेनो गतमंखलं स-
मानम्य बद्धाञ्जलिरित्युवाच ॥
उपेहि भूपालगृहं यतीश ?
विलोकितुं वाञ्छति बाबरस्त्वाम् ॥ ४२ ॥

---

१. च्छपते-क० ।
२. मीरगासेन-ख० ।

ततो गतो नानकयोगिवर्यो
मया समं चाचरसंनिधानम् ॥
प्रणम्य तेनानुमते इहैव
स्थितं स पीठे यतिमित्युवाच ॥ ४३ ॥

त्वं जानासि विरक्तनानकजगत्कर्तारमीशं परं
साक्षान्मद्य महंमदं गतगुरुं तच्छक्तिभिर्बृंहितम् ॥
उक्तं नानकतापसेन भगवानीशो मया ज्ञायते
म्लेच्छानां मतदो महंमद इति ख्यातस्तथा देशिकः ॥ ४४ ॥

ईशो जातिगुणक्रिया विरहितो ज्ञानार्णवो मायया
त्रैलोक्यं निदधाति मायिकगुणैर्न स्पृश्यते च स्वयम् ॥
जीवा ये च महमदप्रभृतयस्ते तद्विलासास्पदं
चेष्टन्त मतमारूलस्य विविधं कल्पादिकालोचितम् ॥ ४५ ॥

अमी अशुद्धाः सकलास्तु जीवाः
शुद्धः सदा केवल ईश एव ॥
गिरं निशम्येति गुरोः स ऊचे
महमदोऽस्माकमहो अशुद्धः ॥ ४६ ॥

नानकोऽभूत सकला जीवाः शुद्धिं न बिभ्रति ॥
क्लेशकर्मविपाकैश्च परामृष्टास्तथाशयैः ॥ ४७ ॥

व्यक्ताव्यक्तज्ञविज्ञानान्मुक्तिः सांख्यैरुदीर्यते ॥
अस्म्यहं प्रकृतेर्भिन्न इति बुद्धौ न शुद्ध्यति ॥ ४८ ॥

सुखं स्वकीयं विषयोपनम्रं
जीवो विदित्वा विषयेषु सक्तः ॥
स्वतालुभेदोद्भवमेव रक्तं
शुष्कास्थिषु श्वेव लिहन् विमूढः ॥ ४९ ॥

यो यः स्त्रियास्तीक्ष्णकटाक्षबाणै-
विद्धः स शुद्धः कथमस्तु जीवः ?॥
शुद्धिः स्वरूपे स्थितिरेव मुख्या
वैमुख्यभाजः स्वसुखात्कथं सा ?॥ ५० ॥

यातायातपरा जीवा अविद्या कामकर्मभिः ॥
महंमदप्रभृतयो विशिष्य त उपासनात् ॥ ५१ ॥

बाबरेण तदा प्रोक्तं दूरे दृष्टिर्निराकृतिः ॥
तव नानक संयाता ततस्त्वं तत्त्ववित्तमः ॥ ५२ ॥

जगाद तं नानकयोगिमुख्यो
दृष्टिर्मदीया तदनुग्रहेण ॥
तमेव पश्यत्यनिशं महेश-
मखण्डमानन्दमनन्तशक्तिम् ॥ ५३ ॥

संस्कारतः स्वप्नविलोकितानां
यथा स्मृतिर्नो सुखदुःखदात्री ॥
तथा भवो भाति विचित्ररूपः
सुखाय दुःखाय न मे समर्थः ॥ ५४ ॥

तं बाबरोऽभाषत मातुलान्या[1]
रसेन पूर्णं चषकं पिबेदम् ॥
एकाग्रतां यन्मनसः करोति
भङ्गां तदङ्गीक्रियते हि सिद्धैः ॥ ५५ ॥

मया चषकमापीतमिति नानकभाषिते ॥
बाबरोऽभूत मिथ्येदं कारायास्त्वमिहागतः ॥ ५६ ॥

---

1. ४९,५०,५१ श्लोकेषु नानको बाबर जीवस्याशुद्धत्वे प्रमाणानि प्रस्तौति ।

बुद्धौ पात्रे ज्ञानदण्डेन गाढ—
मोक्षप्रेम्णा वारिणा मर्दयित्वा ॥
पूतां कृत्वा देशिकस्योपदेशा—
द्विश्वभ्रान्तिर्मातुलानी निपीता ॥ ५७ ॥

मत्तो मत्तो नाधिकः कश्चिदस्ति ?
नैवा पेयाद्यन्मदोयं मदीयः ॥
रक्ताक्षः सन् कौतुकं तस्य वीक्षे
विक्षिप्तौघो हस्यमानो हसस्तान् ॥ ५८ ॥

इति नानकस्य वचनं निशामय-
न्निजगाद बाबरधरामरेश्वरः ॥
भगवानभापत विरज्य विस्मतो
मम भक्तिकृन्मदितरो न बुध्यताम् ॥ ५९ ॥

( [1]त्रिभिर्विशेषकम् )
तमब्रवीद्योगिवरो न पानर ?
त्वमङ्ग ? जानासि नयन्मतं सताम् ॥
तथापि शास्त्रे सदसन्निरूपणं
कृतं कोराने वचनैर्महेशितुः ॥ ६० ॥

न जातिरीशस्य निरूपिता श्रुतौ
न तस्य चार्यो यवनोऽथवा प्रियः ॥
तनुं वहन् कामपि कर्मलम्भितां
भजेत यस्तन्तु स तस्य वल्लभः ॥ ६१ ॥

---

1. विनोचरेष्वेषु नानक कोरानस्य श्रुतेश्च मर्म-निमायदर्शी बाबरम् । कोराने वेदयो-र्नास्ति कश्चिद्भेद इति । ■ कश्चिदस्य कोरान वेद वा भजेत आर्यो वा यवनो वा स तस्य वल्लभ । आर्यो हरि सेवमान स एव [illegible] कुर्वन्ति ।

आर्यैर्यथारुचित्तवशेन शिवो गणेशो
गौरीहरिर्नृहरिरित्यभिधैकभिन्नः ॥
ईशः श्रितः फलति हन्त ! तथा तुरुष्कैः
संसेव्यते स हरिरेव विभिन्ननामा ॥ ६२ ॥

अनादिवासनावेशात्संसारोऽनुशायिनाम् ॥
विपाकः कर्मणां तेषां जात्यायुर्भोगलक्षणः ॥ ६३ ॥

स्वस्वधर्मानुसरणमरागः संसृतोशनैः ॥
अविरोधो हरेर्भक्तिः[1] सर्वेषां मुक्तिकारणम् ॥ ६४ ॥

अपराध्यति जन्मना न कश्चित्
सकलः प्रेमपरो हरौ कृतार्थः ॥
अयमेव सनातनोऽस्ति पन्था
बहुमानेन विमोहितो विनश्येत् ॥ ६५ ॥

ततस्तमूचे यवनाधिराज
आर्येषु न त्वत्सदृशोऽस्ति कश्चित् ? ॥
दीक्षिष्यते यो भवतो भवेत्स
समस्ततत्त्वाधिगमात्कृतार्थः ॥ ६६ ॥

त्वं नानक ? ग्राममतीव रम्यं
मत्तोऽथवा देहापुरीकुरुष्व ॥
कृताश्रमः प्रव्रजितव्रजस्य
ददस्व भोज्यं वस वीतचिन्तः । ६७ ॥

ऊचे गुरुस्तं मम भालपट्टे
विलिख्य दत्ता विधिना पुरैव ॥

---

1. अरागः सन् हरेर्भक्तिर्मुक्तिप्रदा । न कश्चिज्जन्मनाऽपराध्यति यदि स हरौ प्रेमपरोऽस्ति । स हरिरेवास्मो कोरानादौ विभिन्ननाम्ना व्यवह्रियते ।

वाभोज्य सम्पन्न ततोऽधिकस्य
लिप्साऽस्ति मे नृप भवादृशेभ्यः ॥ ६८ ॥

ततः प्रणम्य क्षितिपाल ऊचे
प्रतिग्रहो योगिजनस्य नेष्टः ॥
त्वमात्मविश्रान्तिरनावृतासु
यथा विनोदं विजयस्व दिक्षु ॥ ६९ ॥

जगाम नानको योगी पश्चके नगरे पुनः ॥
अजितस्य रन्धावस्य कूपस्य सविधे स्थितः ॥ ७० ॥

तलवंडीं गियासामि त्वमाश्वर्पय मां गुरो ! ॥
मयेत्युक्ते सोऽवादीदिहैव स्थीयतामिति ॥ ७१ ॥

अजितः पपात पदयोर्यतिमर्त्तुः
प्रहरं समाधिनिभृतो न स ऊचे ॥
तत उक्तवान् किमिह वाञ्छसि साधो ?
स जगाद वेद न भवान्न मनःस्थम् ॥ ७२ ॥

शशंस योगी तव चारु दैवं
मोलाररायादधिकोऽद्यमूत्स्वम् ॥
न ज्ञानमस्योदयमच्छतीरे
तवास्तु दृष्टिर्विगताऽपिधाना ॥ ७३ ॥

प्रकाश आसीदजितस्य भूया-
नलम्पलाभादिव चास्य तोषः ॥
तं सर्वसंसारविकारकारी
न विभ्रमो व्याकुलयाम्बभूव ॥ ७४ ॥

आनीयमानमजितेन विशिष्य भक्त्या
भोज्यं जघास च गुरुः समयद्वयेऽपि ॥

यन्मूलचन्द्रसदनादुपयातमन्नं
तन्न स्वयं विरतवर्य उरीचकार ॥ ७५ ॥

चन्दोराज्ञी मूलचन्द्रस्तन्निशम्य सुलक्षणी ॥
तमागता त्रिमनसो मूलचन्द्रोशपद् बहु ॥ ७६ ॥

तूष्णीं स्थितस्तस्य [1]निशम्य तद्वद्
योगी जगादाजित एवदेत्य ॥
किमाक्षिपस्येत मया च मानं
त्वद्गोजनाच्छादनमस्त्वदोषम् ॥ ७७ ॥

मूलोऽवदत्तविधमेत्य न वक्ति भूक्ते
नानेन मे [2]ग्रहगृहीतहृदा तवोऽर्थः ॥
स्वीये कुटुम्बमधिगच्छतु गच्छतु द्राग्
अस्मादृशामविषयं विषयं तु किञ्चित् ॥ ७८ ॥

श्रीचन्द्रलक्ष्मीचन्द्रौ मे गृहे सन्तु सुलक्षणी
किमर्थं पीडयस्येनमजितेनेति भाषितम् ॥ ७९ ॥

[3]नान्धे वा बधिरेऽमुस्मिन् जीवत्येऽमुतन्न युज्यते ॥
मूलचन्द्रो जगादेहं स्नेहमुज्जीवयन् यतेः ॥ ८० ॥

चन्दोराज्ञी तवोऽभूत तापसी विनिगर्यसे ॥
भेदद्दष्टिन ते यावा कुटुम्बे नास्ति ते दया ॥ ८१ ॥

सुलक्षणी साश्रुरिदं जगाद
स्पृशन्ति हा त्वां न शुचो मदीयाः ॥

---

I. श्लोके मूलेन कृता नानकं प्रति भर्त्सना CF जनु०—"मुझ देना छोड़ो वा" इत्यनेन कुटुम्बमधिगच्छतु गच्छतु वा द्राक् इत्यस्य ॥

१. मुंबने–क० ।

२. ग्रहग्रहीत–क० ।

३. नाघ–ख० ।

आनन्दयित्री सुतयोर्ननान्दा
मृता ततस्तौ तरुणौ विषण्णौ ॥ ८२ ॥

प्रख्यायते यो जनतासु सिद्धः
कथं स नेष्टे सुतदारपोषे ? ॥
पित्रोरुपालम्भवचांसि साक्षा-
न्नशृण्वतीहं तु जिजीविषामि ॥ ८३ ॥

पत्युश्चिरप्रव्रजितस्य तस्य
सहस्थितिं प्रव्रजिता भव त्वम् ॥
प्रजानतीनामिति सस्मितानां
दुरुक्तिसूची हृदयं भिनत्ति ॥ ८४ ॥

आकलय्य करुणास्तु तद्गिरः
सूरतो यतिपतिर्जगाविदम् ॥
रामदासि ! यदि तत्र दूयसे
तिष्ठ मत्सविध एव शान्तियुक् ॥ ८५ ॥

इद वचो योगिपतेर्निशम्य
सुलक्षणी प्रीतिमतीन लेभे ॥
नासत्यरम्यौ तनयौ स्वकीयौ
पत्युः पदाब्जे प्रणतौ चकार ॥ ८६ ॥

श्रीचन्द्रलक्ष्मीचन्द्रौ तौ नानकस्यान्तिके स्थितौ ॥
पद्मोद्भवस्य देवस्य कुबेरवरुणौ यथा ॥ ८७ ॥

नवमासोत्तरं तत्र[1] रघावो व्यूढमंत्रकः ॥
अकस्माचारयंश्छागान्[2] रागात्रानकसन्निधौ ॥ ८८ ॥

---

१. रघावी—ख० ।
   रघावी—क० ।
२. छागा—१०

गुरोर्निदेशेन तमाह्वयं स
कूपस्य पार्श्वस्थममुं जगाम ॥
पप्रच्छ योगी वद कोऽसि ? सौम्य ?
प्रगल्भबुद्धिः स जगाद बालः ॥ ८९ ॥

व्यूढाभिधः सिन्धुरधावपुत्रः
तिष्ठाम्यहं तापस ? नातिदूरे ॥
आहूतवान्मां किमपेक्ष्य कार्यं ?
यतिर्जगादाथ जगद्गतिज्ञः ॥ ९० ॥

कार्यं विना नाह्वयतीह कश्चि-
त्त्वचापि कार्यं तव भास्यतीति ॥
विसर्जितस्तेन जगाम बालो
योगीश्वरोऽवादि मया तदेदम् ॥ ९१ ॥

अयं किमर्थं भवतानुयुक्तः ?
संस्कारवांश्चेत्किमु वेत्ति नार्थम् ॥
तेनोक्तमेषो नु जिघृक्षितो मे
जन्मान्तरोपार्जितसाधनत्वात् ॥ ९२ ॥

नासीत्प्रकाशो मनसो न वेत्ति
तेनायमर्थं[1] परमं स्वकीयम् ॥
श्वो [2]ज्ञास्यति ध्वस्तसमस्तमोहो
मोहो भवो योऽप्यभवो द्वयं तत् ॥ ९३ ॥

अन्येद्युरागत्य गुरोः पुरोऽसौ
दधार भक्त्या घृतपूर्णपात्रम् ॥

---

1. मर्थः–क० ।
2. यास्यति–क० ।

ननाम साष्टाङ्गमदर्शि तस्मिन्
ननाम मालिन्यमनोघहृद्धम् ॥ ९४ ॥

तमुक्तवान् योगिवरः किमर्थ- ?
माज्यं त्वया प्राज्यमनायि सौम्य ? ॥
बालेन निह्नूय हृते पदार्थे
पित्रोः प्रकोपो भवति प्रभूतः ॥ ९५ ॥

स्नेहं नय स्नेहमहन्तवेह
गुरोर्गिरेति प्ररुरोद बालः ॥
बालः कुतो रोदिति ? बाल पश्य
मया न किञ्चित्परुषं प्रयुक्तम् ॥ ९६ ॥

मामेवमूचे गुरुनानकोह-
मवादिषं कः परुषप्रसङ्गः ? ॥
आहूय सम्भाषित एष धन्य-
स्त्वया कृतार्थी करणाय नूनम् ॥ ९७ ॥

बालस्तदोवाच न बाल ? वेत्सि
प्रज्वाल्य निर्वापयति प्रदीपम् ॥
गुरुस्तदस्यौपयिकं स्मितेन-
ज्जनानुकम्पा स्मरञ्जितस्य ॥ ९८ ॥

किमेष वक्तीति ? गुरुर्बभाषे
मयोदितं ते चरितं त्वमेव ॥
जानासि नान्यः परमेश्वरस्य
त्वं कश्चिदंश परमेश्वरो वा ॥ ९९ ॥

तवेहितं त्वद्गदितं च वेत्तु-
मपेक्षिता काचन शेमुषी यत् ॥

गुरुः पुनर्व्यूढमिदं जगाद
त्वं सिद्धिमापः सुजनैरपेक्ष्याम् ॥१००॥
स्नानं निर्गं[2] पश्चिमयाम एव
कुरुष्व नामानि वदस्व विष्णोः ॥
कुर्युः कृतार्था अपि कर्मनित्य-
मनुग्रहार्थं जगतीजनस्य ॥१०१॥

व्यूढेन भाषितमहं तव दर्शनेन
जन्मान्तरोऽस्य सुकृताधिगते न धन्यः ॥
सन्दर्शितो हि भवता भवतापहारी
हारी हरिः कृतधियामपि दुर्विभाव्यः ॥१०२॥

इत्थं व्यूढः कृतः साधुर्जगाम भवनं निजम् ॥
मध्ये मध्ये समागम्य यतीशसविधेऽवसत् ॥१०३॥
दग्घो म्लेच्छो दीक्षितश्चेति कर्म
श्रुत्वा दूरान्नानकस्यातिरुष्टः ॥
तत्रा म्लेच्छः पण्डितो म्लेच्छशास्त्रे
मालो नामागत्य गर्वाज्जगाद ॥१०४॥
दग्धो नानकतापसा यदुतरे[3] म्लेच्छस्त्वयेति श्रुतं
म्लेच्छं किञ्च करोषि शिष्यमिति ते धार्ष्ट्यं क्वचिद्विश्रुतम् ?
इन्द्रप्रस्थपतेस्तुरुष्कनृपतेस्तद्धर्मवक्तुस्त्वया
तच्छास्त्रैकविचारचुञ्चुरधियां भीतिर्न ते कानन ? ॥१०५॥

नानकेन तदा प्रोक्तं स्वस्यस्त्वं शृणु वर्द्धके ? ॥
भीतिर्द्वितीयाद्भवति न तं पश्यामि कञ्चन ?१०६॥

---

१. पेक्षाम्—ब० ।
२. निर्दि—ब० ।
३. यदसरे—ब—ख० ।

नवमसप्तचतुर्दशत्रिवेदा
इति भेदा निजलीलया प्रयुक्ताः ॥
ननु दीपचतुष्टयात्प्रवृत्ति
कलिता ते न किलैकके न लोके ॥१०७॥

धर्माधर्मविभेदात्
कर्मफलं यो न यो विविधः ॥
नट इव नानावेषं
स एव धर्ता ध्रुवं नान्यः ॥१०८

अस्माकं ज्ञानदृष्टिर्या स्वच्छा सा स्वेकदर्शिनी ॥
स हस्तदर्श आदर्शो ह्यमोघोऽदूरदर्शिनाम् ॥१०९

घटमठमणिकनिवेशा-
दल्पमहत्त्वादिमानेऽपि ॥
नभसो न भेदमाहु-
र्जीवस्यैवं विवेक्तारः ॥११०॥

तृष्णा तीक्ष्णस्वभावेन पुनर्विप्रतिपादितम् ॥
यद्यसत्यमिदं सर्वमार्यम्लेच्छमिदा कुतः ? ॥१११॥

नानकेन तदा प्रोक्तं चलन्त्या नाविके स्थिताः ॥
ते सत्यं हन्त पश्यन्ति चलतस्तीरभूरुहान् ॥११२॥

ज्ञानिनोऽपि ध्रुवं भेदं वदन्त्यज्ञानिमण्डले ॥
समाजे खलु विख्यानां नासिकाग्रान्न दृश्यते ॥११३॥

आनियकैर्भवति हन्त ! यतः पदार्थैः
सर्वा क्रिया न तु चितामदृशाम्बरेण ॥
ते भेदभाज उदिता गुणतारतम्याद्
बोद्धाऽपि तद्व्यवहरत्यपृथेन तुल्यम् ॥११४॥

लोकसङ्ग्रहपरा विवेकिनः
कुत्रचिद् व्यवहरन्ति लोकवत् ?
कुत्रचिच्चधिगतेश्वरे हिता-
²स्तद्विलक्षणमुपाचरन्ति च ॥११५॥

न भेदश्चैतन्ये श्वश्रमशकमार्जारमृगगे
तदार्ये म्लेच्छे वा सममिति न विद्वेषविषयः ॥
गुणैर्ब्रह्मा विष्णुः शिव इति भिदा न स्वरसतो
न पुत्राद्यैर्भिन्नो भवति खलु तातादिकथनात् ॥११६॥

मालः पपात पदयोर्यतिनानकस्य
प्रोवाच मे गुरुरसि त्वमहन्तु शिष्यः ॥
आर्यस्तथैव यवनः स्वमहत्त्वशंसी
श्रेष्ठस्तयोः क इह ? वानृतवादिनौ द्वौ ॥११७॥

ऊचे गुरुर्गरिमकारणमामनन्ति
लोके स्वजातिमखिला महतोऽभिमानात् ॥
मन्ये मुकुन्दपदयोरनुराग एव
म्लेच्छस्य चार्यनिवहस्य महत्त्वहेतुः ॥११८॥

जातः श्रुतिश्रवणतोप्यपरोक्षबोधो
सम्भावना दिवि हतोऽनुपजातकल्पः ॥
प्रत्यक्षमेतमपहन्तुमपेतशङ्कं
विस्तरयं बहुनतुर्ब्रटिलं पठनं ॥११९॥

तस्माद्य एव जगदीशपदारविन्दे
चेतः समर्पयति तस्य मनो विशुद्धिः ॥

---

१. सङ्ग्रह–ख० ।
२. चरति–ख० ।

बोधो विमुक्तिरचिरेण स एव धन्यो
मान्यो द्विजो भवतु कश्चन पुल्कसो वा ॥१२०॥

[1]शेषमालः पुनरिदं नमन् नानकमब्रवीत् ॥
सत्यप्रेमा मुकुन्दो यः कीदृशः स ? नरो गुरो ? ॥१२१॥

त नानकोऽथ निजगाद न हर्षशोका-
वाविधकैः प्रभवतो विपर्यैरमुष्य ॥
ईशे रतो भवसुखाद्विरतो नितान्तं
धत्ते क्वचिन्न सुजनो ममतामहंताम् ॥१२२॥

दयां जीवेषु कुर्वन्ति मानयन्ति च तान् सदा ॥
ईशं पश्यन्ति सर्वत्र गोविन्दशरणा जनाः ॥१२३॥

इति श्रुत्वा शेषमालो नानकस्य पदाब्जयो ॥
विधाय स्वशिरो भक्त्या जगाम निजमन्दिरे ॥१२४॥

शेषमालसुहृत्कश्चिद्दुमारेखाननामकः ॥
मित्रात्प्रशंसामाकर्ण्य नानकं द्रष्टुमागतः ॥१२५॥

प्रणम्य तेनोक्तमये ? तपस्विन् ?
म्लेच्छोऽस्मि वार्पस्य मते स्थितोऽसि ॥
गुरुस्तमाचष्ट सितासिताभ्यां
न कम्बुकाभ्यां पुरुषो विभिन्नः ॥१२६॥

पक्षी स्वगत्या च पशुः स्वगत्या
नरः स्वगत्या च सरः प्रपद्य ॥
तोयं पिबेत् तृप्तिमपि प्रगागा-
मागच्छतः कस्यचिदस्ति तृप्तिः ॥१२७॥

---

1. शेषमाल = स एव पूर्वोक्तो मालो यो आस्या शेषपुष्पम भाषीत ।

मायामयेन वपुषा पिहितोऽयमात्मा
त्रैवर्णिकोस्मि वृषलोस्मि च पुष्कसोस्मि ॥
स्वप्नानिमाननुभवन्ननु नामदाहं
स्वीयै. कृतं निखननं क्वचिदभ्युपैति ॥१२८॥

आच्छादयन् बृहतिकामसितां सितां वा
चित्रां विचित्ररचनामथवा [1]पिशङ्गीम् ॥
बध्वा गले गुरुशिलां किमुपैति पारं
नावं दृढामभिगतः किमु मज्जतीह ॥ १२९॥

स्वेन स्वेनैव शास्त्रेण [2]स्वस्वेन गुरुणा तथा ॥
आर्यश्च [1]यवनश्चैव स्वकृतेन हरिं व्रजेत् ॥१३०॥

अतो विशेषे मम नाभिमानो
भक्तोऽस्मि रामस्य रमाश्रयस्य ॥
भ्रान्ताः स्वकार्ये कलहायमाना
नाना मताडम्बरवाग्विडम्बैः ॥१३१॥

उवारेखानस्तद्गिरमुपनिशम्येदमगद-
च्छुवो [1]यादृक् [2]तादृक् त्वमसि मम ताः क्वापि ममताः
गताः पादौ वन्दे तव च परिचुम्बामि सततं
न सन्देहो देहो मम शुचिरभून्मानसमपि ॥१३२॥

I उवारेखान प्रति प्रतिपादितस्योपदेशस्य सारांशः ।
i सिताऽसिताभ्यां कञ्चुकाभ्यां न भवति भेद पुरुषे ।
ii नर पशुः पक्षी च सरो गत्वा तदेव तोय पिबन्ति ।
iii वर्णभेदो बाह्य ।
iv स्वस्वेनैव शास्त्रेणार्यो यवनश्च हरिं व्रजति ।
v नानामते कलहायमाना भ्रान्ता भवन्ति ।
१. पिशङ्गीम्–क० ।
२. शास्त्रेण–क० ।

यियासुमापृच्छय तमब्रवीद्गुरु-
यते ? यवागूमुररीकुरुष्व भो ? ॥
स उक्तवान्मामनयः कृतार्थतां
कथं यवाग्वेव तवोपकारिता ? ॥१३३॥

व्यलोकि साक्षाज्जगदीश्वरो मया
मलीमसत्वं मनसो गतं मम ॥
कुरुष्व वात्सल्यमितो व्रजाम्यहं
विलोकयिष्ये चारणाम्बुजं पुनः १३४॥

तं नानको निगदति स्म दयैव विष्णो-
र्द्रागन्तरेण स्वजनेषु फलानि सूते ॥
जन्मान्तरेषु सुकृतानि कृतान्यकस्मा-
त्सन्दर्शयन्ति सुरसिद्धमहौषधादि ॥१३५॥

चक्रे प्रशंसां यतिपुङ्गवस्य
गतस्ततः स्वस्य निकेतनं सः ॥
निशम्य [1]तथादरमाननाम
क्रोधादिदं [2]म्लेच्छपतिर्जगाद ॥१३६॥

अयवनस्य कुतः क्रियते स्तुतिः ?
परमतत्त्वमसंस्पृशतः सदा ॥
उपलपूजनमस्य परं मतं
तदपि मुक्तमनेन विचेतसा ॥१३७॥

---

१. पृष्ट—क० ।
२. ततदादर—क० ।
३. मेल्छ—क० ।

उवारेखान इत्यूचे यवनायवनत्वतः ॥
नाभिभानः स्पृशत्येनं लीनमीश्वरचिन्तने ॥१३८॥

शेप आदरमानाख्य एतदाख्यदतः परम् ॥
उत्सारयेयं तं स्थानात्किं गुरुः ? क्रियतेऽल्पकः ॥१३९॥

उवारेखान ऊचे तं तमीश्वरमसंवृतम् ॥
जानामि कस्य वा शक्तिरीश्वरो सारणो भवेत् ? ॥१४०॥

अन्तः सन्तापबहुलश्चुकोपादरमानकः ॥
न किञ्चिदूचे विस्पष्टमुवारेखानगौरवात् ॥१४१॥

अतिसूक्ष्मतरं वस्त्रमुवारेखाननामकः ॥
अन्येद्युरागत्य गुरोरर्पयामास पादयोः ॥१४२॥

ऊचे यतिस्त्रिभुवनस्य पतिः प्रसीदेद्—
वस्त्रं किमेतदुपनीतमतीव रम्यम् ? ॥
जानासि चीरवसना वनवासिनः स्मो
राज्ञामिदं समुचितं सुतरां महार्घम् ॥१४३॥

उवारेखान ऊचे तं [1]राजराजोसि वेश्वरः ? ॥
त्वत्कृपात इदं लब्धं तुभ्यमेव निवेदितम् ॥१४४॥

तदेव सद्वस्तुफलेन युक्तं
यदर्पितं साधुजनाय भक्त्या ॥
नश्यन्ति वस्तूनि सुरक्षितानि
देहानि गेहानि धनानि धीमन् ? ॥१४५॥

नेदं यदि स्वीक्रियसे मदीयं
तदा न नूनं मयि वत्सलस्त्वम् ॥

---

१. राजोथवेश्वरः—क० ।

क्षमेत मे केन महापराधान्
अनेकजन्मोपचितान्महेशः ॥१४६॥

इति प्रार्थयमानेऽस्मिन्नमस्यति पदाम्बुजे ॥
स्वीकृत्य नानको योगी मामुवाच पुरः स्थितम् ॥१४७॥

तुन्नवायमितस्तूर्णं भ्रातर्बाल ! समाह्वय[१] ॥
अस्य वस्त्रस्य कर्तव्यौ प्रवाररुचिरौ[२] यतः ॥१४८॥

ओमित्युक्त्वा गतोऽहञ्च तुन्नवायमुपानयम् ॥
तस्मै प्रणमते वस्त्रं निरदिक्षद्दिशा गुरुः ॥१४९॥

द्वात्रिंशत्करदीर्घं
करद्वयीमेय[1] विस्तारम् ॥
रूपकषोडशसत्या
वस्त्रमिदं लभ्यते सम्य ! ॥१५०॥

कुर्यां किमस्य ? योगिन् ?
इति परिभायाऽनुपृज्यते तस्मै ॥
[२]प्रावारौ कुरु रुचिरा-
विति यतिराजेन भाषितो भूयः ॥१५१॥

वस्ते वस्त्रमिदं साक्षादीश्वरः कृपया मम ॥
अद्य जाताः कृतार्थोऽहमुदारेदान उक्तवान् ॥१५२॥

नानकेन तदा प्रोक्तं शेप आदरमानकः ॥
यद्यसगाद् तद् ब्रूहि निःशङ्कं नावशेषय ॥१५३॥

---

1. ३२ हाथ लम्बाई + २ हाथ चौड़ाई इति भावार्थः ॥
2. रुचिरौ प्रावारौ = लम्बौ ।
१. समाहूय–रा० ।
२. प्रावारौ सु–क० ।

अनिच्छतापि तद्वाक्यं वक्तुं प्रत्यक्षमप्रियम् ॥
उवारेखाननाम्नेदमवादि गुरुगौरवात् ॥१५४॥

जानासि सर्वं किल सर्ववेदिन् !
तत्रास्ति लोकेऽविदितो न किञ्चित् ? ॥
धत्ते स तु प्रव्रजिताभिमानं
न कामये प्रव्रजितस्य चर्याम् ॥१५५॥

मया कृतं ते स्तवनं निशम्य
स उक्तवान् किं यवनेतरस्य
स्तुतिं करोषीति ? तदा मयोक्तं
स्पृशत्यमुं कश्चन नाभिमानः ॥१५६॥

प्रकुप्यते नेदमवादि देवा—
दुत्सारयेयं सहसा ततस्तम् ॥
प्रौढिं त्वदीयामसहिष्णुरास्य-
मुत्सारयेदीश्वरमत्र को वा ? ॥१५७॥

निशम्य नानकेनोक्तं बालसिन्धो ! व्रजाव भोः ? ॥
द्रष्टुमादरमानस्य शक्तिमुत्सारणक्षमा ॥१५८॥

उवारेखाननाम्नोक्तं यास्याम्यहमपि प्रभो ! ॥
नानकेन तदा प्रोक्तं त्वमस्मत्तः[1] पुरो व्रज ॥ १५९ ॥

यतिर्नेचिद्विजानीयाज्जेतुमानीतवानमुम् ॥
तेनोक्तं किं भयं तस्य नानकः पुनरब्रवीत् ॥१६०॥

1. श्लो० १५६ तः १५७ यावत् नानकं प्रति आदरमानकृता समालोचना वर्तते ।
१. स्मत्तः—क० ।

न भयं यतिवेषस्य[1] परं मान्यत्वकारणम् ॥
स ऊचे धर्ममर्यादामीदृशीं पालयेद्भवान् ॥१६१॥

ततो गतो नानकयोगिमुख्यः
स निर्गतोभूच्छिबिकाधिरूढः ॥
तस्यानुगैरुक्तमुपैत्ययं त्वां
यो नानकाख्यः प्रथितस्तपस्वी ॥१६२॥

अथादरादादरमाननामा
पथि स्थितो मृद्वदरुह्य[2] यानात् ॥
स्वपाणिना पाणिममुष्य धृत्वा
तं पर्यपृच्छत्कुशलं प्रसन्नः ॥१६३॥

योगी जगाद कुशलार्थमुदस्य सर्वं
भ्राम्यन्ति वीतममतायतयः पृथिव्याम् ॥
तेषां भवेदकुशलस्य तु[3] कः प्रसङ्ग
उत्सारणादकुशलं भवत परं स्यात् ॥१६४॥

कस्मिंश्चिदद्भममतोस्ति[4] भवान् प्रदेशे
तस्माज्झटित्यपसराम वयं वराकाः ॥
देहेपि नैव ममतेति यतीश्वराणा-
माकर्णिता तु सुचिरं[5] महिमप्रशंसा ॥१६५॥

स व्रीडित इवाबोचत्कस्त्वामुत्सारयेद् यते ? ॥
केनेदमुक्तमज्ञेन ? विरोधं नौ विधित्सता ॥१६६॥

---

१. यथस्तु–क० ।
२. मदष्य–क० ।
३. नुक –क० ।
४. यद्भमतोस्ति–क० ।
५. महिमा–क० ।

उवारेखानकेनोक्तं त्वयैवोक्तमिदं वचः ॥
ते नु कं नरकं यान्ति यदन्त्यपलपन्ति ये ॥१६७॥

आदरमानोऽगादीत्प्रव्रजितोहञ्च नानकश्चैव ॥
मध्येऽनयोर्निपाते न तव गृहस्थस्य देशल्पः स्यात् ॥१६८॥

शिष्योऽहं सर्वथा जातो नानकस्य तपस्विनः ॥
शृणुयां विभ्रु ! तन्निन्दामुवारेखान उक्तवान् ॥१६९॥

उवारेखानमाचख्यौ नानकः शृणु सन्मते ? ॥
अयं प्रव्रजितो ब्रूते कां वार्तां साधुसम्मताम् ? ॥१७०॥

पप्रच्छ नानकमथादरमाननामा
त्वं ब्रूहि कोऽसि यवनो यवनेऽतरो वा ॥
ऊचे स नास्मि यवनो यवनेतरो वा
शुद्धाचिदस्मि महतस्तमसः परस्तात् ॥१७१॥

आपृच्छ सौम्य ? यवनो यवनेतरो वा
कुर्वन्ति हन्त ! कलहं न विदन्ति तत्त्वम् ॥
यो मार्ग एव विवदे स न याति कश्चित् ?
देशं गमिष्यति कथं स सुदूरमित्थम् ॥१७२॥

ममतामपहाय सर्वतः-
कतमेनापि ? यजेत वर्त्मना ॥
जगदीश ? मुदस्य नश्वरं
भवमज्ञानघनं विमुच्यते ॥१७३॥

आदरमानो पृच्छन्नानक तव किं मतं ब्रूहि ? ॥
आकर्णय मतमेतन्मदीयमिति नानकोऽब्रूत ॥१७४॥

---

१. सर्ग-८०।

सत्यं मतं मम न कश्चन संशयोऽत्र ?
कर्ताखिलस्य जगतो जगदीश एकः ॥
स ह्यूर्णनाभ[1] इव तं तु स्वयं स्वतन्त्रो
विश्वं वमत्यथ च संहरति स्वशक्त्या ॥१७५॥

मायामयं धनकुटुम्बगृहादिमिथ्या
मत्वा न तत्र नितरां ममतामुपेयात् ॥
सत्ये सुखे भगवति स्वगतो निवेश्य
तद्भेदतोऽधिगतमाधिमुदस्य नन्देत् ॥१७६॥

स्वप्नोपमैः सुतसुहृल्ललनादिपाशै-
रावेष्टितः खलु विचेष्टित उज्झितश्रीः ॥
निर्भिद्य पञ्जरमिव स्वबलान्मृगेन्द्रो
दुर्वासनातिगहनं विहरेत धीरः ॥१७७॥

शेष आदरमानाख्य आचख्यौ नानकं पुनः ॥
ये प्रियाः परमेशस्य तेपि किञ्चिन्मते मते ॥१७८॥
नानको निजगादेदं ये प्रियाः परमेशितुः ॥
परमेशः प्रियस्तेषां तदेव तु सुदुष्करम् ॥१७९॥
पश्यन्ति ये नमस्यन्ति सर्वत्र जगदीश्वरम् ॥
ते प्रिया जगदीशस्य जगदीशश्च तत्प्रियः ॥१८०॥
आडम्बरैरलमलं गमकैरिरक्ते
वैराग्यवाग्भिरनिशं परमोहिनीभिः ॥
तुच्छं प्रपञ्चमवधीर्यदधीतधीरो
भावं परे महसि साक्षिणि सत्यमद्य ॥१८१॥

---

1. श्लो० १७४ त १८१ पर्यन्त नानकमतवर्णनम् [illegible]
सञ्जातः ॥
१. नाभ–ब० ।

आदरमानेनोक्तं
तव दूरे दृष्टिरापतिता ॥
विजगाद नानकगुरुः
दृष्टिर्मे पश्यतीश्वरं सत्यम् ॥१८२॥

ज्ञानस्य शास्त्रस्य समागमस्य
मतां विरक्तेस्तपसः[1] फलं हि ॥
उपेक्षणं प्राकृतविभ्रमेषु
निरन्तरं तत्परता परेशे ॥१८३॥

[2]अहन्ताममते त्यक्त्वा देवं वेत्ति यथा यथा ॥
तथा तथा क्षीणमलः स एव भवति ध्रुवम् ॥१८४॥

आदरमान उवाच यतीशं
नानक ते दयते स्म परेशः ॥
दर्शनमस्तु सदा भवदीयं
पादसरोजयुगं तव वन्दे ॥१८५॥

क्षमस्व [3]मां तून्मनसं तु नित्यं
दयाद्रहस्ते मयि दासभूते ॥
उवाच योगी नहि कोऽपि मन्तु-
र्जन्तुः कश्चिन्मो[4]र्ज्झितकर्मतन्तुः ॥१८६॥

अनित्यमेतत्कलयस्व नित्यं
ततो न तस्मिन्ममतां वधान ॥

---

१. तपसा—क० ।
२. अहंता—क० ।
३. मन्तुन्मन—क० ।
४. ऐज्झित—क० ।

दधान ईशे सहजानुरागं
पत्युस्त्रिलोक्याः परमप्रियः स्याः ॥१८७॥

न द्वारि दौवारिकलोकरुद्धा
प्रवेशमिन्द्रादिसुरा लभन्ते ॥
तथापि भक्तस्य भवादृशस्य
विज्ञप्तिपत्र भगवान् शृणोति ॥१८८॥

न विस्मरन्ति ये विष्णुं क्षणमप्यनुरागिणः ॥
क्षणार्धमपि तान् देवो वशीभूतो न विस्मरेत् ॥१८९॥

शेषो वभाषे योगीन्द्रं सर्वं सत्यमुदीर्यते ॥
उमारेखान आह स्म त्वमस्योत्सारणापरः ॥१९०॥

तमन्ननीदादरमानशेष
एष प्रतीतो न मया विशेषः ॥
आर्यो यथैवोपलपूजकोऽन्यो
वन्योयमप्येवमये ! मृगः स्यात् ॥१९१॥

परावरज्ञाननिधिः परेशे
प्रेम्णा प्रकृष्टेन परिप्रपन्नान् ॥
नूनं जनोद्धारकरोऽस्तीर्णो
योगी प्रसीदेन्मम नानकाख्यः ॥१९२॥

इति श्रीजगद्गुरुनानककथाया नानकचन्द्रोदयसमाख्यायामजिताधुद्धारो नामाष्टादश प्रस्ताव ॥

—:०:—

## एकोनविंशः प्रस्तावः

सा लेखनी कमलकान्तकराग्रसद्यात्
पद्मासनस्य दयितामपि भक्तिनम्रे ॥
शास्त्राभिधं व्यवहितेपि च विप्रकृष्टे
चक्षुर्ययोपजनितं क्रमते जनस्य ॥ १ ॥

ततो जगाम योगीन्द्र उचारेखानतुद्ये ॥
दिनद्वयं गृहे तस्य तस्थौ भक्त्या समाजितः ॥ २ ॥

पक्षके च गतः साध्व्या[1] सुलक्षप्याभिवीक्षितः ॥
अन्येष्वहस्वतीतेषु मामुवाचेदमग्रधीः ॥ २ ॥

अस्ति कश्चिज्जलालाख्यो यवनो यतिरुत्तमः ॥
तं विलोकितुमिच्छामि चल बाल ? विनोदतः ॥ ४ ॥

"ओं" इत्युक्ते 'मयाप्यासीत् सस्नौ सरिति कुत्रचित् ॥
रात्रिशेषे सैन्धवश्च यवनः स्नानमातनोत् ॥ ५ ॥

गुरोश्च जगदीशस्य स्मरणस्य प्रसङ्गतः ॥
इदं जगाद योगीन्द्रो भक्तिप्रेमरसालसः ॥ ६ ॥

नादो गुरुमुखश्चैव वेदो गुरुमुखस्तथा ॥
ईशा गुरुमुखश्चैव गोरक्षस्तादृशो मतः ॥ ७ ॥

ब्रह्मा गुरुमुखश्चैव पार्वती तादृशी मता ॥
यो दुर्ज्ञेयो दुर्निरूपस्तं गुरुः परिबोधयेत् ॥ ८ ॥

---

1. मार्गे सैन्धवो नाम यवनो रात्रौ स्नाति स्म त दृष्ट्वा यतिम्त श्लो० ६ त ११ पर्यंतं गुरोर्विषये गुरुमुखस्य च विषये कियतः प्रश्नानश्रावयत् ।

१. मय्याप्यासीत्–स० ।

तीर्थप्रमाणो गुरुणोधनीयः
कर्माणि नानाफलदायकानि ॥
चिन्तामणिश्चान्तरचिन्त्यमानः
फलेच्छयेष्टं गुरुणोपदिष्टः ॥ ९ ॥

ब्रह्माण्डभेदेन [1]चयेन क्लृप्ता
आकाशपातालमिदा असंख्याः ॥
स ईश्वरः सर्वसुरद्रुमो[2] मे
न विस्मृतः स्याद् गुरुणोपदिष्टः ॥ १० ॥

[I]वेदैः पुराणैरितरैः स्वबुद्ध्या[3]
विकल्पितैर्नादमयैश्च शास्त्रैः ॥
सहस्रधा तं परिवर्णयन्तु
गुरोर्ममोक्तो जगदीश एकः ॥ ११ ॥

इदं श्रुत्वा सैन्धवः स म्लेच्छः क्रुध्यन्विनिर्गतः ॥
किं विलम्बितमित्युक्तो गुरुणा तमभाषत ॥ १२ ॥

नद्यां स्नान् यवनेतरो यतिरभूत्तेन प्रलापः कृतः
पातालानि च [4]तान्यनन्तमखिलं देवाश्च शास्त्राणि च ॥
त्वत्प्रोक्तास्तु चतुर्दशैव मम तच्छ्रुत्वाऽभवद्विस्मय-
स्तस्याचार्य उवाच याहि यतिनं शीघ्रं समाकारय ॥१३॥

---

I. नानरमते पातालानि, देवा, शास्त्राणि च असंख्यानि। असाम्मते चतुर्दश एव। इति सैन्धवस्य हृदये विसंवाद सजात।

१ च यन–क०।

२ द्रुमो–क०।

३. बुध्या–क०।

४. परमाय–क०

५. तान्य–क०।

सैन्धवेन समाहूतावावां तद्गुरुमागतौ ॥
नानकः प्रणतस्तेन हस्तालिङ्गनपूर्वकम् ॥ १४ ॥

यदपृच्छज्जलालाख्यस्तस्योत्तरमदाद् गुरुः ॥
प्रससाद स तेनोच्चैः प्रणनाम च सादरम् ॥ १५ ॥

सैन्धवोऽब्रूत युवयोः प्रीतिरासीत्परस्परम् ॥
तदवस्थैव मद्वार्ता यदर्थमहमाह्वयम् ॥ १६ ॥

जलालोऽब्रूत किं ब्रूषे ? सैन्धवः पुनरब्रवीत् ॥
अस्यते तत्त्वविज्ञाने विसंवादो विलोक्यते ॥ १७ ॥

चतुर्दशैवावरणानि पुष्करे
भवद्भिरुक्तान्ययमाह भूरिशः ॥
युवां समर्थौ वितथं ब्रवीति को ?
द्वयोरिति द्वापरमेति मादृशः ॥ १८ ॥

जलाल ऊचे शृणु वत्स ? सैन्धव ?
प्रभोरियं प्राकृतसृष्टिकल्पना ॥
न कश्चिदस्याः परमात्य बुद्धिमान्
वदन्ति यावद्भिदिदं विपश्चितः ॥ १९ ॥

इयं हि मायेक्षणतो जगत्पते-
रनन्तरूपं परिमाणमीयुषी ॥
न तत्त्वतः सूरिभिरप्यवेक्ष्यते
भवन्ति शास्त्रे स्वत एव विग्रहाः ॥ २० ॥

तथापि शिष्यानुपदेष्टुमुच्चकै-
र्निजप्रतीत्यानुगता न याः कृताः ॥
तमेकमाश्रित्य विबुध्य संकटा-
त्सुमानसृष्याद्विगतो विभुं भजेत् ॥ २१ ॥

यतेत योऽस्यानुगमाय सर्वथा
भवस्य भूयान्समसौ परिश्रमन् ॥
लभेत सिद्धिं नच कश्चन क्षतं
यथा तुषाणामवघातको द्रुमम् ॥ २२ ॥

इदं मण्डलक्षं खलु वच्मि नानकः
प्रकीर्त्यतां तत्परतः किमस्ति ? भोः ? ॥
यतीन्द्र ऊचे परतस्तथोपरि
स्फुरत्यघो' निष्यगकृत्रिमं महः ॥ २३ ॥

सैन्धवप्रेरितोऽपृच्छज्जलालो नानकं ततः ॥
त्वं किं गुरुमुखेत्याख्य शिष्यो मम न युज्यते ॥ २४ ॥

नानकस्तमथोवाच त्वामिह प्रष्टुमागमम् ॥
श्रुतवाँस्तव सामर्थ्यं तपसा निपुलीकृतम् ॥ २५ ॥

जलालो निजगादेदं न यवनशास्त्रगम् ॥
तत्कथं वक्तुमीशेऽहं संस्कृतं पूर्वमश्रुतम् ? ॥ २६ ॥

त्वामेव प्रष्टुमायात इति तं यतिरब्रवीत् ॥
शिष्यो भूत्वा जलालोऽथ गुरुं नानकमुक्तवान् ॥ २७ ॥

गुरुमुखमवगन्तुमेन मक्का-
महमुपयामि समेन्धवस्त्वमत्र ॥
निवस मम निवर्तनं न यावत्
गुरुरिव शिष्यगणैर्निषेवितो मे ॥ २८ ॥

गते जलाले गुरुमित्यपृच्छं
तामेव मक्कां यदि पूर्वदृष्टाम् ॥
व्रजत्ययं तत्र तदा वदेत् कः ?
ते म्लेच्छशास्त्रेषु परं प्रवीणाः ॥ २९ ॥

गुरुर्जगादेदमयं न सिद्धो
विरक्तिमार्गे प्रविवेश किञ्चित् ॥
शुश्राव तत्र स्थितमेव कंचित् ?
सर्वज्ञमद्यावधि धीर्विहीनः ॥ ३० ॥

आरुह्य पोतं जलधौ जलालः
पारं गतस्तस्य दिनैः कियद्भिः ॥
ददर्श शैले फलिनः सुवृक्षान्
हर्म्याणि रम्याणि शुभांश्च शष्पान् ॥ ३१ ॥

भोक्ता भवेत्कः परिवर्हमेत-
मिति स्वबुद्ध्या[१] परिभावयन्सः ॥
शैलादपक्रम्य [२]तरङ्गमाला-
मवालुलोके जलधेस्तटस्थः ॥ ३२ ॥

प्रवर्षतो वारिधरान् पयोधौ
विलोक्य संकल्पमकल्पयच्च[३] ॥
स्वातन्त्र्यमीशस्य किमेतदेवं
जले मुधा वृष्टिरियं स्थलेन ॥ ३३ ॥

तस्येति चिन्ता समकालमेव
शशाम वृष्टिः स गिरिं जगाम ॥
शष्पानि यस्मात् पुरुषान् ददर्श
तेजोभिरुग्रैश्चकितस्तदीयैः ॥ ३४ ॥

---

१. वुघ्या–क०
२. तरग–क०
३. मक्त्पयित्व–क०

एकं नमस्कृत्य स तस्य पार्श्वे
दृशानि दृष्टे निपसाद देशे[1] ॥
सुवर्णपात्रीषु ततो नभस्तो
भोज्यानि दिव्यानि समागतानि ॥ ३५ ॥

न भोक्तुमैच्छत्स बुभुक्षितोऽपि
तस्मिन् स्थिते तत्र कृता नृशंस्यः ॥
आगन्तुकः संशयितं[2] करोति
भोक्तारमेकोचितभोज्यसिद्धौ ॥ ३६ ॥

गुरोरशुश्रस्यैव गतः स पार्श्वं
पृष्टश्च तेनेति जगाद कश्चित् ? ॥
सामर्थ्यतः कस्यचिदागतोऽत्र ?
तं वर्जयित्वा तु न भोक्तुमीहे ॥ ३७ ॥

इदं तदीयो गुरुराबभाषे[3]
कस्यातिथिः ? कस्य च भोज्यमेतत् ? ॥
यस्यातिथिस्तस्य यदीह भोज्यं
भक्ष्ये मुधा त्वं किमु संशयस्थः ! ॥ ३८ ॥

शिष्यो निवृत्तोऽथ जघास भोज्य-
मेकस्य तृप्तिप्रदमप्रदाय ॥
तेषां गतिः ज्ञातुमना जलालो
रात्रौ जजागार बुभुत्सया च ॥ ३९ ॥

---

१. देशं—ख०
२. संशयितं—क०
३. भावभाषे—ख०

वेलावनामोदभरं दधाने
प्रातस्तने वाति ततः समीरे ॥
निमीलिताक्षः क्षणमेष आसी-
दतर्क्यं लीलाश्च विरोद्धुस्ते ॥ ४० ॥

सुप्तोऽस्थितस्तानविलोक्य निद्रां
चिरादुपालभ्य स सिन्धुमागात् ॥
कैवर्तकोलाहलभीतलोकं
पोतं निमज्जन्तमलोकयच्च ॥ ४१ ॥

स्त्रीबालवृद्धतरुणेषु[1] परान् धरत्सु
धीरेषु बाहुतरणाय समुन्मिपत्सु ॥
दोलाधिरूढ इव लोलति तत्र पोते
वात्सल्यतः स विललाप जलाल इत्थम् ॥ ४२ ॥

ऋणं कृत्वा केचित्परिकलितभाण्डास्तदितरे
परिक्रीताः स्वीयेष्ववधिमभिधाय प्रचलिताः ॥
[2]कृतेऽन्येषां काकं शकुनमनुपृच्छन्ति दयिताः
स्मरन्तोऽन्ये कान्तागणितदिवसाः सन्ति तरुणाः ॥ ४३ ॥

संघातमृत्युमेतेषां करोषि करुणानिधे ? ॥
कथं प्रणीयसे लोकैर्लोकेश ? न विलज्जसे ॥ ४४ ॥

विलपति जलाल एवं
जलादुदञ्चद्वहिस्तमायान्तम् ॥
गाधे व्यपेतबाधे
जना जनुर्मेनिरेऽभिनवम् ॥ ४५ ॥

---

१. विद्वज्जनेषु—क±ख
२. कृतान्येषां—क०

सायं समारोहदसौ गिरिं तं
तत्त्वं मुनीनामवसातुकामः ॥
पूर्वं समागत्य तु मन्दिरेषु
निजे निजे ते शयने निषण्णाः ॥ ४६ ॥

तस्यैव पार्श्वे निषसाद गत्वा
यस्य स्थितः पूर्वदिने समीपे ॥
मोज्येरतीर्णे स पुनर्जगाम
गुरोः स देशं दयया तपस्वी ॥ ४७ ॥

उवाच सोद्याप्यतिथिः स्थितो मे
दिनद्वयं पोषित एव पार्श्वे ॥
गुरुस्तमाह स्म तमानयस्व
पश्यामि वस्तेन कृतोऽपराधः ? ॥ ४८ ॥

शिष्येण नीतं स गुरुर्जलालं
जगाद कुत्र भ्रियसे विरक्त ? ॥
द्वाभ्यां दिनाभ्यामितरत्र जन्म-
न्युपोषितस्त्वं तु कदाप्यमुष्मिन् ? ॥ ४९ ॥

को वापराधो भवता प्रणीतो ?
नाहारमीशो विदधाति येन ॥
न भोजनं भो ? जन ? लभ्यते य-
दीशस्य कोपस्य फलं महत्तत् ॥ ५० ॥

जलाल आष्टयदुचारव्ये स्थले तिष्ठामि सुव्रताः ॥
इहं दिनद्वयं त्यक्त्वा नोऽपवासः क्वचित्कृतः ॥ ५१ ॥

अहोरात्रे प्रणमता पंचकृत्वो मयेश्वरम् ॥
आगः क्रियेत किमहो ! ईशात्सर्वफलार्थिना ॥ ५२ ॥

वलाहके वर्षति सिन्धुमध्ये
मया तटस्थेन मनस्यचिंति ॥
प्रौढिः परेशस्य निरर्थकेयं
स्थले न किञ्चिज्जल एव वृष्टिः ॥ ५३ ॥

अन्येद्युरालोकि ततः समुद्रे
मज्जद्युतं दीनजनैर्वहित्रम् ॥
दया न दीनेषु दयानिधेर्हा !
मया महेशः पुनरित्यनिंदि ॥ ५४ ॥

इदं यदि स्यादपराधकोटौ
तदा भवन्तः प्रविदन्तु सन्तः ॥
प्रसादकोपावपि दुर्विभाव्यौ
महेश्वराणां खलु मादृशेन ॥ ५५ ॥

दिव्यो मुनिः कोपमुपेत ऊचे
विवासनीयो विमुखो यमीशे ॥
को नाम मेनाचरिते जगत्यां
विरुद्धधीरन्यथयेत मूढः ॥ ५६ ॥

आज्ञां विना तृणमपि द्रुहिणोपि यस्य
न स्पन्दते दुरवरोधविचित्रशक्तेः ॥
तस्य द्वितीय इव कोऽसि कृतेषु मोहाऽ-
न्निर्धारयन्सदसदित्यविलज्जमानः ॥ ५७ ॥

कर्माणि पश्यति जनस्य स सर्ववेत्ता
जन्मान्तरेषु चरितानि विपाकवन्ति ॥
धत्ते फलं तदनुसार वशादसद्वा
सद्वा रिपौ सुहृदि भूप इवात्तदण्डः ॥ ५८ ॥

तं जलालस्तदापृच्छत्को वा गुरुमुखो मतः ? ॥
विमुखो वा ममाचक्ष्व ततः कुर्यां तवोदितम् ॥ ५९ ॥

ऊचे गुरुर्गुरुमुखो गुरुतो विदित्वा
देवं तदीयमभिनन्दति सर्वकृत्यम् ॥
शास्त्रं गुरुं च विरहय्य निजेच्छयैव
निन्दां करोति विमुखश्चरितेषु तस्य ॥ ६० ॥

अभ्यधायि जलालेन समाधानं ममाभवत् ॥
स्थापयित्वाऽश्रमेत्येतत्प्रहारमहमागमम् ॥ ६१ ॥

मुनिर्बभाषे भवदाश्रमस्थो
जानाति सर्वं मतिरप्रमेय[1]: ॥
जलाल ओमित्यभिधाय यात
आहारमायातमपूर्वमस्मात् ॥ ६२ ॥

व्रजन्ति कुत्रेति ? विलोकमानः
स्थितश्च तस्यां निशि जागरूकः ॥
प्रातः प्रयातेषु[१] च तेष्वकस्मा-
दपेतनिद्रो[२] बुबुधे जलालः ॥ ६३ ॥

न योगसिद्धस्य गतिं विवेक्तु-
मस्मादृशः स्वल्पतपाः[३] प्रपश्येत् ॥
इति स्वबुध्या विमृशन् जलालः
पोताश्रितः पाग्मुपाजगाम ॥ ६४ ॥

---

1. मतिरप्रमेयः इति "ग" इत्यत्र नास्ति ।

१. युयते–ख०
२. पेतनन्द्रो–ख०
३. स्वल्पतपा–क०

स्वल्पाश्रमे मणिरिवाहिफणो यतीन्द्रो
दृष्टो जलालयतिना ज्वलितस्तपोभिः ॥
संस्पृश्य हस्तमिति गौरवतः प्रणम्य
विश्रान्तमेतमिति नानक आत्मभाषे ॥ ६५ ॥

'गुरुमुखाच्च जलाल ! यतेर्मया-
न्निदितवान् कथमर्थमुदीरय ॥
कतिपये भ्रमता भवता क्षितौ
जनपदाश्च तदर्थमवेक्षिताः ॥ ६६ ॥

इदं जलालो निजगाद योगिन् !
न ते मतं किञ्चिदिह त्रिलोक्याम् ॥
शुश्रूषयेऽस्यापि ममाननाचे-
दवेहि सर्वं कथये यथार्थम् ॥ ६७ ॥

मक्काख्यदेवायतनं यियासु-
र्वहिस्ततो द्वीपमुपेत्य कश्चित् ॥
वलावने [2]ध्यक्षिपि तुङ्गशृङ्गं[3]
शैलं समारुक्षुरुदीक्षितुं तम् ॥ ६८ ॥

तस्मिन् गृहाणि रमणीयरुचीनि शय्या
निर्मुक्तशेषधवला विजना विलोक्य ॥
विस्मेरतामुपगतः पुनरेत्य सायं
दिव्यान्मुनीनकलयं शयने निषण्णान् ॥ ६९ ॥

---

१. गुरुमुख–क०
२. घस्रति–क०
३. मुदीक्ष्य तुङ्गम्–क०

पार्श्वे न्यषीदमहमन्यतमं प्रणम्य
[1]मद्वर्जमागतमथाखिलयोग्यभोज्यम् ॥
नीतोऽस्मि तेन निकटं निजदेशिकस्य
भोज्यं न लब्धमिति मां विमुखं स ऊचे ॥ ७० ॥

कः कथ्यते गुरुमुखो विमुखो मयेति ?
पृष्टोऽपराधमधिगम्य ममावदत्सः ॥
संमन्यते[2] गुरुमुखः कृतमीश्वरस्य
तद्गर्हते तु विमुखो गुरुशास्त्रहीनः ॥ ७१ ॥

तेषां गतागतविलोकनलालसोऽहं
मासं चिरं न तु मया विदिता महान्तः ॥
पृष्टाः प्रभावचकितेन न च प्रवृत्तिं
जानन्ति किन्तु तव ते महिमानमङ्ग ? ॥ ७२ ॥

जलालमापृच्छ्य[१] ततो जगाम
यतीश्वरः [२]पथ्यहमित्यपृच्छम् ॥
ते के तपस्विप्रवरा वसन्ति ?
शैले पुनः कुत्र यियाससि त्वम् ?॥ ७३ ॥

जगाद योगी शृणु नारदस्य
शिष्यास्तपस्यन्ति महाद्रितीरे ॥
ते लीलया कञ्चन पुण्यभाजं
प्रदर्शयन्ति [३]स्वतनूः कदाचित् ॥ ७४ ॥

---

1. मां विहायेत्यर्थः ।
2. उदासीनसम्प्रदाये गुरोर्महिमा महानस्ति । तत्र सद्गुरुर्विष्णुरेव । तस्यामेव परम्परायां गुरूणां विहिता प्रचालिता च लपितुंद्मुखीति ॥

१. साद्–ख० ।
२. एव–ख० ।
३. तनु–ख० ।

व्रजाम्यहं शेषफरीदपत्तने
विराहमाख्योऽसि [1]तदासनेऽधुना ॥
स चापि योग्यो जगदीशवन्दनात्
मयानुयुक्तं किमसौ जलालवत् ॥ ७५ ॥

तदाऽब्रवीन्नानकयोगिशेखरो
महज्जलालस्य च तस्य चान्तरम् ॥
तपःश्रमी प्रव्रजितो जलालको[2]
विराहमो लोकपतेः परंप्रियः ॥ ७६ ॥

विपाशाया इरावत्या मध्ये क्रोशद्वयान्तरे ॥
दिनस्य चरमे यामे यतिरागत्य संस्थितः ॥ ७७ ॥

विराहमः शेषफरीदसद्मः
स्थितस्तदीये [3]गुरुतासने तदा ॥
तदीयशिष्यो नृपतिश्च नीदृतो–
ऽतिभक्तिमान् बालविराहमाभिधः ॥ ७८ ॥

चिन्वन् स समिधस्तत्र गुरुणा विनियोजितः ॥
यदृच्छया नानकोक्तां वाणीं श्रुत्वा समागतः ॥ ७९ ॥

प्रणम्य च स्थितः पार्श्वे जगाद गदतांवरः ॥
यतीन्द्र ! यन्निगदितं [4]तत्पुनर्मत्कृते वद ॥ ८० ॥

पट्टः स्वयं च कलमः किल लेखकः स
यश्च द्वितीयवदसावपि न द्वितीयः ॥

---

१. तदा स नेऽधुना–क० ।
२. जलालमको–क० ।
३. गररान्ने–क० ।
४. ईम–ख० ।

सेव्यः स एव स च सेनकृतां प्रपन्नो
योद्धा स एव [2]विविधश्रुतिभिः स योध्यः ॥ ८१ ॥

शिष्यो गतो निजगुरोर्निकटं निशम्य
वाणीं यतेरतिमतेः स्तुतिमित्यकार्षीत् ॥
दृष्टोऽद्य नानक इति प्रथितस्तपस्वी
साक्षादसौ भुवनभावन एव नान्यः ॥ ८२ ॥

ऊचे गुरुः स्वगिरमास्व गिरा न वाच्यो
भ्रमो यथार्थमिति कश्चन नास्ति दोषः ॥
पाषाणमूर्तिपरिपूजनपूर्तिभाज
आर्या महीयसि परस्य महस्य बोधाः ॥ ८३ ॥

एकान्तवामनियतासनसंयतेन
प्रेमप्लुतेन मनसा जगदीश्वरस्य ॥
संस्थापनं हृदयतामरसे रसज्ञा
जानन्ति हन्त! यवनानपरे भ्रमन्तः ॥ ८४ ॥

एक एव जगत्स्वामी तस्यानेकेभिमानिनः ॥
ममैवेति ममैवेति कस्यासौ कस्य नो मतः ? ॥ ८५ ॥

इति मे वचनस्यार्थं यदि ब्रूयात्स चोत्तरम् ॥
तदा तमीश्वरं मन्ये विद्यां न चान्यथा ॥ ८६ ॥

शिष्यो गतो गुरुवचोऽभिजगाद पार्श्वे
श्रीनानकस्य स उवाच निशम्यतां भोः ! ॥
ग्रामे ममैव सवितेति विदन्ति बाला
सर्वत्रगः स च समस्तजगत्प्रकाशः ॥ ८७ ॥

---

२. विविधै पु०-च० ।

ईशो भेदत्रयातीतः परिच्छेदत्रयातिगः ॥
सर्वस्यापि च सर्वत्र व्योमेवाऽखिलकारणम् ॥ ८८ ॥

अग्निर्यथा जाड्यरुजं[1] निहन्ति
जलं यथा तापमपाकरोति ॥
कल्पद्रुमो एति यथेप्सितार्थं
सर्वस्य दुःखं स तथा [2]छिनत्ति ॥ ८९ ॥

संनिधानमपेक्षन्ते यथा वैश्वानरादयः ॥
तथा ज्ञानं विना नैष [3]मृतिजन्मजरां हरेत् ॥ ९० ॥

यवना यवनेतरे[4] तथा
पन्नगो राक्षसदैत्यदेवताः ॥
तमुपास्य परां गतिं गताः
सकलस्यापि स [5]कामदो मणिः ॥ ९१ ॥

सूनृतान्यथ निशम्य जगाद
देशिकस्य निकटे स निजस्य ॥
आजगाम स [6]विराहिमनामा
दर्शनाय यमिनां प्रवरस्य ॥ ९२ ॥

अवरूढः शिविकायाः
नानकमवलोक्य दूरतो विनयात् ॥
यवनपतिर्यविमर्तुः
पपात पदयोः परप्रेम्णा ॥ ९३ ॥

---

१. जाड्यरजा–क० ।
२. छिनधि–क० ।
३. मृतिराजन्मजरा–क० ।
४. तरोतथा–क० ।
५. कानदो–क० ।
६. वराहम–क० ।

आलिङ्ग्य स स्वागतपूर्वमेनं
समाजयामास परं प्रसन्नः ॥
ऊचे स साधो ! सुदिनाह सद्यः
समागमान्ते मम सर्वथैव ॥ ९४ ॥

[1]अकारयत्संस्तरमात्मभृत्यै
विराहिमस्तुङ्गतरे प्रदेशे ॥
तस्मिन् गुरुः पूर्वमुखो न्यषीदत्
पश्चान्मुखो म्लेच्छतपोधनः सः ॥ ९५ ॥

स्मेरो गुरुः प्रणिजगाद विभुर्भवद्भि-
र्निर्धारितश्च [2]स्मरदेशनिवासशीलः ॥
तेनाम्यधायि यवना निजसम्प्रदाया-
न्मक्कादिदेवसदनाभिमुखं नमन्ति ॥ ९६ ॥

योगीश्वरो न्यगददन्यपरं परे ये
चक्षुष्मतापि हितनेत्रमुपासनीया ॥
नद्यां यथा मृगयते गृहवस्तु कश्चिद्
देवं तथा मृगयसे दिशि पश्चिमायाम् ॥ ९७ ॥

ऊचे विराहिम इदं वद योगिवर्य !
लभ्येत येन जगतीदयितः स देवः ॥
किं चीवराणि बिभृयां वसनान्युदस्य !
किं वा व्रजेयमपहाय गृहं वनाय ! ॥ ९८ ॥

जगाद योगी जगदीश्वरस्य
प्रसत्तये न प्रभवन्ति सौम्य ! ॥

---

१. अकारयत्-क०
२. स्मरेत-क०

वस्त्राणि चीराणि गृहा वनानि
विरक्ततापा विविधाश्च वादाः ॥ ९९ ॥

अनन्यभावेन स चिन्तनीयो
मनो वशीकृत्य विवर्तमानम् ॥
निघर्षजो दारु यथाश्वपाश-
स्तथा शमं तस्य नयेत्प्रसद्य[1] ॥१००॥

विविक्तदेशे संतुष्य यस्तिष्ठति तदाश्रयः ॥
तमेव भावयन् भक्त्या तस्य श्रीशः प्रसीदति ॥१०१॥

विराह्मिो ब्रूत वयो व्यनीतं
नचापरोक्षं परमस्य लब्धम् ॥
कथं विविक्ते स्थितिशालिनो मे ?
जरापरीतस्य तदद्य भावि ॥१०२॥

नानकेन ततः प्रोक्तं यदैव[2] जगदीश्वरम् ॥
जानाति हन्त ! लभते तदैव[3] न विलम्बतः ॥१०३॥

कण्ठस्थितस्य कनकाभरणस्य नैष
दोषोऽन्विषेष पुरुषो यदिदं हि विष्वक् ॥
विस्मर्तुरस्य स तु कण्ठगतं तवेति
प्रोक्ते परेण लभते द्रुतमेव यस्मात् ॥१०४॥

विराह्मिोऽभाषत नानक ! त्वया
महेश्वरोऽलभ्यत तेन हेतुना ॥
तमेव मह्यं वद मन्त्रमौषधीं
मणिं प्रणीयार्तजने दयालुताम् ॥१०५॥

---

१. प्रसद्य—क०
२. यदेव—क०
३. तदेव—क०

अब्रूत नानकपतिः शृणु सावधानो
मन्त्रो मणिश्च महदौषधमेतदेव ॥
ईशं परं वशयितुं वशवर्तिचित्तो
न प्रस्मरेत् क्षणमपि क्षणदादिनेषु ॥१०६॥

यूनो यथैव युवतौ युवतीजनस्य
चित्तं च यूनि रमते स्वरसेन शश्वत् ॥
तद्वद्रमेत सततं रमणे रमाया-
श्चित्तं यदीयमपचापलमेष भक्तः ॥१०७॥

सेवेत विश्वपतिमव्यभिचारभक्त्या
यो मानमोहरहितः स्वहितप्रसक्तः ॥
अल्पैर्दिनैर्गुणविकारमतीत्य धीरो
धी-रोधकं विमलबोधसुखं स याति ॥१०८॥

चिराहिमोऽपृच्छदुदीयाते पुरा
हरेर्दयाभक्तिरुवानपायिनी ॥
[1]विमोहमायाति परस्पराश्रयं[2]
प्रपश्यतो मे हृदयं दयानिधे ! ॥१०९॥

गुरुर्जगादेदमवेहि सन्मते !
जनस्य पुण्यैर्जनुरन्तरार्जितैः ॥
उदेति भक्तिर्जगदीशितुः प्रिया
ततो दयादत्वमहो ! दयाद्भुतम् ॥११०॥

यवनपतिरुवाच त्वामवेत्यास्मि धन्य-
स्तवचरणसरोजं धारयाम्येष मूर्धा[3] ॥

१. विभो हि माया—क॰
२. परस्पराभयं—क॰
३. मूर्धा—ग॰

उदयति जगदीशो मानसे त्वद्वचोभि-
र्मम समधिगतं च प्राचितं[1] ब्रह्मतत्त्वम् ॥१११॥

तव तापहरी वाणी यथा ग्रीष्मेऽमृतच्छटा ॥
भूयोऽपि पुण्ययशसो गृणाति[2] हि भवद्गुणान् ॥११२॥

ऊचे गुरुरतिप्रेष्ठा[3] कामिनां कामिनीकथा ॥
लुब्धानामर्थवार्ता[4] च भक्तानां भगवद्गुणाः ॥११३॥

वृथा प्रलापैरपयाति पुंसः
क्षणं क्षणं स्रोत इवायुरङ्ग ! ॥
मनो वचः कर्मभिरीश्वरस्य
प्रसादनं जन्मनि भूरिलाभः ॥११४॥

केनापि पुण्येन मनुष्यजन्म-
लब्धो[5] हरिर्येन न तोषितोऽभूत् ॥
उच्चाटने हा [6]करटस्य ते न
चिन्तामणिर्मूढतरेण मुक्तः ॥ ११५॥

शेषोऽभाषत मे तीक्ष्णां छुरिकां देहि नानक ! ॥
मया कृत्ते गले साध्वीं सिद्धिं समधिगच्छति ॥११६॥

नानकेन कथितं छुरिकैषा
बुद्धिरेव गुरुणा [7]कथिता सा ॥

---

१. प्यापितं–क०
२. गृणीहि–क०
३. प्रेष्टा–क०
४. मर्थवाता–च०
५. लब्धा–क०
६. हाटक–क०
७. घटिता–क०

संछिनत्ति भगकण्ठमकुण्ठ्य-
मोक्षरत्नमय लुण्ठति लोकः ॥११७॥

शेषेण भाषितमिदं मम संशयानां
विध्वंसनाय विधिना प्रतिपादितोऽसि ॥
केनैतदंधतमसं सकलापिधायि
दीपेन शाम्यति किलाकृतकेन विद्वन् ?॥ ११८॥

प्रोवाच [1]नानकगुरुर्गुरुतत्त्वमिस्तं
ताराशशाङ्कतपनैरपि नापनेयम् ॥
उन्मीलितेन तरसा गुरुवेदवाक्यै-
रध्यात्मदीपमहसा सहसा विनाश्यम् ॥११९॥

उत्थाय शेषः प्रणनाम पादौ
जगाद चेदं किमुदाहरेयम् ? ॥
त्वयि स्थितो वक्ति जगन्नियन्ता
त्वमेव साक्षादथवाऽखिलेशः ॥१२०॥

तपस्विना प्रोक्तमनाथविद्या
विधूतरोधः किल जीव एषः ॥
धर्मेण भक्त्या श्रवणादिभिश्च
गुरोर्गिरा ब्रह्मपदं प्रयाति ॥१२१॥

विराहिमेणोक्तमुपार्थितोऽस्मि
मार्गं त्वया [2]दर्शितमद्वितीयम्[3] ॥
धन्यो गुरुस्त्वं स्वगिरा कुरुष्व
विज्ञप्तिमीशस्य च देहि मह्यम् ॥१२२॥

---

१. गुरुगुरु–क०
२. दर्शित–क०
३. द्वितीया—क०

गुरुं नमस्कृत्य यमिर्जगाद
महामहिम्नो जगदीश्वरस्य ॥
स्तुतिं च विज्ञप्तिमगाधबोधो
रोधो यथाऽज्ञानकृतः प्रयाति ॥१२३॥

निगमास्तव नन्दिनो मता-
स्तव मायाभवचित्रकारिणी ॥
द्रुहिणादय एव किंकरा-
स्तव को वा परिमाति वैभवम् ॥१२४॥

न तवायुधमस्ति किञ्चन-
त्वमुपादानमपेक्षसे न च ॥
रुचिरं भवसद्म कुर्वतः
स्थपतेः शिल्पमलौकिकं तव ॥१२५॥

[1]श्रुतिशास्त्रवचोभिरुज्ज्वलं[1]–
र्विवदन्ते त्वयि वादिनो बुधाः ॥
इदमित्थमिति व्यवस्थितं
तव रूपं न तु वक्तुमीशते[2] ॥१२६॥

महिमा गहनोऽपि भासते[3]
तव भक्त्या विमलीकृते हृदि ॥
रसरञ्जित एव दृश्यते
मुखमादर्शतलेऽमले किल ॥१२७॥

---

1. १२६ श्लोक त १५४ पर्यन्तं पुन १५७ श्लोक [illegible] १८८ पर्यन्त नानकेन कृता भगवत्स्तुति । या च स्तुति श्रुत्वा वराहिमो बालश्च रुद्रादो जातो ।
१. ज्वलं –द० ।
२. मंहते–क० ।
३. भास्यते–क० ।

भुवि भारमुदारमाचरन्
असुरैस्तस्य निवर्हणाय च ॥
अवतारमनेकमावहन्
बहुलोलः स्वकृतेन खेलसि ॥१२८॥

कथमीशहिरण्यगर्भयो-
स्तव सूत्रस्य विराज एव च ॥
कथयन्ति कथामविक्रियां
[1]चितिमिच्छं [2]भगवन्तमक्रियम् ॥१२९॥

प्रभवन्ति भिदा उपाधिभि-
स्तव नानेति समादधत्यपि ॥
अनुपाधिमनञ्जन [3]खवद्-
गतमायं च वदन्ति सूरयः ॥१३०॥

गगनादिभवद्विलासतो
ऽभवदित्याहुरमन्दबुद्धयः ॥
न कदाचिदनीदृशं जगत्
प्रथयन्ति प्रथमे विपश्चितः ॥१३१॥

न चलन्ति तृणान्यपि ध्रुवं
भवदिच्छा[4] विरहाद् वदन्ति ये ॥
अपरायमुदीरयन्ति ते
किमु जीवस्य कृते [5]दुष्कर्मणि ॥१३२॥

---

१. चितिमिच्छन्—क० ।
२. भवत—क० ।
३. खवत् भवद्—क० ।
४. भवदिच्छा—क० ।
५. भर्मणि—क० ।

श्रवणादिभिरात्ममुक्तये
प्रयतन्ते श्रुतिशास्त्रतो यतः ॥
तत एव किलावसीयते
न च बन्धो न च मुक्तिरित्यपि ॥१३३॥

स्वबलेन विबुध्यते कथं ?
श्रुतिकान्तारविमोहितो मुहुः ॥
तव तत्त्वमयं जनो यदा[1]
सदयोदारदयो न बोधयेः ॥१३४॥

चितिरेव सती सुखात्मिका
न च जीवो न च विश्वविभ्रमः ॥
इति कामगवीमतिश्रव-
त्यमृतं येन पुनर्न शोचति[2] ॥१३५॥

मुरलीं रणयन् मनोरमं
वनमाली शिखिपिञ्छलाञ्छनः[3] ॥
नवनीरदकान्तिरित्यहो
मतिधारा भवसंज्वरापहा ॥१३६॥

सगुणं तव निर्गुणं वपुः
प्रमितं मोहमपोहितुं क्षमम् ॥
विकृताऽविकृतासिताऽसिता[4]
तनुते तृप्तिमनुत्तमां[5] जने ॥१३७॥

---

१. 'यदा' इति पाठः 'ख' इत्यत्र नास्ति ।
२. शोषिति–ख० ।
३. लांछनः–क० ।
४. सितासिता–क० ।
५. मनतमां–क० ।

[1]शिवसूर्यमरुद्विनायकान्
भवतां यच्छति [1]वाञ्छितं भवान् ॥
उडुचन्द्रहुताशविद्युत[2]-
स्तपनस्यैव विभान्ति तेजसा ॥१३८॥

कुरुषे किमु कृत्यमीप्सितं ?
तिमिकूर्मादिशरीरसंकटैः ॥
जगदीशजगच्छयोदयौ
भवतश्चेद् भवतः स्पृहावशात् ॥१३९॥

त्वयि बोधपयोनिधौ तते
भवगोलानि भवन्ति बुद्बुदाः[3] ॥
सुयशांसि लसन्ति सन्ततं
नव डिण्डीरचया इवाक्षया ॥१४०॥

श्रुतयः श्वसितानि ते विभो ?
हसितं शक्तिरियं विमोहिनी ॥
जगती विबुधैरतर्किता
तव लीला त्वमगोचरो गिराम् ॥१४१॥

भुवनत्रयपावनी धुनी
प्रथिता ते [4]पदपङ्कजोद्भवा ॥
तव नाम ततोऽपि पावनं
भक्तदुक्तं चरमेप्यनेहसि ॥१४२॥

---

I. भवव इति पाठः 'ख' इत्यत्र नास्ति ।
१. वाञ्छितं—क० ।
२. विद्युत्प—क० ।
३. विद्बुदा—क० ।
४. पद इति 'ख' इत्यत्र नास्ति ।

न तपांसि न धर्मसंचयो
न च भक्तिर्न च बोध [1]उद्धुरः ॥
तव नाम तथापि पापिनो
यमदूतानपसार्य [2] तारयेत् ॥१४३॥

शरणागतवत्सलो भवान्
शरणं त्वामहमागतोऽस्मि च ॥
न बिभेमि निजादतो गुरो-
रघराशेर्बहुजन्मसंचितात् ॥१४४॥

हृतचित्तममोघमायया
तव लीलामृगतावतुं गतम् ॥
अयि ! मुञ्च बधान मा विभो !
करुणाब्धे ! कृपणं कृपास्पदम् ॥१४५॥

निजकर्मफलं पचेलिमं
ननु भुञ्जानमवेत्य मां भवान् ॥
कृपणं कृपणेषु वत्सलो
यमहस्तान्न हरे ! हरिष्यसि ॥१४६॥

मुरलीं मधुरं निनादयन्
वनमाली शिखिपिच्छशेखरः ॥
चरमे श्वसितेऽवरोपिते [4]
निभृतस्य मनोविवत्स्यसि ॥१४७॥

---

१. दुद्धरः—क० ।
२. वार्य—क० ।
३. मधुरा—क०
४. रोपने—क०

परिपीडितमेकतो रुजा
यमदूतैरितरत्र भीषितम् ॥
कफकुण्ठितकण्ठमुद्धरेत्
क इवान्योऽनुजनं जनार्दनात् ॥१४८॥

सनकादिसुरर्षिसेवितं
सुरराजस्य जयाय जाग्रतम् ॥
श्रुतिशेखरगीतवैभवं
कमलाकान्तमनन्तमाश्रयम् ॥१४९॥

शरणं करुणाकरो हरि-
र्मम नान्यं कलयामि कञ्चन ॥
गरुडध्वजतो गतिः परा
मम नास्त्येव समस्तजन्मसु ॥१५०॥

नक्षत्रमालाममलां कृतां नानकयोगिना ॥
ये कण्ठे धारयिष्यन्ति तेषां श्रीरनपायिनी ॥१५१॥

अधिगत्य यतीशस्य कृतिमेतां विराहिमः ॥
पारसीकपदैः कृत्वा पपाठ स्वेश्वरं स्मरन् ॥१५२॥

पुनरूचे मुकुन्दस्य गुणाख्यानरतापसः ॥
भक्तानां हर्षजननाद् जनतापापविच्छिदः ॥१५३॥

तव शक्तिरकुण्ठितानिशं
त्वमशेषस्य भवस्य [1]कारकः ॥
अवसि प्रविलापयस्यमुं
न च दोषैः प्रयतो विलिप्यसे ॥१५४॥

---

१. कारक इति ख० पु० नास्ति ।

चतुरश्चतुराननादपि
त्वयि ये प्रेम न तन्वते जनाः ॥
नरके विकिरन्ति तान् भटा
गलसन्दानितलोहशृंखलान् ॥१५५॥

भयतस्तव वाति मारुतो
भयतो धावति भास्करोऽम्बरे ॥
दहते दहनो भयेन ते
न च मृत्युर्भयतः प्रमाद्यति ॥१५६॥

अभयं तव केवलं पदं
भयमन्यत्र तृणेऽपि वेधसि ॥
किमु नृत्यति कूर्दते जनो
यमदंष्ट्राविकटः समाश्रितः ॥१५७॥

मणिभिः कनकैरलङ्कृताः
सुमनश्चन्दनगन्धबन्धुराः ॥
क्षितिपा अपि मृत्युमर्दिता
कृमिविड्भस्म भवन्ति नेतरत् ॥१५८॥

घटिका विलसन्ति गोपिकाः
प्रहरो नृत्यति नन्दनन्दनः ॥
इति एष विमोहिता जना
बत जानन्ति न कृत्यमात्मनः ॥१५९॥

भ्रमणे तु भवन्ति सिद्धयो
यदि चक्राद्यपि सिद्धितामियात् ॥
प्रचरन्ति कचेऽङ्घ्रिधूलयो
निलयेषु प्रहसन्त्यमुं जनाः ॥१६०॥

अविद्याहितवानयं जनः
कति नामेह[1] जनूंषि नो वृथा ॥
धनिनो स्मयन् वदन् कथां
विविधा नृत्यविनोदतत्पर ॥१६१॥

यवनानि खनन्ति भूतले
मृतकं हन्त! दहन्ति चेतरे ॥
किमु यान्ति कृतार्थतामतो
जगदीशप्रणयं विना जनाः ॥१६२॥

यदिदं भुवि जृम्भितं[2] भवे
सुरपूजा निजधर्म सत्तपः ॥
रमते न ततो रमापतिः
स हि सत्यप्रणयप्रियः सदा ॥१६३॥

अहमहमिति धावमान एव
श्रममखिलं विफलं तनोति जन्तुः ॥
अहमहमिति दीर्घरोगरुग्णो
गुरुभिषजं समुपाश्रयेत शान्त्यै ॥१६४॥

मिताहारस्त्यक्त्वा विषयविषपानव्यसनितां
समः शत्रौ मित्रे गुरुनिगमवाक्यव्यवसितः ॥
[3]शनैर्भुञ्जन् चित्रं भगवति सदा सत्यमहिम-
न्यसारात् संसारादुपरतमतिर्नन्दति यतिः ॥१६५॥

शरीरिणो येन चतुर्विधाः कृता
धृतामतिस्तेषु पुनर्यथोचिता ॥

---

१. नामाह—क० ।
२. जृम्भित ।
३. शनैर्भुञ्ज—ख० ।

न विस्मरत्यन्नजलादिदापने
तमेव विस्मृत्य सुखं क्व प्राप्यसे ॥१६६॥

अधीत्य [1]यच्छकटमपूरिपुस्तकै-
रयद्यथा क्षितिरवगाहिताऽखिला ॥
विडम्बितं भसितजटादिभिर्वपु-
र्वृथैव तत्परिचयमन्तरा हरिः ॥१६७॥

[2]देवेश यस्य दयसे तस्य त्वयास्ति संभ्रमः ॥
तस्य त्वयि दृढा भक्तिः स वैकुण्ठे महीयते ॥१६८॥

तिलकेन किमुज्ज्वलेन मूर्द्ध-
न्युपवीतेन कुलेन निर्मलेन ॥
नरकार्णवतारणस्य भक्त्या
यदि [3]सम्मार्ज्य सितीकृतं न चेतः ॥१६९॥

अखिलमिति यतिर्मुकुन्दभक्त्या
प्रणिगदितं विधृतं विराहिमेण ॥
चरणयुगमपि प्रयातुमिच्छोः
सुजनवियोगविषण्णमानसेन ॥१७०॥

गतं तमामन्त्र्य यतिप्रधान-
मध्वन्यवोचं चरणप्रपन्नः ॥
*इतः परं गच्छसि कुत्र योगिन् !*
पृच्छामि किञ्चित् तदुदाहरस्व ॥१७१॥

---

१. यछ–ख० ।
२. देवेशस्य–क० ।
३. संमार्ज्य–ख० ।

श्रोतुर्भवत्स्वैरकथा विलीना
दीना भवे शासनया मतिर्मे ॥
विश्वं विभो नश्वरमीक्षमाणं
न हर्षशोकौ स्पृशतः क्षणं माम् ॥१७२॥

निसरकमवदद् विमोहकारी
कचिदज्ञानगभीरिमा गतो मे ॥
अखिलमुपलभे विभुं विशुद्धं
कमपि महेशमशेषशक्तिसिन्धुम् ॥१७३॥

त्वमहमिति भिदा विदारिता मे
तव वचनैर्निशितैरलं विशद्भिः ॥
मम हृदयमहोपल प्रविष्टा
वदवगवं परमात्मवस्त्वमेकम् ॥१७४॥

तान्येव शास्त्राणि बुधाः पठन्ति
तैरेव यत्नैर्यतयो यतन्ते ॥
ज्ञानादयो यत् कचिदेव दृष्टाः
पृष्टस्ततस्त्वं कथयस्व हेतुम् ॥१७५॥

वदन्ति कचिद् वसुदेवसूनुं
सर्वेश्वरं केचन राममेव ॥
अन्ये शिवं केऽपि हिरण्यगर्भं
क उत्तमस्तेषु च कोऽखिलेशः ॥१७६॥

इत्याकर्ण्य मम प्रश्नानानुपूर्व्यादिगोचरम् ॥
जगाद योगी मधुरं करुणावरुणालयः ॥१७७॥

तलवण्डीं जन्मभूमिं बालसिन्धो ! मजाम्यतः ॥
विद्वानप्यखिलं तत्त्वं शुश्रूषुर्मन्मुखाच्छृणु ॥१७८॥

अबोधोरुकपाटस्योद्घाटनी कुञ्चिका मतिः ॥
लभ्यते गुरुणा दत्ता लभ्यते न विना ततः ॥१७९॥

मूलं महद् ब्रह्म जगल्लतायाः
पुष्पैरनेकैरुपशोभितायाः ॥
दधाति दृश्यत्वमदृश्यतां तद्
लीलागृहीताद्भुतसर्वशक्तिः ॥१८०॥

ब्रह्मा विष्णुर्महेशश्च गुणैस्त्रिभिरुपाधिभिः ॥
सृष्टौ स्थितौ च प्रलये कारणं कथ्यते बुधैः ॥१८१॥

उपासकानां रुचयो विचित्रा-
स्ततो निजोपास्यमुशन्ति मुख्यम् ॥
अन्यांस्ततो न्यूनतराननन्य-
भक्ता यदि श्लाघ्यमिदं न निन्द्यम् ॥१८२॥

नानाभिधः सर्वजगन्निवासः
सर्वेश्वरः सर्वसुरेषु चैकः ॥
अन्तर्बहिर्यच्छति वाञ्छितं सः
स्थितः किलाकाश इवावकाशम् ॥१८३॥

लीला यस्य जगज्जनिस्थितिविलयः तस्येपितुः का स्तुतिः ?
पौलस्त्यादिवधेन कश्च महिमा ? नूनो मयाम्नायताम् ॥
रामं कृष्णमसुं नृसिंहमथवा श्रीपार्वतीवल्लभं
ब्रह्माणं भजतो जनस्य न चतुर्वाधेत दुःखाकरः ॥१८४॥

मतमाश्रित्य कलहं कुर्वते भेददर्शिनः ॥
अनन्यभक्तास्ते स्वेशं सर्वतो भावयन्ति ये ॥१८५॥

अहमिति यतिभर्तुर्भारतीमाकलय्य
परममुदमविन्दं वाचमेतामवोचम् ॥

त्वमसि गतमतीनां ज्ञानदातावतीर्णो
मम सफलमकार्षी जन्म योगीश ! सत्यम् ॥१८६॥

नानकेन कथितं त्वयि पूर्णा
श्रीधरस्य करुणाकृतबुद्धे ! ॥
भक्तकल्पतरुमेनमनेनं-
श्चिन्तयन्ति गतचिन्त ! सुखी स्याः ॥१८७॥

अहञ्च यतिराजश्च तलवण्डीमुपागतौ ॥
पितृव्यस्तस्य तं लालः समागम्येदमब्रवीत् ॥१८८॥

भ्राता मृतः सम्प्रति हन्त कालः
प्रजावती चापि तयोः प्रजात्वम् ॥
ममासि याहुर्वस विश्ववन्द्य !
नन्दामि नित्यं सहवासतस्ते ॥१८९॥

एवं वदन्तं सहसा रुदन्त-
माश्वासयामास यतीश्वरस्तम् ॥
पितृव्यमृत्योर्वशवर्तिविश्व-
मात्रक्षणो हन्त ! पिपीलिकान्वम् ॥१९०॥

यद्वैतमेतत्सकलं वियुक्तं
कालं कियन्तं स्मि सम्प्रयुक्तम् ॥
आद्यन्तयोर्यन्नियमादशक्य-
प्रतिक्रियं तत्परिदेवना का ॥१९१॥

लालमेवं समाश्वास्य कालं पञ्चदशाहकम् ॥
तत्र स्थितो मया सार्धं पुनरगात् ॥ पत्तनम् ॥१९२ ॥

सुलक्षणी मामवदत् कदाचि-
दस्मानियोगाद् भवितव्यतायाः ॥

निजं गुरुं बाल विमुच्य कञ्चित्
कालं ममाप्यस्तु स सन्निधिस्थः ॥१९३॥

प्रयाणकालेषु यदप्यवोचं
वियोगवाष्पाङ्कितलोचनोऽहम् ॥
अर्थे कृते देहमहासिपुः त्वं
रघूत्तमाद्या अपि वीतमोहाः ॥१९४॥

त्वयि प्रयाते तव कः पदेऽस्मिन् ?
स्थाता भवच्छिष्यगणार्चनीयः ॥
सशंस योगी लहनान्यनामा
स्थाता पदे मेऽङ्गदनामधेयः ॥१९५॥

फेरोः क्षत्रियवर्यस्य पुत्रो निर्विण्णमानसः ॥
मामुपेष्यति मत्तुल्यः स गुरुत्वं गमिष्यति ॥१९६॥

पुनर्मयोक्तं श्रीचन्द्रः कथं वर्तिष्यते गुरो ॥
पदं न कथमारोहेदौरसस्तनयस्तव ॥१९७॥

योगी जगाद मम वंशभवो भवेऽस्मिन्
पूज्यो भविष्यति न कश्चन संशयोऽत्र ॥
जन्मान्तरश्रमसमर्जितसाधनस्य
दैवं पदस्थितिकरं परमङ्गदस्य ॥१९८॥

ततो नानकमामन्त्र्य तलवण्डीमहं गतः ॥
कालान् कतिपयान् सिद्धं शुश्रुवांस्त्वमुपस्थितः ॥१९९॥

अन्यूनो नानकात् त्वं हि तेनैव परिकीर्तितः ॥
तव तोषाय निखिला कथेयं कथिता मया ॥२००॥

एतावदेव जानामि स्वदृग्भ्यां यद् विलोकितम् ॥
नान्यदाकलये कालान् ततो यद् परतोऽभवत् ॥२०१॥

शुश्रूपुरस्मि भवतो गुरुनानकेन
सङ्गो यथाभवदथांगद इत्युवाच ॥
सन्दर्शितो मम गुरुः [1]कथयानयाङ्ग
गङ्गा पुनाति खलु सज्जनसङ्गमश्च ॥२०२॥

ज्वालां विलोकयितुकाम उपागतोऽहं
श्रुत्वा विरक्तपरमन्वसरं यतीन्द्रम् ॥
पृष्टोऽम्यघां यमिनन्वयनामनी स्वे
शङ्काकलङ्कमथ शोधितवान् गुरुर्मे ॥२०३॥

विसृष्टोऽपि यतीशेन तत्सेवायै स्थितोऽस्म्यहम् ॥
प्रासदन्मयि योगीन्द्रः सन्तो दीने दयालवः ॥२०४॥

प्रक्षाल्य घासमनयं[2] गुरुसोऽमेत्यै
[3]तद्विन्दुभिर्मम कलङ्कितमुत्तरीयम् ॥
न क्षत्रियोऽर्हति विडम्बनमित्यवोच-
दम्गागुरुर्घुसृणसेचनमित्युवाच ॥२०५॥

सुलक्षणी द्वौ तनयौ पुरस्ता-
दानीय भर्तारमिदं जगाद ॥
सतोः स्वसून्वोरितरस्य सूनुः
कुतस्त्वयाधिक्रियते पदे स्वे ? ॥२०६॥

आस्वच्छयोधनलवसवृतः पुरस्तात्
तं नानकोऽवददन्तु भवन्त एतत् ॥
शिष्याः सुतौ च वचनं न हि तस्य चक्रु-
रूचे स मां त्वमिदमङ्गद भक्षयेति ॥२०७॥

---

१ यथाङ्ग—ख०
२. माघ—च०
३. विन्दभिः—ख०

वाढं गुरो इति वदन्नपसार्य वस्त्रं
तां लप्सिकाममृततुल्यरसामथाश्नाम् ॥
पत्नीं निजां गुरुरवोचदिमां स्वपुत्रा-
वेपोऽन्यपुत्र इति कुत्र भवेत् प्रसादः ? ॥२०८॥

व्यूढ पश्य रजनीप्रहरोऽस्ति
नानको गुरुरिति कश्चिदूचे ? ॥
अर्धरात्र इति तेन तदोक्ते
माप्रुवाच गुरुरङ्गद ? पश्य ॥२०९॥

पश्यन्निशीथमहमेतदशंक्षमेनं
निद्राकुलस्य मम भाति निशीथ एषः ॥
शेषः परं प्रहर एव विभो रजन्या
वाचा ममेति च तुतोष गुरुर्विशेषात् ॥२१०॥

व्यूढमूचे नमस्येत प्रसन्नेशं वियत्सरः ॥
पश्यत्सु सर्वशिष्येषु प्रणनाम स मां ततः । २११॥

बालोऽङ्गदस्य गुरुवत्सलतानिदाना-
न्याकर्ण्य कर्णरुचिराणि चिरादवोचत् ॥
त्वं नानकादनितरोऽसि न संशयोऽत्र
वृद्धस्य मे वद कदा भविताथ मृत्युः ? ॥२१२॥

नानकस्य विरहेण विषण्णं
वृद्धमेनमिदमङ्गद ऊचे ॥
द्वौ तवायुरपरौ खलु मासौ
मा ममीपमपहास्यसि मेऽङ्ग ? ॥२१३॥

द्वौ मासौ संस्थितस्तत्र संस्थितस्तदनन्तरम् ॥
वालोऽङ्गदेन पितृवद् गुरुभक्त्याथ संस्कृतः ॥२१४॥

श्रीनानकस्तु यवनान् किमुतार्यवर्या-
नाम्याय तत्त्वमदुरूहमिहोद्धार ॥
पाखण्डिनश्च परिभूय मतं स्वकीय-
मद्वैतसारसरसस्थिरतां निनाय ॥२१५॥

राजानो मतमेतदीयमभजन्प्रीत्या धराक्षिण-
श्चातुर्वर्ण्यमयत्नतो मतमिदं लब्ध्वा सुबोधेश्वरम् ॥
यत् सर्वस्य सुबोधमस्त्विति कृतं गीतं च दैन्यैः पदै-
स्तन्मन्त्रत्वमनोघभूत्तदलने दुर्वारवीर्यन्दधौ ॥२१६॥

तदेषु सिन्धोर्धरणीधरेषु
ग्रामेषु खेटेषु पुरेषु लोकः ॥
ननाम यो नानकनाम गृह्णन्
न नाम तस्य प्रतिकूलमासीत् ? ॥२१७॥

सत्योपयाचनतया प्रथितः पृथिव्यां
श्रीनानको नरवपुः सुर एव साक्षात् ॥
स्मर्तारमुद्धरति स स्म विपत्तिजालाद्
व्यालादुपेत्य पतगेन इव प्रपन्नम् ॥२१८॥

अतीतानागतज्ञानात् निग्रहानुग्रहक्षमः ॥
नानकस्य मते तिष्ठन् सिद्धो भूयादभूज्जनः ॥२१९॥

व्यासो यथा वेदमतीव दीर्घं
विभक्तवान् मन्दमतीनुदीक्ष्य ॥
अद्वैततत्त्वं गहनं वचांसि-
स्तथा सुबोध विदधे यतीन्द्रः ॥२२०॥

छाया न पीलोः परिशुचिमेति
वृत्तं तथा मिष्टमरिष्टसस्यम् ॥

अश्वत्थपत्रेषु करा्कृतिश्च
कृतिः क्षितौ सम्प्रति नानकस्य ॥२२१॥

सिद्धैर्भोजनमर्थितं फलमिदं भुंक्त्वेत्यदान्नानक-
स्तन्माधुर्यमगाच्चरुनगमयन् योगीश्वराः शक्तितः ॥
अश्वत्थस्तु करेण तत्र यतिना संस्पृश्य संस्थापितो
यस्यामेतदकारि नानकमता सा विश्रुतास्ते पुरी ॥२२२॥

सिद्धाश्च भक्ता बहवो बभूवुः
को नाम वैकुण्ठमगात् सदेहः ? ॥
सदेहमस्मात्· सुजनैर्नमस्यो
विश्वम्भरस्यावतरो यतीन्द्रः ॥२२३॥

कलिना कवलीक्रियेत तूर्णं
जगती पापमयानुदीक्ष्य लोकान् ॥
यदि नानकयोगिना न युक्त्या
सुयशः श्रीरमणस्य गायितं स्यात् ॥२२४॥

वैराग्यं श्रवणादुदेति तदनु प्रेमा रमावल्लभे
ज्ञानं तत्परिशीलनात् कतिपयैर्वर्षैरजस्रोज्वलम् ॥
वाणी नानकतापसस्य विमला तापत्रयोन्मूलिनी
तस्मात् केन न कर्णदुःखदलनी श्रूयेत तच्छ्रद्धया ? ॥२२५॥

अवसितसकलार्थो भक्तिवैराग्यबोधान्
प्रतिजनमविरोधान्नानको वीक्ष्य तुष्टः ॥
अथ रहसि सुषुम्णा मार्गमानीय योगा-
द्विदितसकलतत्त्वः प्राणमाशूत्ससर्ज ॥२२६॥

शंखध्वनिर्नभसि सर्वजनैः श्रुतश्च
पुष्पाणि लब्धमधुपानि च खाच्च्युतानि

श्रीर्लक्षिता धरणिमण्डलमाशु हित्वा
विद्युल्लतेव गगनाङ्गणवजिहाना ॥२२७॥

सकुटुम्बः शिष्यवर्गो विषसाद तदौत्सुकः ॥
श्रीचन्द्रस्तु समागत्य कुतश्चिदिदमब्रवीत् ॥२२८॥

योगीन्द्र ! नानकपितर्यदि सत्यशक्ति-
स्त्वं मे तदा भव मुहूर्तमुपेतजीवः ॥
बालं हि तान्यनुनिशम्य कुतः प्रयासि ?
निष्कारणाकरणता तव शोभते किम् ? ॥२२९॥

उत्थाय नानकयतिस्तु ततः सचेताः
पुत्रं जगाद जगदाहितपुण्यकीर्तिः ॥
ब्रूया द्विमासमथ वत्स ! यदि द्विवर्षं
तिष्ठेयमत्र तु तदा वशवर्तिमृत्युः ॥२३०॥

दृश्यं समस्तमसदित्यवधेहि वत्स !
स्वप्नोपमः सुतसुहृत्पितृमातृसङ्गः ॥
शोको न कोऽपि वितथस्य कृते विधेयः ?
कर्तारमस्य जगतः शरणं प्रयाहि ॥२३१॥

वध्यस्व मा त्वमिह संसृतिवागुरायां
भ्रातुर्भविष्यति ततस्तव वशतन्तुः ॥
अस्मत्कुले धृतजनुर्जनतासु पूजां
लब्धा स्थिता सुभगसागरमेखलायाम् ॥२३२॥

एवमादिमुदाहृत्य भारतीं सुतमंनिधौ ॥
[1]निपपात तनुस्तस्य मुहूर्तानन्तरं क्षितौ ॥२३३॥

---

1. गुरोर्नानकस्य देहत्याग ।

नानको मृत इति प्रसृतोऽभूद्
दिक्षु तत्क्षणमथो जनवादः ॥
आगताश्च यवना द्रुतमार्या-
स्तस्थुरस्य कुणपं परिवार्य ॥२३४॥

धरायां निखनिष्याम इत्यूचुर्यवना हठात् ॥
आर्या धक्ष्याम इत्यूचुर्दारुणः कलहोऽभवत् ॥२३५॥

अन्यतो यतिपतिः सशरीरो
म्लेच्छमार्यमपि लोकमपृच्छत् ॥
आचरन्ति कलहं किमथोचु-
र्दाहनं निखननं कलिहेतुः ॥२३६॥

अर्धं विभाद्य यवना निखनन्तु भूमा-
वर्धं दहन्तु च ततः परिशेषमार्याः ॥
न्यायं प्रदर्श्य कलहं विनिवार्य चेत्थ-
मन्तर्दधौ सपदि नानकयोगिवर्यः ॥२३७॥

वस्त्रावृतं तस्य वपुर्विभक्तु-
मेते गता वस्त्रमुदस्य तत्र ॥
नैक्षन्त देहं वसनं विभज्य
क्रियां स्वयोग्यामुभये वितेनुः ॥२३८॥

एवंविधानि चरितानि महाद्भुतानि
नाना चकार किल नानकयोगिवर्यः ॥
शृण्वन्ति तानि कथयन्ति च येऽनुरक्ता
विन्दन्त्यमी इह परत्र च मङ्गलानि ॥२३९॥

तेषां स्वभक्तसुयशः स्वयशःसमेत-
मुद्गायतामतुलभावपरिप्लुतानाम् ॥

श्रीशः प्रसीदति ददाति च वाञ्छितानि
दाता प्रसह्य पुरुषार्थचतुष्टयस्य ॥२४०॥
श्रीचन्द्रस्तपसि मनोदधे निरक्त
आखेटे रसिकतरोऽभवद् दवीयान् ॥
आरूढस्तुरगमतीव वेगवन्तं
श्येनेन प्रतिवनमण्डजान् जहार ॥२४१॥
संगृह्णाति च मांसानि
पक्षावालुच्य पक्षिणाम् ॥
एकदा भ्रातरं भ्राता
ज्यायानिदमुदाहरत् ॥२४२॥
नानकस्य सुतोऽसीति किमनर्थः प्रतन्यते ? ॥
मां स खादयिता प्रेत्येत्याहुर्मांसस्य मांसताम् ॥२४३॥
लक्ष्मीचन्द्र उवाचेदं वेद कर्मगतिं नु कः ? ॥
अहं खादितपूर्वः स्यामेतैर्जन्मान्तरे यदि ॥२४४॥
अहं नृशंसोऽस्मि च पूर्वजस्य
भ्रातुर्न वर्ते किल शासने च ॥
प्रतन्यते निष्कृतिरद्य तस्य
द्रयस्य पश्यन्तु समस्तलोकाः ॥२४५॥
इत्युक्त्वा हयमारोप्य भार्यां पुत्रं च बालकं ॥
स्वयमारुह्य गगनमुज्जगाम जनादसौ ॥२४६॥
श्रीचन्द्रस्तदिदं दृष्ट्वा वेगाद्गगनमागतः ॥
बालकं तं करे कर्षन्नानिनाय वसुन्धराम् ॥२४७॥
स एव धर्मचन्द्राख्यो नप्ता नानकयोगिनः ॥
सन्तानतन्तुरमवद्धेदिनां वंशवर्धनः ॥२४८॥
तस्य माणिक्यचन्द्रोऽभूत् पुत्रो[1] मिहिरचन्द्रकः ॥
व्योमेव सूर्यचन्द्राभ्यामुभाभ्यां कुलमद्युतत् ॥२४९॥

---

१. द्युवो-ग०

माणिक्यचन्द्रस्य सुतोऽपहार-
चन्द्रोऽपरः सूनुरनारचन्द्रः ॥
हितारचन्द्रोऽपि बभूव तारा-
चन्द्रस्तथैवोदयचन्द्रवर्मा ॥२५०॥

जगच्चन्द्रश्च मिहिरचन्द्राद्रूपनारायणः ॥
महीपतिः सुतो यज्ञेऽमरचन्द्रादयस्तथा ॥२५१॥

वंशो बभूव विततो महनीयकीर्ते-
रेवं प्रभूतमहिमा भुवि नानकस्य ॥
अस्मिन् जितेन्द्रियजयाः परमार्थनिष्ठा
देवद्विजश्रुतिपराः पुरुषा बभूवुः ॥२५२॥

तापत्रयस्य विगमो
नानकचन्द्रोदयाद्भविता ॥
तमिमं श्रयन्तु सुजना
वाञ्छन्तो नित्यकल्याणम् ॥२५३॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
विश्वविजयो नामैकोनविंशःप्रस्तावः ।



नानकवंशावली

शिवराम.
|
कालः
|
नानक
|
श्रीचन्द्र — लक्ष्मीचन्द्र
|
धर्मचन्द्र
|
मणिक्यचन्द्र — मिहिरचन्द्र

(मणिक्यचन्द्र:) अपहारचन्द्र, अनारचन्द्र, हितारचन्द्र, ताराचन्द्र, उदयचन्द्र, जगच्चन्द्र,

(मिहिरचन्द्र:) रूपनारायण. अमरचन्द्र इत्यादयः

## विंशः प्रस्तावः

ज्ञानाम्बुधिर्वहति शुद्धिमलं तमांसि
नश्यन्ति तापनिचयोऽप्यपयाति यस्याः ॥
राकासुधाकरविलासविदग्धलीला
सा भारती मम मनस्युदयं दधातु ॥ १ ॥

[1]जेवारीणां निर्जितारातिषट्कं
ज्ञात्वा ब्रह्म ज्ञानदातारमेतत् ॥
भूमेर्भर्ता भागमल्लाभिधानो
गङ्गारामं तापसं पृच्छति स्म ॥ २ ॥

आकर्णिता यतिवरस्य कथा समग्रा
बालेन याति गदिता गुरवेऽङ्गदाय ॥
शुश्रूषुरस्म्यथ कथं गुरवोऽङ्गदाद्याः
सिंहासनं समगमम् गुरुनानकस्य ॥ ३ ॥

गङ्गारामस्तमूचे गुरुशरणयतेर्द्वारिकादासनाम्नो
वैशानामीश्वरस्य प्रथममकथयं तां कथां प्रश्नतोऽहम् ॥
तत्रासीद् देवराजः[2] परमकवयिता धारणाशक्तिशाली
स त्वां वक्ष्यत्यशेषं यतिपतिचरितं चारु संस्कृत्य वक्ता ॥ ४ ॥

---

1. अत्र प्रथमान्तं पदं भागमल्लस्य, द्वितीयान्तं गङ्गारामस्य विशेषणम् । इत्थं भागमल्लो गङ्गाराममपृच्छदित्यन्वयः ।
2. भानचन्द्रोदयस्य रचयितुः पं० देवराजस्य विषये केवलमत्र श्लोके ग्रन्थादिश्लोके ग्रन्थान्तश्लोके च स्वल्पपरिचयः प्राप्यते ।

१. नियपो—क०

अथ देवराजकविना कथितं
कथिताङ्गदस्य [1]पदलाभकथा ॥
अधुना शृणु क्षितिपतेऽत्रहितः
पङ्गुरस्य सौस्थितिमधत्त कृती ॥ ५ ॥

अङ्गदं कुहकं त्यक्त्वा शिष्या भवत मे समे ॥
इति प्रव्रजितस्तत्र कश्चित्[2] तचेजनं जनम् ॥ ६ ॥

सिद्धाभासो द्रोहमस्य व्यतानी-
दीशेच्छातोऽत्यग्रहोऽभूच्च घोरः ॥
तत्रस्थेभ्यः सोऽवदद्दृष्टिविघ्नः
साक्षाद् ग्रामादङ्गदोऽयं विवास्यः ॥ ७ ॥

इदं वदत्सु शिष्येषु हसन्नगददङ्गदः ॥
सिद्धोऽयं कृष्यते यत्र वृष्टिस्तत्र भवेद् ध्रुवम् ॥ ८ ॥

लोकस्वार्थपरस्तं च चकर्ष चरणे धृतम् ॥
विनोदिनेव देवेन वृष्टिश्च बृहती कृता ॥ ९ ॥

कश्चित्तस्य करं चकर्ष चरणं कश्चित्परः कन्धरा-
मन्योऽभ्येत्य जटां कटिस्थमपरः सूत्रं परः श्मश्रु च ॥
आकृष्टः स च सीम्नि सीम्नि मरणावस्थामगाद् दुःस्थितः
सद्योऽनर्थमतर्कितं वितनुते साधोर्विरोधः किल ॥ १० ॥

कालो महानङ्गदयोगिनोऽगात्
तपस्यतः सर्वहितस्य तस्य ॥

---

१. पदलाभ–क०
२. द् चेजन–क०

त सेवमानोऽमरदासनामा
नामापि न स्वीयसुखस्य दध्रे ॥ ११ ॥

जलेन पूर्णं कलश गृहीत्वा
चलन्नलं गाढतमे तमिस्रे ॥
गर्ते कुविन्दस्य स तत्र विन्दन्
घ्रणं क्षणं संस्थित उत्थितोऽभूत् ॥ १२ ॥

कोऽयं[1] क्षितौ पतित इत्यवदत् कुविन्दो
निःस्थानकोऽमरक इत्यवदत् कुविन्दी[2] ॥
तं चागतं गुरुरवक्स्मि तन्तुवायी
त्वां वक्ति भो न किमपीति स मागमन्लः[3] १ ॥ १३ ॥

तस्याङ्गदः परमशीलवशात् प्रसन्न
ऊचे पदे मम निषीद[4] समस्तवन्द्ये ॥
त्वां तन्तुवायवनिता वदति स्म[5] मूढा
निःस्थानकं मन जनस्य समाश्रयस्त्वम् ॥ १४ ॥

आरोप्य तं स्वस्य पदेऽङ्गदोऽगा-
द्यतिं यतीशैरभिलष्यमाणम्[6] ॥
शिष्यैरशेषैरभिनस्यमान
श्चिरं चकाशेऽमरदासनामा ॥ १५ ॥

अभ्यागतानामातिथ्ये लब्धद्रव्यव्ययोऽभवत् ॥
[7]अश्वस्तनिकता तस्य जनेषु प्रथिताऽभवत् ॥ १६ ॥

---

१. कोप–क०
२. स्ववदी–क०
३. चमाया–क०
४. प्रदे–क०
५. मुग्धा–क०
६. वचमाण–क०
७. आभ्यन्त–क०

भानी कन्या बभूवास्य भानीव द्युतिभाजनम् ॥
अस्यै वरं प्रपश्येति स उपाध्यायमादिशत् ॥ १७ ॥

पप्रच्छ निर्णीतवरं द्विजं स
कीदृक्षमैक्षिष्ट वरं भवान् भोः ? ॥
स रामदासेन सदृक्षमैक्षे
वरं जगादेति वरामरस्तम् ॥ १८ ॥

भाण्डागारिक एकोऽस्य रामदासाभिधोऽभवत् ॥
सुकृती सुन्दरश्चासौ शीलवान् साधुसम्मतः ॥ १९ ॥

पृच्छन्तु रामदासस्य जातिं जातिविचक्षणाः ॥
अस्यै कन्यामहं दास्येऽमरदास इदं जगौ ॥ २० ॥

स पृष्टस्तैरहं सोऽऽपि क्षत्रियोऽस्मीत्यभाषत ॥
विवाहविधिना भानीं कन्यां तस्मै ददौ च सः ॥ २१ ॥

प्रसादितश्च सुचिरं दम्पत्योर्वरिवस्यया ॥
जामात्रे रामदासाय ददौ पदमपि स्वकम् ॥ २२ ॥

जायापती चक्रतुरस्य सेवां
तथापि माहात्म्यमुदस्य दूरात् ॥
वरं वृणीयामिति स प्रसन्नः
कदाचिदूचेऽमरदासनामा ॥ २३ ॥

भान्या प्रोक्तमियं हि वेदिपदवी प्राप्तां गतं तेदृणं
तस्माद्भ्रान्त्यमगादियञ्च[1] भवता दत्ताधुना सोढिने ॥
सोढिभ्यो न परं व्रजातु सततं तिष्ठन्ममैवान्वये
याचातो वरमेतमेव न परं देहि प्रसन्नोऽसि चेत् ॥ २४ ॥

१. पच्च–क०

अमरदास उवाच न सेवया
विरहितां[1]पपदं विसृजेदिदम् ॥
त्वमिह याचसि चेत् कुल एव ते
भवतु तत्सुखिनो न भविष्यथ ॥ २५ ॥

ततो रामदासो गृहीत्वा गुरुत्वं
गतो [2]मद्रदेशं विशेषेण शिष्यैः ॥
समासेव्यमानो विमानो मनस्वी
यशस्वी न चस्वीकृतो ज्ञानमोहः ॥ २६ ॥

नयनपथमुपेते सर्वपापप्रणाशे
वितरति सकलार्थान् स्नानमात्रेण सद्यः ॥
कतिपयदिवसानां सेवया मोक्षदायि-
न्यमृतसरसि तीर्थे वासमेप व्यधत्त ॥ २७ ॥

तत्र स्थितो निगमगीतमगायदीशं
ज्ञानोपदेशमकरोदधिकारिणे च ॥
प्रारब्धमक्षिपदसौगतरागरोषो
भुत्यो यथैव दिनसक्षयमीक्षमाणः ॥ २८ ॥

शिष्याः सर्वे सममनन् हरिकीर्तनतत्पराः ॥
ध्वनिना तेन संदृष्टा हृष्टाः पुष्टाः सुमेधसः ॥ २९ ॥

वरैरभीष्टैरभिनन्द्य शिष्या-
नुवाच काले गुरुरामदासः ॥
परत्र गन्तास्मि निशोकमोहा
हरिं भवन्तः सततं भजन्तु ॥ ३० ॥

---

१. ताप–क०

२. भद्र–ख०

यामिन्याश्चरमे यामे स्नात्वाऽमृतसरोजलैः ॥
योगेन श्वासमाकृष्य रामदासो हरिं गतः ॥ ३१ ॥

विपाशायास्तटे तस्य पुत्रः संस्कारमाचरत् ॥
ज्ञानिनोऽपि क्रिया कार्या कर्तुः श्रेयस्करी यतः ॥ ३२ ॥

तस्याभूवंस्त्रयः पुत्राः सुत्रामसमतेजसः ॥
अतन्द्रः पृथिवीचन्द्रो महादेवोऽर्जुनस्तथा ॥ ३३ ॥

शिष्याः सर्वे विमनसः पुत्रान् बुद्धिमतोऽब्रुवन् ॥
कोऽध्यास्तां रामदासस्य गुरोर्युष्माकमासनम् ॥ ३४ ॥

उवाच पृथिवीचन्द्रो महादेवश्च सन्मतिः ॥
गुरुत्वमर्जुनायैतद् दत्तं पूर्वं महात्मना ॥ ३५ ॥

एकदा स किलोवाच तनयो मेऽर्जुनाभिधः ॥
त्रैलोक्यवर्तिवस्तूनां स वै माहात्म्यमर्हति ॥ ३६ ॥

ततः शिष्याः साधवश्च ब्राह्मणाश्च तपस्विनः ॥
गुरुत्वतिलकं तस्य चक्रुरुत्सवपूर्वकम् ॥ ३७ ॥

अमृतसरसि पन्थो बन्धुरस्तेन क्लृप्तो
[1]व्यरचि च पुरुगीतैर्ग्रन्थ उत्कृष्टतत्त्वः ॥
पुरमपि कृतमासीद्रामदासस्य नाम्ना
दिशि दिशि च विकीर्णं[2] कुन्दशुभ्रं यशः स्वम् ॥ ३८ ॥

लहौराभिधं सपुरं जगाम
तत्र स्थितः क्षत्रियचन्द्रलालः ॥
स भूमिभर्तुः सकलाधिकारी
अद्योगिरं म्लेच्छनृपं जगाद ॥ ३९ ॥

१. मरचि—क०
२. विदीर्णं—क०

इममर्जुनमागतं वधान
प्रथितं शिष्यगणाद्धनं गृहीत्वा ॥
स उवाच निरागसोऽस्य साधोः
किमकाण्डे वद बन्धनं विदध्याम् ॥४०॥

चन्द्रलालस्तमब्रूत बन्धीयामहमेव तम् ॥
लक्षन्दायं च ते दद्यां त्वं तूष्णीमत्र तिष्ठ चेत् ॥४१॥

तथेति तं यवनपतिर्जगाद स
प्रलोभितः परिहृतधर्मपद्धतिः ॥
धराधिपा विगतविवेकबुद्धयो
वसुप्रिया विदधति किं न पातकम् ॥ ४२ ॥

आहूय सादरममुं स तु [1]चन्द्रलालो
गेहे निजेऽथ निजगाद गुरुं जगत्याः ॥
कन्या ममास्ति तनयेन निजेन तस्याः
पाणिग्रहं त्वमुररीकुरु भूर्युदर्की ॥ ४३ ॥

अस्वीकुर्वन्तमेनं तु [2]सबन्धावबेष्टितम् ॥
मन्यन्ते गौरवं कस्य प्रभुत्वमदमोहिताः ॥ ४४ ॥

अर्जुनोऽब्रूत गोविन्दबालं शिष्या भजन्त्वितः
गुरुत्वे हरिगोविन्दं यूयं गत्वाभिषिञ्चत ॥ ४५ ॥

[redacted] मत्सुतो दुष्टजनेषु दण्ड-
दाता च निर्यातयिता च वैरम् ॥

---

१. लोलो—क०
२. बन्ध—क०

विनिग्रहादस्य खलस्य सद्य-
स्तपःक्षयो नाभिमतो यतो मे ॥ ४६ ॥

शिष्यास्तत्र गताः स्थितांस्त्वदितरानूचे गुरुः सादरं
कार्यं गोमयगोमुखं कुसलिलैस्तद्भाव कार्यं द्रुतम् ॥
शोको मास्तु मनोरथं तु भवतां कर्ता तनूजो ममे-
त्युक्त्वा[1] तैर्विहिते तथा क्षितितले सुष्वाप वस्त्रावृतः ॥४७॥

जहौ प्राणान् योगबलादनायासेन तत्क्षणं
जीवनं मरणं चापि योगिनामैच्छिकं[2] यतः ॥ ४८ ॥

इरावत्यास्तटे तस्य [3]निर्हृत्यालंकृतां तनुं ॥
शिष्याश्चक्रुर्यथाशास्त्रं दाहमत्यौर्ध्वदेहिकम् ॥ ४९ ॥

निशम्य हरिगोविन्दः परलोकगतिं पितुः
विह्वलो विललापोच्चैस्तातेति मुहुरुच्चरन् ॥ ५० ॥

स धैर्यमालम्ब्य विदीप्तरोपो
[4]लाहौरसञ्ज्ञं नगरं जगाम ॥
जहाँगिरं प्राप्य जगाद धृष्टो
न्यायोपपन्नं वचनं प्रवीणः ॥ ५१ ॥

निरागसो मे जनकस्य राजन्
यश्चन्द्रलालेन वधो व्यधायि ॥
दत्वा विषं तस्य नृपासनस्थो
ददाय दण्डं न कृतः श्रुतश्च ॥ ५२ ॥

---

१. त्युक्त्वा—क०
२. मैच्छिकं—क०
३. निर्हृत्या—क०
४. लाहोर—क०

यः क्रोधलोभादिविमूढबुद्धि-
धर्मव्यपेतं नृपतिर्विदध्यात् ॥
उद्घोष्यते तस्य फलं प्रसिद्धं
राज्यावसाने नरकेषु वासः ॥ ५३ ॥
यच्चाप्युपेतं वसु ते प्रदातुं
न तेन तद्दत्तमसत्तमेन ॥
नार्थो न धर्मः फलमस्य जातं
यशस्विनः प्रत्युत तेऽयशश्च ॥ ५४ ॥

जहाँगिरो महीभर्ता तदेदमवदद्वचः ॥
चन्द्रलालेन बद्धस्स तवाश्वासनमिच्छता ॥ ५५ ॥

उवाच हरिगोविन्दो गृहाण बहुल वसु ॥
सकुटुम्बं चन्द्रलालं मह्यमर्पय भूपते ॥ ५६ ॥

कुटुम्बयुक्तं स तु चन्द्रलाल
नृपेण दत्तं समुपेतकालम् ॥
प्रपीडयामास महेक्षुयन्त्रे
भवत्यनर्थो महतां हि मन्योः ॥ ५७ ॥

निपात्य भवनं तस्य कारयामास वेश्म यत् ॥
श्मश्रूला यवना यत्र सायं प्रातर्नदन्त्यलम् ॥ ५८ ॥

गोविन्दवालमागत्य प्राहिणोद्वसु भूभृते ॥
युयुत्सया कर्त्तुपुरं नगरं च न्यवेशयत् ॥ ५९ ॥

आगरां हरिगोविन्दो गतस्तत्र जहाँगिरः ॥
स्थितस्तेनैव नगर लाहोराख्यं सहाव्रजत् ॥ ६० ॥

तत्रायाचन्नृपो द्रव्यं मम नास्तीति सोऽवदत् ॥
निबद्ध इन्द्रप्रस्थं च नीतस्तेन तथागराम् ॥ ६१ ॥

आखेटार्थं गुरुरयगतो रक्षिभिर्नोपलब्ध-
स्तैरन्विष्टो दिशि दिशि पुनर्लक्षितः स्वे निवेशे ॥
भूयो[1] गत्वा निजगदुरिमे तस्य शक्तिं विचित्रां
मन्त्रिश्रेष्ठैः सममकवरस्यात्मजोऽमन्त्रयद् यत् ॥ ६२ ॥

निश्चित्य मन्त्रिभिर्नीतो दुर्गं ग्वालियराभिधम् ॥
ररक्षू रक्षिणो दक्षास्तत्र रात्रिंदिवं च तम् ॥ ६३ ॥

पर्यङ्कतो यवनभूमिपतिः पपात
केनापि पातित इव प्रसभं निशायाम् ॥
प्रातः ददर्श नु स्वयञ्च दशास्ववारा
सार्धं गताः प्रथममेव तु शिष्यवर्गाः ॥
द्वारे निरीक्ष्य नृपतेः स च मत्स्यलक्ष्यं
विव्याध लोहवलजं[2] च शरेण धन्वी ॥ ६४ ॥

विव्याध हरिगोविन्दो मत्स्यलक्ष्यं परिप्लवम् ॥
दुर्गद्वारं लोहमयमिपुणेति नृपोऽशृणोत् ॥ ६५ ॥

व्याविध्य हरिगोविन्दमानयेति महाचमूम् ॥
यवनानामतिक्रुद्ध आदिदेश जहाँगिरः ॥ ६६ ॥

सेनया चतुरङ्गिण्या परितस्त्वरितं गताः ॥
गोविन्दबालमरुन्धन् यवनाबद्धदुर्मदाः ॥ ६७ ॥

हरिगोविन्दतनयाः पडासन्नतिविश्रुताः ॥
गुरुदत्तो महाशूरस्तेजस्वी ख्यातपौरुषः ॥ ६८ ॥

तपस्वी सुन्दरतनुर्ज्ञानी तेगवहादुरः ॥
धैर्यमल्ल इतिख्यातो णीराय इति विश्रुतः ॥ ६९ ॥

---

१. भूयं–ख०
२. वलयं–क०

श्रीमानटलरायश्च तथा सूरतसिंहकः ॥
सर्वे जितेन्द्रियाः शूराः क्षत्रधर्मपरायणाः ॥ ७० ॥

गुरुदत्तोऽथ निजया सेनया सह निर्गतः ॥
अह्ना जघान [1]सकलान् यवनान् रोषकारिणः ॥ ७१ ॥

चारैर्निवेदितमिदं यवनेश्वराय
सैन्यं समग्रमवधीद् गुरुदत्तनामा ॥
स धृष्टघातुरचितान् दृढसप्तपङ्क्ता-
नेकेन विध्यति शरेण धनुर्धरोद्धः[2] ॥ ७२ ॥

जहाँगिरो नाम महीमहेन्द्रः
क्रोधेन रक्तेक्षण आरभाषे ॥
प्रयातु सेना महती ममैनं
दुरासदं क्षत्रमुनिं निहन्तुम् ॥ ७३ ॥

सेनापतिर्मीरपदप्रसिद्ध
आदाय सेनां महतीं जगाम ॥
गोविन्दवालं परिहृत्य पुत्रैः
सार्धं गुरुः कर्तृपुरं ससार ॥ ७४ ॥

रुद्धे कर्तृपुरे म्लेच्छैर्हरिगोविन्द आपतत् ॥
सेनया चतुरङ्गिण्या पुत्रैः पार्थसमैः समम् ॥ ७५ ॥

चतुर्भिर्दिवसैस्तेन वाहिनी सापि सादिता ॥
पातिता भूधराकारा करिणो बाणवृष्टिभिः ॥ ७६ ॥

श्रुत्वा जहाँगिरनृपस्तमुदीतमन्युः
पारीन्द्रखानमवदत् पृतनाधिनायम् ॥

---

१. निमिषेण–क० ।
२. ξ–क० ।

शूरैः प्रयाहि परिदृष्टपराक्रमैस्त्वं
तं शाहुजं जहि नहि प्रसहेम स त्वाम् ॥ ७७ ॥

पारीन्द्रखानो यवनध्वजिन्या
गत्वा द्रुतं कर्त्तृपुरं रुरोध ॥
गुरुः स्वपुत्रैः सहितः ससैन्यो
दैन्योज्झितो योद्धुमगादनेन ॥ ७८ ॥

समरो बभूव समरोपयोस्तयो-
र्यवनार्ययोर्निशि दिवा निरन्तरः ॥
परिपन्थिनामथ विमथ्य वाहिनीं
गुरुरामदामः पृतनापतिं प्रति ॥ ७९ ॥

शिशिक्षे हरिगोविन्दादस्त्रविद्यां पुरा चिरम् ॥
पारीन्द्रखान तां सर्वां दर्शयेति गुरुर्जगौ ॥ ८० ॥

द्रोणार्जुनाविव धनुर्धरताधुरीणौ
शस्त्रास्त्रवर्षतुमुलं दधतुर्मृधन्तौ ॥
छित्त्वा शरानथ गुरुः करवालपातात्
पारीन्द्रखानयवनं विदधे द्विधा तम् ॥ ८१ ॥

अवरुह्य हयात् खड्गे संयोज्य वपुषोऽस्य तु ॥
कलिमां पठ पारीन्द्रेत्यूचे संजीव्य तं गुरुः ॥ ८२ ॥

पारीन्द्रखानयवन इत्यूचे तं पुरः स्थितम् ॥
अधुना तरवारिस्ते कलिमा म ततोऽहसत् ॥ ८३ ॥

पप्रच्छ पितरं तत्र गुरुस्तचः कृताञ्जलिः ॥
पारीन्द्रमुपगम्याशुं भवता हसितं कुतः ॥ ८४ ॥

तेनोक्तं मम शिष्योऽयं मह्यं द्रुह्यति निर्भरम् ॥
संजीव्य हसितं तेन मया तत्फलदर्शनात् ॥ ८५ ॥

कतिपये यवनास्तु पलायिता
यवनराजमिदं जगदुर्गताः ॥
तव चमूर्निहता हतनायका
स तु निशम्य न किञ्चिदभापत ॥ ८६ ॥

संमन्त्र्य पुत्रैर्गुरुदत्तमुख्यै-
स्त्यक्त्वा गुरुः कर्तृपुरं जगाम ॥
शतद्रुतीरे [1]कहलूरदेशं
न्यवेशयत् कीर्तिपुरं प्रवीणाः ॥ ८७ ॥

उवास सुखिनस्तत्र जलपर्वतदुर्गमे ॥
अभिषेणयितुं योग्ये यवनैर्न कदाचन ॥ ८८ ॥

तं सर्वे पर्वतात्रासा [1]राजानमुपतस्थिरे ॥
निर्वैरः सर्वभूतानां पूतात्मा हसितोऽभवत् ॥ ८९ ॥

शिष्याः केचन पश्चिमादुपगता देशादवोचन् यत[2]
ईरानाभिधदेशतो हयवरो [3]पुष्पमम्यमम्याहृतः ॥
सोऽकस्मादटकैर्भटैरपहृतो म्लेच्छेश्वरस्योद्भटे-
दुर्गे तं च लहौरवर्तिनि धृतं[4] प्रत्याहर त्वं गुरो ॥ ९० ॥

1. कहलूरो नाम देशः ।
१. राजान उपतस्थिरे—क०
२. यवना—क०
३. पुष्पम्पुम—ख०
४. विधृतं—ख०

कश्चित् कफल्लक इवातितरां समग्रे
चौर्ये [1]चिराय चतुरो विधिचन्द्रनामा ॥
आहूय तं गुरुरिदं निजगाद चौर्य-
पापानि मार्जय चिरेण समर्जितानि ॥ ९१ ॥

लाहौरदुर्गेऽपहृतो मदीयो
म्लेच्छाधिराजेन हयो निबद्धः ॥
तमानय त्वं विधिचन्द्र बुद्ध्या
क्षमोऽसि वेषं विविधं विधातुम् ॥ ९२ ॥

तथेति तेनोक्तमथ व्यधायि
वेशो महानश्वदमप्रणेतुः ॥
कशाकरः ख्यापितशालिहोत्रो
लाहौरदुर्गं प्रविवेश यत्नात् ॥ ९३ ॥

दुर्दमं हयमन्यैस्तं ख्यातो दमनकर्मणि ॥
जहाँगिरस्य नृपतेर्दमयामास शासनात् ॥ ९४ ॥

दान्तो हयस्तेन न भूरिकालाद्
म्लेच्छाधिपस्तस्य तुतोष तस्मात् ॥
आज्ञापयचारय राजमार्गे
हयं भयं यत्र गजादितः स्यात् ॥ ९५ ॥

द्वित्राण्यहानि तुरगं स तु चारयित्वा
प्रत्याहरन्नल [1]इवाश्वरहस्यशौण्डः ॥
[2]किं प्राप्नुवन्तु [3]कुहयास्तमनुद्रुता ये
काकाः कथं नु गमने गरुडं लभन्ताम् ॥ ९६ ॥

---

1. रहस्यशौण्डः—रहस्यज्ञाता ।

१. विराय—ख०

२. मिप्राप्नुवन्तु—क०     ३. कुपुयस्त—क०

चतुर्भिः प्रहरैरश्व आनीतो गुरवेऽर्पितः ॥
उच्चैःश्रवा इवापूर्वः सर्वेषां कौतुकप्रदः ॥ ९७ ॥

गुरुस्तं दानमानाभ्यां कृतज्ञः समतूतुषत् ॥
वशश्च विधिचन्द्रस्य चन्द्रवद्विमलप्रभो ॥ ९८ ॥

सभायां जायमानायां वार्तायामेकदा गुरुः ॥
सस्मार नानककथां प्रसङ्गादागतां हृदि ॥ ९९ ॥

शिष्या ऊचुः स्थापितास्ते भवता स्थानरक्षिणः ॥
योगिभिर्मारिता योगैः केचित् केचित् पलायिताः ॥१००॥

स्थाप्यतामपरस्तत्र तैरधृष्यो दुरासदैः ॥
नूनं पातितकर्णास्ते स्वीचिकीर्षन्ति तां पुरीम् ॥१०१॥

गुरुरूचे प्रभातेऽहं वीक्षिष्ये यमिहोत्थितः ॥
तमेव प्रेषयिष्यामि तेषां शल्यं सुदुर्द्धरम् ॥१०२॥

अन्येद्युरुत्थितः प्रातर्गुरुर्हरिगुरुं स्मरन् ॥
ददर्श बहिरागच्छदलम्मतमुपस्थितम् ॥१०३॥

प्रससाद जहास चातिमात्रं
स शिरस्तं प्रददौ च सुप्रमालाम् ॥

निजगाद गुरुर्मयाभिषिक्त-
स्त्वमिदानीं व्रज योगिनां जयाय ॥१०४॥

अलम्मतो गुरुं नत्वा चामराभ्यां सुवीजितः ॥
जगाम नानकमतां सतां संघेन संगतः ॥१०५ ॥

आगतं योगिनो दृष्ट्वा परिवारेण भूयसा ॥
तमपृच्छन् प्रव्रजितः कस्मिंश्चास्ति भवान् पथि ॥१०६॥

तूष्णीमेव ततस्तस्मिन् प्रविष्टे सदनं बलात् ॥
नानकस्य मतस्थोऽयमिति तेऽपतस्थिरे ॥१०७॥

मूलकर्म विविधं न्यदधुस्ते
तत्र च स्वपिति अस्त्रमभुञ्जन् ॥
इन्तरीतिरिव दैवहतानां
तत्क्रिया विफलतामखिलाऽगात् ॥१०८॥

राजानमूचुः स्थलनस्मदीयं
हरत्ययं कश्चन नानकीयः ॥
निर्णेतुमागत्य समाधिनिष्ठं
दूरादलम्मतमसौ ददर्श ॥१०९॥

उपरतसमाधिमवदत् प्रणम्य राजा कृताञ्जलिर्हि यत् ॥
स्थलमेतद्भवदीयं किमुतैषां भिन्नकर्णानाम् ॥११०॥

अलम्मतेन गदितं नानकस्य गुरोः स्थलम् ॥
आप्तोक्तं प्रत्ययः कोऽत्र पुनस्तेनेदमीरितम् ॥१११॥

पादुका कुब्जयष्टिश्च पात्रं कूपेऽस्ति नो गुरोः ॥
नृपेण दर्शयेत्युक्ते दर्शयामास सोऽखिलम् ॥११२॥

भिन्नकर्णनिवहो नृपमूचे
निर्णयोऽस्तु कृतकैः कथमेतैः ॥
मेदिनी वदति यस्य तु साक्ष्ये
भूपतेः स्थलमिदं हि तदीयम् ॥११३॥

ततः सर्वेषु शृण्वत्सु मेदिन्या उत्थितो ध्वनिः
नानकस्य मही मेयमियं सिद्धमता मता ॥११४॥

अलम्मतोऽब्रवीदेतदिदं भूयो निरीक्ष्यताम् ॥
योगी वदति मेदिन्यामवकाशे निवेशितः ॥११५॥

खनकैस्य मेदिनी विदीर्णा
ददृशे गर्तगतस्तत्र योगी ॥

कुपितो नृपतिर्जगाद पापाः
स्थलमर्हन्ति कुयोगिनो न धूर्ताः ॥११६॥

अलम्भतं प्रतिष्ठाप्य महान्तं यत्र भूपतिः ॥
आदिशद् द्वादशग्रामान् सत्कर्तुमतिथीन् सदा ॥११७॥

अलम्भतस्य शाखैका नानकस्य मतेऽभवत् ॥
उदासिनास्तदीयाश्च प्रचरन्ति समन्ततः ॥११८॥

गुरुदत्ताय दत्तोऽस्य श्रीचन्द्रेण प्रसादतः ॥
बाभूहसननाम्नोऽपि पन्थाः प्रादुरभूयतः ॥११९॥

विधिचन्द्रचोरवरिवस्यया गुरुः
प्रससाद्‌ चेदमवदत् कृतस्मितः ॥
अधुनापि चौर्यमनुतिष्ठति क्वचित्
स परोपकारफलकं तदुक्तवान् ॥१२०॥

रात्रौ कुत्र कृतं चौर्यमिति पप्रच्छ तं गुरुः ॥
सोऽवदत् सन्धिवेधेन प्राविशं सदनं महत् ॥१२१॥

तस्मिंश्चान्यचरावन्धौ दरिद्रौ विप्रदम्पती ॥
अविवाहादसीदेतां कन्याया युवतेर्भृशम् ॥१२२॥

विदारयन्ती हृदयं तयोस्तु
गिरा गिरीणामपि वा निशम्य ॥
धिश्यस्य गेहादपहृत्य तूर्ण-
मदां सहस्रद्वितयं दयालुः ॥१२३॥

प्रससाद गुरुः शिरस्यधाद्
विधिचन्द्रस्य करं कृपाकरः ॥

प्रकृतिः स निजां परित्यज-
न्नचिरात् साधुरभूद् हताशुभः ॥१२४॥

मृगयां गुरुदत्त आश्रयन्-
नवधीद्विप्रगवीं मृगभ्रमात् ॥
अवलोक्य च तामजीवयत्
पितरं सर्वमुपागतोऽवदत् ॥१२५॥

पिता भृशं कोपमुपागतोऽवदत्
कुतस्त्वया सिद्धिरियं प्रदर्शिता ॥
द्विजेरिता गोवधनिष्कृतिः कुतो
कुतो न होमव्रजभूरिदानतः ॥१२६॥

नृपर्षयः पूर्वमतीव शक्तयो
बभूवुरुच्छास्त्रमतिं न चक्रिरे ॥
कदाचिदंहस्युदिते समाचरन्
व्रतं वसिष्ठप्रमुखद्विजेरितम् ॥१२७॥

त्यजाम्यहं त्वामहमेव वा त्वया
विसर्जितः किञ्चन यामि काननम् ॥
स्वतन्त्रतामाचरता त्वया मता-
गहं न पृष्टः पितृगौरवादपि ॥१२८॥

गुरुदत्तस्तु निर्विण्णः पितुरग्रे कृताञ्जलिः ॥
तत्याज देहमध्वन्यो रात्रिवासगृहं यथा ॥१२९॥

हाहाकारो बभूवाथ गुरुदत्तो निम्नगामुरः ॥
विलप्य हरिगोविन्दो जगाद भृशदुःखितः ॥१३०॥

परुषं न कदापि पुत्र हे
शिशुतातस्तव भाषितं मया ॥

इदमद्य विनिर्गतं मुखाद्

मम कस्मात् सहतां भवान् कृती ॥१३१॥

अनुनेतुमतोऽनुगम्यते

प्रियपुत्रं न मया कुतोऽधुना ॥

हरिरायमधास्व मे पदं

गुरुदत्तस्य भृशंसि संमतः ॥१३२॥

स्वपदं हरिरायाय पौत्राय प्रददौ गुरुः ॥

इन्द्रप्रस्थेश्वरोऽस्मभ्यं द्रुह्यतीति स उक्तवान् ॥१३३॥

अकुतोभयोऽसि हरिराय विद्वपो

विलयं व्रजंत्विति गुरुस्तमब्रवीत् ॥

सरितस्तटे व्यथितकन्दरानघन्

विजहौ स तत्र किल सप्तमे दिने ॥१३४॥

सिंहासने[1] सदसि संस्थितिमाततान

सद्भिः सदा परिवृतो हरिरायनामा ॥

वस्त्रैर्महार्हमसृणैरधिराजयोग्यैः

संशोभितो मुकुटकुण्डलकङ्कणाद्यैः ॥१३५॥

ग्रन्थपारायणं प्रातः सायं शुश्राव सत्कथाम् ॥

कदाचिन्मृगयां यातो जग्राह न मृगान् हनन् ॥१३६॥

अश्ववारसहस्राभ्यां निर्जगाम समन्वितः ॥

हरिरायो न मांसाशी पुपोष हरिणान् धृतान् ॥१३७॥

अजगरमवलोकयाञ्चकार

क्वचिदाखेटगतो धृतः स शिष्यैः ॥

---

1. "क" इति पत्र्ये मुमः ( फटा हुआ ) ॥

१. पुटं–क०

क्षतसकलतनुं पिपीलिकाभिः
सपदि चकर्त शिरोऽस्य चार्धचन्द्रात् ॥१३८॥

पृष्टं शिष्यैरेषजन्मान्तरे क-
स्तेन प्रोक्तं पण्डितोऽद्भुतविद्यः ॥
शिष्याः सेवां चक्रुरग्राह्यविद्या-
स्तेनाग्लानि क्रव्यमन्यग्रमस्य ॥१३९॥
( विमानैस्तैजसान् लोकानेष याति प्रशान्तधीः ) ॥
शास्त्राभ्यासप्रभावेण मच्छस्त्रमरणेन च ॥१४०॥
कदाचिदूचे स्वजनान् सभायां
सुखं स्थितः शाहजहाँ महीशः ॥
ममेप्सिता वारणकुम्भमुक्ता
नवं च मासप्रमितं लवङ्गम् ॥१४१॥
हारीतकीया खलु चेतकीति
षडंगुलारे न च ते करस्था ॥
अन्वेषितं मन्त्रिवरैश्चिराय
द्वीपान्तरेऽपि त्रितयं न लब्धम् ॥१४२॥
अथावदत् कोऽपि विशेषवेत्ता
समस्तमास्ते हरिरायपार्श्वे ॥
लिख त्वमस्मै विनयेन पत्रं
स दास्यति प्रीतिवशाच्च भीतेः ॥१४३॥
प्रतिष्ठितः कोऽपि समाजगाम
पत्रं तदीयं परिगृह्य दत्तः ॥
तद्वाचयित्वा हरिरायनामा
जगाद देयं यवनाय नैतत् ॥१४४॥

---

१. क्रव्य-च० ।

तथा यथासौ विनयाभिधोऽयं
महामनोभिर्दुरपास एव ॥
ददौ ततस्तत्त्रितयं वदान्यै-
र्देयसदा आत्मापि न याजकेभ्यः १ ॥१४५॥

मुक्ता। शरच्चन्द्रमनोभिरामा
नवं च मासप्रमितं लवङ्गम् ॥
तोलैश्चतुर्भिर्दशभिश्च पथ्या
मिता धृता सर्वरुजां निहन्त्री ॥१४६॥

विलोकितं सर्वमिदं नृपेण
नतश्च पश्चादुपविश्य चोक्तम् ॥
अहं महीशो ननु नाममात्रं
रत्नस्य पात्रं यतयः किलैते ॥१४७॥

दारासक्तेहेन सुतेन तस्य
तदेदमुक्तं वद तातमेवम् ॥
ये संस्थिता नानकसाहमार्गे
'तत्तेभ्य ईर्ष्याऽतुलसिद्धिमद्भ्यः ॥१४८॥

ज्वालां दिदृक्षुर्भगवान् गिरिर्ययौ
परः सहस्रान् पथि वीक्ष्य मानवान् ॥
पप्रच्छ कं द्रष्टुमिमे व्रजन्ति भो
जगद्गुरुं ते' हरिरायमब्रुवन् ॥१४९॥

स च प्रचलितो द्रष्टुं संकल्प्येति स्वमानसे ॥
सत्यं जगद्गुरुं वन्द्यां पश्येयं चेचतुर्भुजम् ॥१५०॥

---

१. गुप्ते–क० ।

चतुर्भुजं धारयन्तं शंखं चक्रं गदां धनुः ॥
ददर्श हरिरायं स मेलकेन समं गतः ॥१५१॥

उवाच चकितो दासं मां कुरुष्वेति संततः ॥
हरिरायेण गुरुणा तत एतदुदीरितम् ॥१५२॥

श्रीचन्द्रसिद्धमवलोकय देव-गेहं
गत्वा गुरुं मिहिरचन्द्रमपि प्रसिद्धम् ॥
यातः स तौ समवलोक्य निजं सुशिष्यं[1]
मां कल्पयेति विनयावनतो जगाद ॥१५३॥

श्रीचन्द्रेण तदा प्रोक्तस्तस्मै मिहिरचन्द्रकः॥
उदासिदीक्षामदिशच्छिरस्त्रं स्त्रमालिकाम् ॥१५४॥

उवाच हरिरायस्य समीपमुपयाहि भोः ॥
मम तस्य च मा भेदं विद्धि तद्भावितं कुरु ॥१५५॥

आयान्तमेतममलं हरिराय आख्य-
दायाहि भक्त भगवन्नधुना कृतार्थः ॥
प्राचीं दिशं व्रज कुरुष्व गुरुस्थलानि
श्रीनानकस्य मतवार्तिमिराऽस्थितानि ॥१५६॥

स्मरिष्यसि यदा मां त्वं तदा द्रक्ष्यसि तत्र च ॥
ततो गतोयं पूर्वस्यां निजं पन्थानमातनोत् ॥१५७॥

इति श्रीजगद्गुरुनानककथायां नानकचन्द्रोदयसमाख्यायां
सिविमोचनं नाम विंशः प्रस्तावः ॥

---

१. सुशिष्यं-क० ।

## एकविंशः प्रस्तावः

वाग्देवता वसतु मानसपङ्कजे मे
दोषान् विधूय ददती विमलां मनीषाम् ॥
चिन्ता न मे भवति काचन यत्प्रसादा-
दामुष्मिकी च [1]विषयोऽपरमैहिकी च ॥ १ ॥

दारासकूहस्य गुरुर्बभूव
यो मीरशाहेवि यतिः प्रसिद्धः ॥
तेनैकदोक्तं हरिरायतुल्यो
म्लेच्छेषु चार्येषु न कोपि सिद्धः ॥ २ ॥

दारासकूहाय ददौ स्वराज्यं
प्रीतः परं शाहजहाँ महीशः ॥
अयं गुणी काव्यकलानुरक्तो
न निर्भरं प्रौढिमवाप तत्र ॥ ३ ॥

पत्रं लिखित्वा विससर्ज भक्त्या
दारासकूहो हरिरायनाम्ने ॥
आगन्तुमीशे नहि राज्यरोषात्
क्षणे क्षणे त्वां नितरां दिदृक्षुः ॥ ४ ॥

दयैव ते दर्शनदानहेतु-
र्भवस्य भीतिं मम संहरस्व ॥
इदं विलोक्य प्रतिपत्रमस्मै
दिदेश दिव्यं हरिरायनामा ॥ ५ ॥

---

१. विषमापर–ख० ।

भीतिर्न ते कस्यचिदस्ति साधो-
राखण्डितं[1] स्वर्गसुखं तवास्मि[2] ।।
तदेव राज्यं सुधियो गणन्ति
कियद्दिनं किन्तु भुवि प्रभुत्वम् ।। ६ ।।

दारासकूहः प्रससाद यत्र
विलोक्य वात्सल्यमहो मयीति ।।
जगाद तुष्टो हरिराय आगात्
गोविन्दबालं तदनन्तरं च ।। ७ ।।

अवरङ्गजेव उग्रो
दारासाहं व्यवासयद्राज्यात् ।।
गोविन्दबालमागा-
द्धरिराय चेदमयमूचे ।। ८ ।।

अखण्डितं राज्यमदाद् भवान् मे
किमेतदासीदसमञ्जसं नु ।।
गुरुस्तमूचे परलोकसौख्यं
राज्यं मयोक्तं भवता न बुद्धम् ।। ९ ।।

करोति राज्यं मुखकालिमानं
जहौ किल क्षुद्रमहीपतीनाम् ।।
राज्यं यदा वाञ्छति सं विचिन्त्य
दधन् तदा ते समरेण सौम्य ।। १० ।।

नो चेद् विरक्तो वस मे समीपे
विरक्तिभाजां नहि कोऽपि शत्रुः ।।

---

१. अखण्डितं-क० ।
२. तवास्ति-क० ।

दारासकूहस्तमभापतैवं
न कामयेऽहं मुखकालिमानम् ॥ ११ ॥

स्थितश्च तत्रैव तदीयशत्रोः
सैन्यानि तं धर्तुमथागतानि ॥
अहं पलाये सरितं तरीतुं
सैन्यं न शक्येत तथा विधेहि ॥ १२ ॥

उक्त्वेत्ययासर्पदसौ भयेन ॥
रुरोध सैन्यं हरिरायसेना ॥ १३ ॥

आग्नेययन्त्रैः पृतना महापी
स्थितः सहस्रद्वयवाजिवारैः ॥
नीत्वा पुरः कीर्तिपुरं कुटुम्बं
जित्वा स सेनां स्वयमप्ययासीत् ॥ १४ ॥

सेना विनाशितं श्रुत्वा हरिरायेण सङ्गरे ॥
अवरङ्गाख्यनृपतिर्नाख्यत् किञ्चिदमर्षतः ॥ १५ ॥

दारासकूहं स निहत्य यत्नाल्
लिलेख पत्रं हरिरायनाम्ने ॥
राज्यं वितीर्णं भवता प्रसह्य
दारासकूहाय किमेतदासीत् ॥ १६ ॥

सिद्धिस्त्वदीया सकलापि शुद्धा
तूर्णं मदभ्यर्णमतस्त्वमेहि ॥
तस्योत्तरं सोऽपि लिलेख तस्मै
'तस्मै वितीर्णं परलोकभौम्यम्' ॥ १७ ॥

स्वस्यापि तस्यापि विचिन्त्य रात्रौ
ज्ञाता गतिं स्वस्य यमेव गुप्तः ॥

न चागमिष्यामि तवान्तिकेऽहं
नार्थस्त्वया कोऽपि यतो ममास्ति ॥ १८ ॥

उद्धारभारं शिरसि स्वकीये
दारासकृहं तु नृपासनस्थम् ॥
ददर्श रात्राववरङ्गजेयः
स्वप्नमेवं जागरितो रुरोष ॥ १९ ॥

सैन्यं समाहूय जगाद रोषा-
दानीयतां भो हरिरायनामा ॥
चचाल सैन्यं निशि मार्ग एव
यदृच्छया[1] सैन्यपतिर्ममार ॥ २० ॥

अन्यं पुनः सैन्यपतिं ससैन्यं
स प्रेषयामास महीमहेन्द्रः ॥
मृतः स मार्गे दश सैन्यपालाः
कालाननग्रासपदं प्रपन्नाः ॥ २१ ॥

पत्रं लिलेख कपटादवरङ्गजेबो
नम्रत्वगर्भमथ दर्शनलालसात्वम् ॥
तस्य वीक्ष्य बहुधा हरिरायनामा
पुत्रं निजं प्रहितवान् सविधे तदीये ॥ २२ ॥

स कर्ता पुरुषो नाम रामरायापराभिधः ॥
गुरुणा हरिरायेण निगद्येति विसर्जितः ॥ २३ ॥

पत्राणि तस्य बहुधा समुपागतानि
त्वं तत्समीपमुपयाहि बिभीहि नैव ॥

१. यदृच्छया–क० ।

पृच्छेत् स यत्तदभिधेहि न नानकस्य
वाणी त्वमन्यथयितासि च मत्सहायः ॥ २४॥

उदासिभिः श्रेष्ठतमैर्द्द-
स्त्यश्वरथपतिभिः सहितः ॥
स ययौ तूर्ण-
मिन्द्रप्रस्थं तदाज्ञया ॥ २५ ॥

आरामे स्थापितं तं च म्लेच्छराजः समभ्यधात् ॥
स त्रियं वस्त्रमददाद् वपुर्येन विपाद्यते ॥ २६ ॥

न किञ्चिदभवत्तस्य तस्मिन् वाससि धारिते ॥
चित्रीयामास सामर्थ्यं तदीग वीक्ष्य भूपतिः ॥ २७ ॥

अन्येद्युरारामम्रुपेत्य कश्चित्
संछाद्य कूपं वसनेन तत्र ॥
आहूय दूतैरथ रामराय-
मस्मिन्निषीदेति जगाद भूपः ॥ २८ ॥

भूयः कूपे स्थितं तं च रामरायमुदीक्ष्य सः ॥
चकितश्चिन्तयामास म्लेच्छतां नीयतामयम् ॥ २९ ॥

आदाय भोज्यमगमद् यवनोऽतिविद्वाँ-
स्तं स्वैपदे गतमिदं निजगाद नम्रः ॥
भूपेन ढौकितमिदं भवतेऽदनाय
नो नानकस्य यवनायवनत्वमेदः ॥ ३० ॥

रामरायस्तमब्रूत मुद्रेय मोच्यतां त्वया ॥
तथाकृतेऽन्नमभवद् मालतीपुष्पसन्ततिः ॥ ३१ ॥

अन्नं पुष्पत्वमापन्नं दर्शयामास भूपतेः ॥
स नीरजा नृपति. मिदं दुर्दमन्तममन्यत ॥ ३२ ॥

आमन्त्र्यमातिथ्यममुष्य कर्तुं
सोपस्करं प्रेषयति स्म भूपः ॥
छागं च यागं विदधद्भिरिष्टं
रामं पुरस्कृत्य परैश्च लोकैः ॥ ३३ ॥

रामरायोऽवदच्छिष्या छत्रिमान् मांसभक्षिणः ॥
छागस्य मांसमश्नीत संगृह्णीत च कीकसम् ॥ ३४ ॥

यवनैर्नृपतेरुदीरितं
कथमार्यः खलु सिद्धिमर्हति ॥
नृपकार्मणकृन्न चेदयं
मृतमुज्जीवय नामजं तदा ॥ ३५ ॥

गुरवे म्लेच्छराजस्य रामरायोऽददात् पुरः ॥
जंघामेकामजस्यास्य पाकस्योपस्करं परम् ॥ ३६ ॥

रामरायो जगामाथ संसदं म्लेच्छभूपतेः ॥
स उत्थाय ननामाशुं दत्त्वाऽऽसनमिदं जगौ ॥ ३७ ॥

हृदयं सदयं भवादृशां
भवतीति श्रुतमन्वहं मया ॥
अनको नु कथं निपातितः
कृपणोऽहं तु मतीश्वरः परान् ॥ ३८ ॥

मूलकर्मेव ताः पूर्वं सिद्धयो दर्शितास्तु याः ॥
अजो जीवति चेन्मन्ये भवन्तं सिद्धसत्तमम् ॥ ३९ ॥

महानसे मे स्थितमानयन्तु
छागं जगादेति तु रामरायः ॥
तं राजकीया द्रुतमानयंश्च
निगद्यमूचे यवनाधिराजः ॥ ४० ॥

एकया विकलोऽयं किं जङ्घया सिद्धसत्तम ॥
स ऊचे गुरवे दत्ता तव तां सन्दधातु सः ॥ ४१ ॥

व्रीडित इवावनीशो
धनमस्मै भूरि वितताराऽ ॥
न स्वीचकार किञ्चित्
स तेन तुष्टो नृपोऽवादीत् ॥ ४२ ॥

यत्र प्रसीदसि भवे द्रुतमाश्रमं तं
तत्र त्वदीयमवधेहि च किङ्करं माम् ॥
चन्द्रावलीति विदितं चकमे सखेटं
तत्र स्थितं क्षितिभुजाऽपरिवस्यमानः ॥ ४३ ॥

दिदृक्षितो म्लेच्छनृपेण काला-
दभ्याययौ तं खलु रामरायः ॥
ययौ समं प्रीतिवशादथेन्द्रं
प्रस्थं नृपालेन तथा गरां च ॥ ४४ ॥

अष्टं समायामवरङ्गजेनो
[1]विस्तम्भवार्ता स्विदमावभाषे ॥
साधुः परं नानकशाह सिद्धः
कथं त्वया रायवनं निनंन्द ॥ ४५ ॥

म्लेच्छस्य मृत्तिकां मृद्नन्[2] कुम्भकारः करोति हा ॥
घटं भाण्डानीष्टिकाश्च पचत्यग्नौ प्रदीपिते ॥ ४६ ॥

वराकी रोदितीवासौ स्फुलिङ्गैरश्रुमिश्रवैः ॥
जगत्स्नैव जानाति विपाकं कर्मणां परम् ॥ ४७ ॥

---

१. निस्तम्भ–क० ।
२. मृद्नो–क० ।

विधर्ममृत्तिकां[1] मृद्रूनिति पाटोस्ति भूपते ॥
इत्युक्तो रामरायेण जोषमासीद्धराधिप. ॥ ४८ ॥

श्रुत्वेति सर्वं हरिरायनामा
लिलेख सिद्धिं किमदर्शयस्त्वम् ॥
चकर्थ वाणीं किमु नानकस्य
विभिन्नपाठां यवनस्य भीत्या ॥ ४९ ॥

ज्वलन्ती मृत्तिका तस्मै सिद्धितः किं न दर्शिता ॥
सिद्धिः क्वचित् क्वचिद् भीती रीतिरेषा सता नहि ॥ ५० ॥

मदुक्तं न कृत कश्चित् ततस्त्वां विजहाम्यहम् ॥
यथेच्छं गच्छ वा तिष्ठ स्वतन्त्रो यत्र कुत्रचित् ॥ ५१ ॥

न त्वया मे कश्चिदर्थो व्यर्थस्वाकृतभीतिना ॥
जनकाज्ञातिरस्कारः प्रीतिना प्रियनीतिना ॥ ५२ ॥

व्यमनायत वीक्ष्य तन्नितान्तं
पितृपत्रं स इति प्रतीतरोपम् ॥
विमृशन् बहुधोपपत्तियुक्तं
न समासाद यदुत्तरं तु लेख्यम् ॥ ५३ ॥

अश्वं ययाचे नृपतिस्तदीयं
स उक्तवानानय मन्निवेशात् ॥
आनीयमानोऽश्ममयो बभूव
तिष्ठत्यसौ साम्प्रतमागरायाम् ॥ ५४ ॥

मक्काया बदराण्यदान्नरपतिः श्रीरामरामाय तं
स प्रोवाच न कीरचञ्चुदलितान्येतानि सम्यञ्चि भोः ॥

१. मृत्तिकां–क० ।

इत्थं संसदि सम्प्रसार्य बदराण्यत्युत्तमान्याहरत् ॥
पूर्वेभ्यो मधुराणि भूमिपतये सामाजि-भ्यो ददौ ॥ ५५ ॥

इतः पर कीर्तिपुरं यियासा-
म्यनुज्ञया ते नृप भूयतां भोः ॥
नित्यं जगादेति तु रामरा॰ः
स्नेहान्न तत्याज महीमहेन्॰ः ॥ ५६ ॥

अवरङ्गजेबनृपति-
निरगान्मृगया विनोदमुपभोक्तुमनाः ॥
अवलोकयन् विपिनवृक्ष-
लता गुरुरामरायमनयच्च समम् ॥ ५७ ॥

मृगयारसेनगहन गहनं
स जगाम दूरमपहाय चमूम् ॥
अथ वात्यया जलमुचां पटलै-
र्निहिता दिशो न तिमिरावरणा ॥ ५८ ॥

सेनोपलायतहवा करकानिपातै-
स्ते स्फूर्जथोश्च करिणस्तुरगाभ्यधावन् ॥
एको भयेन च हयेन रुद्धितोऽभूद्
वर्षापलव्रणितमर्त्यतनुः क्षितीशः ॥ ५९ ॥

ददर्श विद्युदुन्मेषादेष क्वापि कृतस्थितिम् ॥
रामरायं न तत्राभूद् दुर्दिनं करका वहिन् ॥ ६० ॥

तत्रागतं नृपतिमित्यवदद् गुरुस्तं
सेना ॥ ते त्वमसि किं विकलान्तरात्मा ॥
आयाति कोऽपि समयः क्षितिपाल यत्र
व्यर्थीभवन्ति सकलान्यपि साधनानि ॥ ६१ ॥

अहमस्मीश्वराधीनो
मदधीनोऽधुना भवान् ॥
मां विसर्ज्य भूपाल
गन्तुं कीर्तिपुरं ततः ॥ ६२ ॥

स्वस्थीकृत्य नृपं नित्ये रामरायो निकेतनम् ॥
प्रीत्या विसर्जयामास नृपो दत्त्वा धनं बहु ॥ ६३ ॥

रामरायो न जग्राह धनं तुष्टोऽवदन्नृपः ॥
कृपया नस्त्वदीयानां पुनर्दर्शनमस्तु ते ॥ ६४ ॥

अथागतः कीर्तिपुरस्य पार्श्वे
पत्रं स्वपित्रे स लिलेख भीतः ॥
मह्यं यथाज्ञा भवति त्वदीया
तथा विधास्यामि कृतापराधः ॥ ६५ ॥

हरिरायेण लिखितं त्वं पश्चादेव गच्छ भोः ॥
सिद्धयो दर्शिताः कस्माद् वाणी किं परिवर्तिता ॥ ६६ ॥

लाहौरनगरायायं परीवृत्य [1]गतस्ततः ॥
हरिरायेण संत्यक्ताः शिष्यास्तदनुपायिनः ॥ ६७ ॥

शिष्यान् समाहूय ततः सभाया-
मङ्के दधानो हरिकृष्णसंज्ञम् ॥
पुत्रं गुरुत्वेऽभिषिषेच तस्य
चकार भाले तिलकं प्रसन्नः ॥ ६८ ॥

पूजा कृता शिष्यगणैः स्वयं च
जगाद शिष्यानखिलानुदीक्ष्य ॥

१. नतः—क०।

मत्तो न भिन्नो हरिकृष्णनामा
गुरुर्भवद्भिः खलु भावनीयः ॥ ६९ ॥

एकोत्तरेण स च कुम्भशतेन कृत्वा
स्नानं कुशास्तरणभाजि निविश्य भूमौ ॥
सत्यं हरिं भजत भो विषयाभृपेति
शिष्यान् वदन् विसृजति स्म वपुर्गिरज्य ॥ ७० ॥

न रामरायं हरिराय आत्मनः
यदेकनिष्ठं हरिकृष्णमासयत् ॥
इदं निशम्योत्कमनाजनानना-
न्मही महेन्द्रो हरिकृष्णमाह्वयत् ॥ ७१ ॥

इन्द्रप्रस्थस्य गमने भवतां सम्मतिः कथम् ॥
इत्युक्त्वा हरिकृष्णेन शिष्याः सर्व इद जगुः ॥ ७२ ॥

बालोऽपि त्वं गुरुत्वेन सर्वेभ्यः स्थविरोऽस्यसि ॥
निगृह्य बुद्धया निजया मनःपूतं समाचर ॥ ७३ ॥

मात्रा समं स सम्मन्त्र्य तया सह समागमत् ॥
इन्द्रप्रस्थं नृपाज्ञप्तो राजा कश्चित्तमानयत् ॥ ७४ ॥

स स्थापयित्वा स्वगृहे तमूचे
राज्ञीं निजां कौतुकचुम्बितः ॥
बालोऽष्टवर्षोऽयमिहागतो यः
स सर्वचित्तज्ञ इति प्रवादः ॥ ७५ ॥

राज्ञा तस्येदमुदितं दासी वेषा विसाम्यहम् ॥
यद्यायाति मम क्रोडं तदा चित्तज्ञ एव सः ॥ ७६ ॥

अङ्के तस्याः समागत्य हरिकृष्णः स्वयं स्थितः ॥
राजा प्रतीतस्तद्वीक्ष्य म्लेच्छराजमवेदयत् ॥ ७७ ॥

श्रुत्वा जगाद यवनाधिपतिः सभाया-
मानीयतां द्रुतमसौ हरिकृष्णनामा ॥
वस्त्राणि यानि वितराणि शिरस्तमेकं
गृह्णीत तेषु स भवेद्यदि चित्तवेत्ता ॥ ७८ ॥

रामरायः स्थितस्तत्र नृपाज्ञावस्त्रमानयत् ॥
स्वक्रोडेनैव स नृपा समैवाम्युस्थितामवत् ॥ ७९ ॥

नौकाकारेषु पात्रेषु बालः पञ्चशतेषु सः ॥
शिरस्तं स्त्रीचकारैकं पूर्णेषु विविधैः पटैः ॥ ८० ॥

वार्ता प्रष्टुमना बह्वीर्विसस्मार जनाधिपः ॥
हरिकृष्णं विलोक्यैव तूर्णीकः समपद्यत ॥ ८१ ॥

रामरायो निनायाथ हरिकृष्णं तदास्पदम् ॥
दिनेष्वतीतेषु पुनर्यवनेशस्तमाह्वयत् ॥ ८२ ॥

मातुः समीपमुपगम्य गुरुर्जगाद
दासीमिदं वद जनं न सकम्पदेहः ॥
आर्तो यतोऽयमतिदारुणशीतलाभि-
म्लेंच्छं दिदृक्षुरहमस्मि पुनर्न यस्मात् ॥ ८३ ॥

घोरो ज्वरो बभूवास्य शीतलाः सर्वदेहगाः ॥
दाहो महानतितरां तोदः सूचीव्यथोपमः ॥ ८४ ॥

रामरायो विलोक्येदं म्लेच्छराजममापत ॥
नृपोऽवरङ्गजेवाख्यः स्वयं तं द्रष्टुमागतः ॥ ८५ ॥

त्वां द्रष्टुं यवनपतिः समाजगाम
श्रुत्वेति स्वजनवचो गुरुर्जगाद ॥
न म्लेच्छं मरण उपस्थिते विलोके
लोकेऽस्मिन् हरिरवमासते दृशोर्मे ॥ ८६ ॥

माता रुदत्यमिदधौ सुतशोकतप्ता
हा हा त्वरा तनय ते मम पातकेन ॥
को वा भविष्यति गुरुर्भवतः प्रयाणे
धीरे त्वयि प्रणिहितो जनकेन भारः ॥ ८७ ॥

स मृतः पुनरुत्थाय मातरं समबोधयत् ॥
आगमापायवान् मातः संसारः सारवर्जितः ॥ ८८ ॥

द्रष्टासि मे रूपमिदं शोकं न कुरु निष्फलम् ॥
बकाले नगरे योग्यो गुरुरस्ति गरीयसी ॥ ८९ ॥

रुदत्सु सर्वलोकेषु मृतं विज्ञाय भूपतिः ॥
उदश्रुनयनो दीनः शोचन् स्वगृहमाययौ ॥ ९० ॥

कश्चिद् गुरुं धीरमल्लं कश्चित् तेगबहादुरम् ॥
अणीरायं परो मेनेऽटलरायमथेतरः ॥ ९१ ॥

शिष्यं सुरतसिंहं च श्रद्धया कोऽप्यमन्यत् ॥
अभ्यषस्येत्थमभवद् बकाले कालसम्भवा[१] ॥ ९२ ॥

युग्मम्

कश्चित् सांयात्रिकः पोते भाण्डभूरिधनं नयन् ॥
निमज्जत्युदधौ तस्मिन् प्रति शुश्राव शङ्कितः ॥ ९३ ॥

गुरो त्वदीयमाहात्म्याद् पोतस्तरति चेन्मम ॥
[२]पञ्चशत्या तु दीनारैः पूजां कर्तास्म्यसंशयम् ॥ ९४ ॥

स तीर्णपोतो व्यवहृत्य भाण्डं
[३]बकालमागत्य गु रूननेकान् ॥

१. दीनार पञ्चशतपोते-क० ।
२. कालेन कृता अभ्यवस्थाऽभवदित्यन्वय. ।
३ बकालो ग्रामनाम ।

उदीक्ष्य पञ्चैव ददौ सुवर्णा-
न्यवेक्षितु तेषु गुरुत्वशक्तिम् ॥ ९५ ॥

पञ्च पञ्च सुवर्णानि स्वीचक्रुः सर्व एव ते ॥
ऊचे पञ्चशतीं यच्छ शिष्यं तेगबहादुरः ॥ ९६ ॥

कीदृशीमिति तेनोक्ते गुरुः शिष्यमभाषत ॥
त्वयैव स्वीकृतां दातुं पोते मज्जति सागरे ॥ ९७ ॥

प्रसन्नः स ददौ पञ्चशतीमुच्चैरभाषत ॥
शिष्यैरेको गुरुर्ज्ञेयः सर्वैस्तेगबहादुरः ॥ ९८ ॥

सर्वेऽप्यपूज्यन्त परं गुरुत्व-
प्रयुक्तपूजास्तमेकमापुः ॥
देशान्तरेभ्यो धनिकैः प्रणीता
आपो यथा सागरमत्युदारम् ॥ ९९ ॥

समृद्धिमेतस्य न धीरमल्लः
सेहे जगादेत्यवरङ्गजेबम् ॥
त्वं सार्वभौमोऽसि न चातिशेषे
द्रव्यागमं तेजबहादुरस्य ॥१००॥

आहूय तं ब्रूहि दिगन्तरेषु
शिष्यात् कुतो लुण्ठसि कुण्ठशक्ते ॥
आख्यायसे यत्र नतयो बलेन
गुरुः समस्तेषु जनेषु भोगिन् ॥१०१॥

स कां दर्शयिता सिद्धिं विषयास्वादलम्पटः ॥
धनं गृहाण तं बध्वा शास्ता पाखण्डिनां नृपः ॥१०२॥

आह्वायमेतं प्रणिधाय दूतान्
म्लेच्छाधिपस्तत्र स तैर्न लब्धः ॥

गतोऽत्रसञ्जङ्गलदेश एव
बहूनि वर्षाणि समं स्वकार्यैः ॥१०३॥

तत्रापि चारैरधिगम्य सेनां
निनाय नेतुं यवनाधिराजः ।
स तीर्थयात्रामधिकृत्य यात-
स्तीर्थान्यटित्वाथ जगाम काशीम् ॥१०४॥

गतस्ततः पाटलिपुत्रमत्र
पुत्रोऽस्य जातः सुदिने सुलग्ने ॥
गोविन्दसिद्धो जनकां जगाद
भावी सुतो नानकवन्महात्मा ॥१०५॥

म्लेच्छक्षयं तूर्णमयं विधाता
धाता पताकां गुरुनानकस्य ॥
विहाय तं पाटलिपुत्र एव
बकालकं तेगबहादुरोऽगात् ॥१०६॥

अवरङ्गजेबनृपतेः पृतना
तमुपानिनाय धृतमेकपदे ॥
अथ चारके नियमितं नृपति-
र्वध चोरवद्विरमरक्षदमुम् ॥१०७॥

अब्रूत दूतवदना जगतीगुरुस्त्वं
सिद्धिं प्रदर्शयति यां तपसोपलब्धाम् ॥
नो चेदुपेहि यवनस्य मतं ततं यद्
लोके महम्मदमुखात् स्वयमीश्वरेण ॥१०८॥

मितिराममथामात्यं स प्राहिणोन्नृपसन्निधौ ॥
उवाच गच्छ वक्तव्यं यत्ते स्फुरति मानसे ॥१०९॥

स गत्वा निजगादेदं न नीचो यवनात्परः ॥
श्वासेषु संचरत्स्वार्यः कथं यवनतामियात् ॥११०॥

कलेः सहायेन महंमदेन
कृता यथेच्छाचरणाजना यत् ॥
तदेव युष्माकमतीवरम्यं
मतं ततं धिग्भुवि पामराणाम् ॥१११॥

न च मृतमोस्माकं त्वादृशामसतां पुरः ॥
ऐन्द्रजालिकवत्कर्तुं [1]कौतुकैककदर्थनाम् ॥११२॥

कर्कशानीदृशान्याह सस्मभूरीणि भूभृते ॥
न बिभ्यति नृशंसेभ्यो जना ये जीवनिःस्पृहाः ॥११३॥

आर्याणां धर्महन्ता स प्रकृत्या दारुणो नृपः ॥
आरया मारयामास भित्तिरायं विपाटयन् ॥११४॥

कारागारे रक्षितोऽस्थाद् गुरुश्च
म्लेच्छेशोऽगाद्दक्षिणास्यै दिशे च ॥
मार्गे दुष्टैः खपितो नेतुमेनं
क्रूरान् दूतान् प्रैषयद् दुर्निवारान् ॥११५॥

अथ पाटलिपुत्रस्थं पुत्रमुद्दिश्य पत्रिकाम् ॥
लिलेख सर्वं विज्ञाय त्यागीतेगबहादुरः ॥११६॥

गीता न गोविन्दगुणा वृथैव
जनुर्गतं संप्रति चेतयस्व[2] ॥
चेतो मुकुन्दं भज सर्वकालं
भीतः कचिन्नोज्झति[3] वारि यद्वद् ॥११७॥

---

१. कौतुकैकदर्थं—क० ।
२. चेतमत्वम्—क० ।
३. नोज्झितु०—क० ।

बलं विगलितं सर्वं विहितं बन्धनं दृढम् ॥
ग्राहग्रस्तगजस्येव साम्प्रतं शरणं हरिः ॥११८॥

सहायो विगताः सर्वे सार्थोपार्थः कृतस्तु यैः ॥
अस्यां विपदि नाथो मे रघुनाथो न चेतरः ॥११९॥

पठित्वा पत्रमलिखत् पित्रे पाटलिपुत्रतः ॥
गोविन्दसिंहः सुकृती परलोकं यियासवे ॥१२०॥

बलं ते विपुलं सिद्धं बन्धनं निधनं गतम् ॥
उपाया निरपायास्ते सहायास्त्वादृशाः पितः ॥१२१॥

यशो न नश्वरं क्वापि साधूनां धवलं भुवि ॥
गुरुगोविन्दविजयस्तन्मन्त्रजपसम्भवः ॥१२२॥

वाचयित्वा पुत्रपत्रमूचे तेगबहादुरः ॥
शिष्या सर्वेऽपि गोविन्दसिंहं भज ततो गुरुम् ॥१२३॥

नानकेन गुरुणा गरीयसा
बाबराय किल राज्यमर्पितम् ॥
नाशयामि यवनानहं न तत्
त्वं शिरस्तु विसृजामि सिद्धये ॥१२४॥

कारागारे कोऽपि राजा निबद्ध-
स्तं चाहूतं रुद्रजिष्णुर्जगाद ॥
खड्गेन त्वं छिन्धि तूर्णं शिरो मे
तेन प्रोक्तं पाप मे तत्र कुर्याम् ॥१२५॥

श्रीकृष्ण इव पार्थाय तस्मै ज्ञानमुपादिशत् ॥
गुरुस्ततः सुखड्गेन शिरश्चिच्छेद भूपतिः ॥१२६॥

और्ध्वदैहिकमेतस्य चकार विधिवत् स च ॥
आनेतुमागता दृष्टास्ततो यवनभूपतिः ॥१२७॥

अदृष्ट्वा रक्षिणोऽपृच्छन् क्व स तेगबहादुरः ॥
तैरुक्तं तव हियतिः किमन्तरमवत्स तु ॥१२८॥

द्वित्रैः शिष्यैर्निगदितं परलोकं गुरुर्गतः ॥
गोविन्दसिंहः श्रुत्वेमां वार्तामार्तो रुरुदभृशम् ॥१२९॥

जगाद चेदं नो शिष्या द्वित्रा पित्रा समं मृताः ॥
अधुनालक्षशिरसां पाते राज्यमिदं भवेत् ॥१३०॥

दशामरिष्यंश्चेच्छिष्या जनकेन समं मम ॥
अभविष्यदसंदेहं नानकस्यैव डिंडिमः ॥१३१॥

पुरे स्थितः पाटलिपुत्रसंज्ञके
चत्वारि वर्षाणि जनेन सत्कृतः ॥
गोविन्दसिंहो निजगाद मातरं
स्वमेव देशं जननि व्रजाम्यतः ॥१३२॥

तयेदमुक्तमुत तत्र न व्रज
क्लेशान् बहून् म्लेच्छकृतां न भुञ्ज्महि ॥
सुखं स्थिताः पाटलिपुत्रपत्तने
वसेऽत्र देशे कुजनैरुपद्रुते ॥१३३॥

गोविन्दस्तत एतदुक्त्वा
नायं हि देशः कुहकैर्निषेवितः ॥
अतो व्रयामोऽभिजनं निजं जनं
विलोकयामः सरलत्वभूषणम् ॥१३४॥

नानकमतानुपेतः
पाटलिपुत्रं विहाय सकुटुम्बः ॥
कीर्तिपुरं स गतो भूद्
मासो चालं च निःशङ्कः ॥१३५॥

गिरेरधस्तान्नगरीमानन्दपुरनामिकाम् ॥
निवेश्य स चिरं तस्थौ तत्रैव स्वजनैर्वृतः ॥१३६॥

शिरः केनचिदानीतं शिष्येण स्वपितुः पुरा ॥
स्थापयित्वा स कृतवाँस्तत्रैवायतनं महत् ॥१३७॥

शिष्यानाहूय सकलानेवमेवं गुरुर्जगौ ॥
अधुना परिशिष्टं मे वैरनिर्यातनं पितुः ॥१३८॥

शिष्यैरुक्तं वय सर्वे सज्जाः सज्जनसत्तम ॥
सर्पा इव प्रयास्यामो यवनान् यवनानिव ॥१३९॥

गुरुर्विप्रान् समाहूय मन्त्रशास्त्रविदः शुचीन् ॥
चक्रे देव्या पुरश्चर्यां पञ्चवर्षाणि दारुणम् ॥१४०॥

होमे समाप्ते निरगान् कुण्डादुद्दण्डचण्डिका ॥
सखड्गा तडिदुद्योता होतारो मूर्च्छितास्ततः ॥१४१॥

गोविन्दसिंहो नैवेद्यं ददौ देवी जगाद तम् ॥
खड्गं गृहाण ता या च या च ते कामना भवेत् ॥१४२॥

वक्तुं न शक्तो नयने निमीलिते
गोविन्दसिंहो निपसाद भूतले ॥
देवी ततोऽन्तर्विममाय भूसुरा
गोविन्दसिंहोऽपि निमोहतां गतः ॥१४३॥

निर्वाप्य होमदहनं पयसा गुरुस्तु
भस्मानि कुण्डनिचितानि समुद्दधार ॥
राज्ञो द्वियाग उदगादथ कुण्डमध्यात्
तत्क्षालनो द्रवजलं च ददौ स्वकेभ्यः ॥१४४॥

यैर्यैस्तज्जलमापीतं ते सिंहादतिविश्रुताः ॥
नीलवस्त्राः केशधराः सिंहदर्पास्तरस्विनः ॥१४५॥

यवनेषु निसर्गनिर्दया
द्विजगोरक्षणदक्षिणाश्च ते ॥
बलिनः शितचक्रधारिणो
धरणीं स्वामभिमेनिरेऽखिलाम् ॥१४६॥

अवरङ्गजेबनृपतिर्निशम्य
तद्गुरुमाजुहाव निजदूतवक्त्रतः ॥
स लिलेख दुर्जन कथं पितृद्रुहः
पतितस्य तेऽन्तिकमहं व्रजानि रे ॥१४७॥

क्रुद्धेन तेन पृतनाः ! प्रहिता महोग्रा
युद्धं बभूव तुमुलं गुरुवाहिनीभिः ॥
सेना पलायत हता यवनस्य भीता
भूयः समागतवती बत भूतनाथ ॥१४८।

जुज्झारसिंहो रणजित्सिंहः सिंहपराक्रमः ॥
फतेसिंहोऽस्य पुत्रोऽभूज्जोरावरसिंहनामकः ॥१४९॥

जुज्झारसिंहं रणजित्सिंहं गुरुरभाषत ॥
समराय युवां यातं घातं च कुरुतं द्विषाम् ॥१५०॥

सिंहैः सह गतौ योद्धुं तौ मित्रावरुणाविव ॥
दिनार्द्धेनाहवात् शत्रून् दैत्यानिव महाबलान् ॥१५१॥

विजित्य गृहमायातौ पितरं तौ प्रणेमतुः ॥
तेनोक्तं कथमायातौ पुनर्यातं हरन् रिपून् ॥१५२॥

पुनर्गतौ तौ यवनाननेकान् विनिहत्य च ॥
अपरावर्तिनौ वीरव्रतेन स्वर्गमायतुः ॥१५३॥

गोविन्दसिंहमात्रा
श्रुतमुक्तं हा ! हतौ पौत्रौ ॥

प्रहितौ त्वयैव योद्धुं
पुत्रस्नेहं परित्यज्य ॥१५४॥

कोऽगानमुत्थाप्य वदामि कुर्यां
न छद्म मे संनिधिमात्रजत्वम् ॥
आकारयिष्यन्निति सार्वभौमो
गोविन्दसिंहः प्रजिघाय पत्रम् ॥१५५॥

मात्रा च शिष्यैरखिलैस्तदोक्त
युक्तो विरोधो न महीश्वरेण ॥
संधै हि गत्वा शपथेन यस्मा-
द्भवन्तमाकारयति क्षितीशः ॥१५६॥

गोविन्दसिंहोऽभिदधौ शतद्रौ
धनानि मे प्रक्षिपतोऽखिलानि ॥
उपानहोऽत्यन्तपुरातनीश्च
चीराणि पेटीषु च निक्षिपध्वम् ॥१५७॥

द्वादशसहस्रमगमन्
मञ्जूषाः पूरिताः पुरतः ॥
जननी सुतौ च सैन्यं
शिष्याः पश्चाज्जगामायम् ॥१५८॥

मार्गे कुतश्चिद्यवनस्य सेना
समागता तस्य लुलुण्ठ सर्वम् ॥
बद्धाश्च सर्वे नगरे सरिन्दे
माता मृता वज्रकर्णं निगीर्य ॥१५९॥
जोरावरसिंहनामानं फतेसिंहं च तत्सुतम् ॥
बद्ध्वाऽवरङ्गजेबस्य म्लेच्छाः संनिधिमानयन् ॥१६०॥

वनं गतौ दाशरथी इवामू
कान्तौ नितान्तं स निरीक्ष्य भूयः ॥
उवाच बाला च परा धृता[1] मे
न तेन पार्श्वं पितुरेव याताम् ॥१६१॥

तत्र स्थितः क्षत्रिय एवमूचे
बालाविमौ व्यालशिशू इवोग्रौ ॥
धरापतेः कारयितुं प्रणामं
नृपोऽवदन्मानगतं कुमारौ ॥१६२॥

ताभ्यामुक्तं नमावो न म्लेच्छं किन्त्वादिपूरुषम् ॥
सरिन्दे नगरे क्रुद्धो नृपस्तौ प्रत्यवापयत् ॥१६३॥

अगमद्यावनी[2] सेना गुरुं हन्तुमतः परम् ॥
पलायन्तोऽखिलाः सिंहाश्वस्वारिंगत्सवी तदा ॥१६४॥

युद्धं कुर्वन्नपययौ गुरुरल्पबलः शनैः ॥
आससाद महोदग्रा सेनाधर्तुमनाश्च तम् ॥१६५॥

शुष्कां नदीं गुरुरुवाच ममापयाताः
सर्वे सहाया सुहृदो यदि साम्प्रतं मे ॥
साहायकंकुरनदी परिपूरिताभू-
न्म्लेच्छस्य सैन्यमवरुद्धमुवास तीरे ॥१६६॥

सहायकरादित्येषा ख्यायते साम्प्रतं च सा ॥
वर्षास्विव तरङ्गानापूर्यते सकलैर्जनैः ॥१६७॥

गुरुः पर्वतमारूढः पर्वतीयैः परिच्छदः ॥
यवनैर्लुण्ठितश्चास्य न धनं क्वाप्यदृश्यत ॥१६८॥

---

१. पुता–ख० ।
२. यवनी–क० ।

द्वात्रिंशतिरवारुन्धन् सामन्ताः पर्वते च तम् ॥
श्रीकृष्णमिव गोमन्ते जरासन्धानुयायिनः ॥१६९॥

अष्टादशसहस्राणि सैन्ये यस्याभवन् द्विपाः ॥
समागम्याथ तं हन्तुं गन्तुं तं चकमे गिरिम् ॥१७०॥

गोविन्दसिंहस्य शरो बिभेद
क्रोशद्वये लक्ष्यमलक्ष्यमाणम् ॥
अथार्धचन्द्रेण स वीक्ष्य दूरा-
च्चकर्त सामन्तशिरः शरेण ॥१७१॥

अन्यस्याभिमुखं यातुः शरेण स शिरोऽच्छिनत् ॥
निहताः सप्त सामन्ता गुरुणा सप्तभिः शरैः ॥१७२॥

पयस्तान् पाययामास रात्रौ शिष्यान् पिपासितान् ॥
धैर्यं दत्त्वा गुरुर्देवीं ध्यात्वेदं निजगाद च ॥१७३॥

त्वामम्ब सर्वाममरान्विहाय
समाश्रितोऽहं कृतभूरिभावः ॥
विपद्गतं मां त्वमुपेक्षसे चेद्
वदस्व मातः कतमा गतिर्मे ॥१७४॥

सप्तसिंहान्समादाय मध्येसेनं गुरुर्गतः ॥
गोविन्दसिंहो व्रजतीत्यवदत् कोऽपि पामरः ॥१७५॥

तस्मै स्वहस्तवलयं ददौ मणिगणोज्ज्वलम् ॥
पुनस्तथैव वदते द्वितीयं वलयं ददौ ॥१७६॥

तथैव तारमवदत् पामरो डामरो गुरुः ॥
क्रोधेन खड्गमादाय तं विधाय द्विधा गतः ॥१७७॥

सेना पर्वतमारूढा गूढाः सिंहाः स्थितास्तु ये ॥
देवा इव त्रयस्त्रिंशन् ते निहत्य बहून् मृताः ॥१७८॥

यहिर्यवनसेनाया यातो ज्ञातो न केनचित् ॥
गुरुस्तं कालिका देवी प्रत्यक्षं स्वमदर्शयत् ॥१७९॥

अथ म्लेच्छस्य सेनायां काली व्यालीमतस्फुरम् ॥
अन्योन्यं युध्यमानास्ते रात्रावल्पेऽवशेषिताः ॥१८०॥

प्रातर्गोविन्दसिंहस्तु दृष्टो यवनयोद्धृभिः ॥
चमकोराभिधे दुर्गे स्थितः पश्यन्न संभ्रमम् ॥१८१॥

वृत्तसर्वं सार्वभौमाय तदीया लिलिखुस्तदा ॥
पुनरन्या महासेना तेनाज्ञप्ता समागमत् ॥१८२॥

चमकोरदुर्गमरुधन् योद्धुं क्रुद्धा महाम्लेच्छाः ॥
द्वौ सिंहौ द्वौ म्लेच्छौ निजौ गृहीत्वा गुरुर्निरगात् ॥१८३॥

नीलवस्त्रः कुन्तकरो गाहमानः सवाहिनीं ॥
पृष्टो जनैरपूर्वेण तेजसा शङ्कितैस्ततः ॥१८४॥

म्लेच्छाववदतामेप यवनानां गुरुर्महान् ॥
उच्चैस्तिष्ठति शिष्याणां आमयस्यजिघृक्षया ॥१८५॥

गोविन्दसिंहो व्रजतीति पामरो
जगाद तस्मै वलयं ददौ गुरुः ॥
पुनस्तथैव प्रवदन्तमाशुतं
निहत्य खड्गेन भुवि न्यपातयत् ॥१८६॥

आदत्तां वलये म्लेच्छौ गुरुः सेनामलंघत ॥
अन्विच्छन्तो गुरुं पञ्च सिंहाः पश्चादथागमन् ॥१८७॥

ज्ञातास्ते यवनैर्युद्धमुद्धारंश्चक्रुरुद्धताः ॥
अलभत रिपून् हत्वा स्वर्गस्त्री[1] परिरम्भणम् ॥१८८॥

---

1. श्लो० १८८ से १९० पर्यन्त गुरोर्गरिमाणमावेदयति कविः ।
2. स्वर्गस्त्रीपरिरम्भणमलभत = स्वर्गं गत ।

मार्गं रुध्वापरा सेना निविष्टा तां गतो गुरुः ॥
सेनापतिरपृच्छत्तं म्लेच्छावत्रवदतामिदम् ॥१८९॥

उच्चस्थो नो गुरुरयं तेनोक्तं भोक्तुमर्हति ॥
भोज्यं मत्संनिधौ सिद्ध म्लेच्छाववदतां ततः ॥१९०॥

नायं किञ्चिद् दिवा भुंक्ते भगवद्भजने रतः ॥
लवङ्गमेकमश्नाति यामिन्यां सततं यमी ॥१९१॥

पुनर्जगाद सेनेशो मम कौतूहलं महत् ॥
गुरुर्धनुःशरौ धत्ते कथं क्षिपति सायकम् ॥१९२॥

गुरुणा गुणमारोप्य क्षिप्तस्तत्र शिलीमुखः ॥
क्रोशे निपतितो गत्वा स चित्रित इदं जगौ ॥१९३॥

कृपां विधाय महतीं गुरुस्तपतु[1] मेऽन्तिके ॥
म्लेच्छाभ्यामुदितं याति मृगयार्थं वनेऽधुना ॥१९४॥

रात्रावागत्य भक्तस्य तव स्यास्यति सन्निधौ ॥
गते गोविन्दसिंहेऽथ सेनापतिरभाषत ॥१९५॥

नूनं गोविन्दसिंहोऽय च्युतः करतलान्मम ॥
वनं प्रयातु पृतना मदीया तं नियच्छतु ॥१९६॥

ब्राह्मण्या भवने गत्वा गुरुर्भोजनमाचरत् ॥
सप्तसिंहाः समागच्छन् कुतश्चित् तं मदोद्धताः[2] ॥१९७॥

सप्तसिंहा गतां सेनां यावनीमच्छिदन् शरैः ॥
यवना भवनायैव हतशेषाः पलायिताः ॥१९८॥

गुरोः समीपमगमन् सिंहा विजयशोभिनः ॥
वरं वृणुत भद्रं वो गुरुस्तानित्यभाषत ॥१९९॥

---

१. तिपतु—ख० ।
२. मदोद्धताः—ख० ।

त ऊचुस्ते दयास्मासु भवच्चरणसेवनम् ॥
इदं वरद्वयं देयमलमन्यैर्वरैर्गुरो ॥२००॥

शिष्यैरुपेतो बहुभिर्यवनान् विनिपात्य सः ॥
जगाम जङ्गले देशे निवासमकरोच्चिरम् ॥२०१॥

पुत्रौ निवेशितौ कुड्ये श्रुत्वा तत्र शुशोच सः ॥
वैरनिर्यातनायालं द्वारकादासमस्मरन् ॥२०२॥

अवरङ्गजेबनृपतिः समगं
सुचिरस्य दक्षिणादि दिश्यवनोत् ॥
विलिलेख तत्र किल पत्रमयं
परिभाषणं च यवनस्य गिरा ॥२०३॥

भक्तिं गुरोर्बहु बहादुरशाहनामा
चक्रे ततो गुरुरगात् तमिदं जगाद ॥
त्वां सार्वभौममधुना कलयामि सौम्य
क्रूरस्य तस्य विगमो मनसामभीष्टः ॥२०४॥

ततोऽवरङ्गजेबस्य मृतिपत्रमुपागमत् ॥
सार्वभौमत्वमगमद् बहादुरशाहनामकः ॥२०५॥

इन्द्रप्रस्थे चिरं तस्थौ सार्वभौमेन सेवितः ॥
मथुरामथ तेनैव सममेष समागमन् ॥२०६॥

वर्षं स्थितस्तमामन्त्र्य दक्षिणां दिशमागमन् ॥
गुरुर्नागपुरप्रान्ते द्वारकादाससंनिधौ ॥२०७॥

स वैष्णवः सार्धशतद्वयीसमा-
वयाः समासादितमन्त्रसाधनः ॥
अभूत् समग्रेण जनेन वन्दितो
गुरुस्तु तस्यासन आस्त निर्भयः ॥२०८॥

अन्तर्स्सितेन तेनेदं श्रुत्वा वीरा विसर्जिताः ।
चत्वारस्तं समुद्दधृत्य वक्तुं किञ्चिन्न तेऽशकन् ॥२०९॥

गुरोर्गुरुत्वं विज्ञाय स्वयमेव विनिर्गतः ।
पप्रच्छ कस्त्वं भवसि द्वारकादासवैष्णवः ॥२१०॥

अहं नानकसाहोयस्त्वं पुनः कोऽसि सन्मते ।
इत्युक्ते तेन तेनोक्तमहं नानकवन्दकः ॥२११॥

यदि नानकसाहस्य वन्दकस्त्वं तदा मम ।
शिष्यो भवेति तेनोक्तः शिष्यतां स उपागतः ॥२१२॥

केशान् दधार शस्त्राणि गुरुदत्तानि वन्दकः ।
सिंहस्य तस्य शस्त्राणि सिंहा द्रोहादचूचुरन् ॥२१३॥

मूलमुत्पाटयिष्यामि सिंहानामिति सोऽवदत् ।
ऊचे गुरुः कुरु दयां सिंहेषु न रुषं भज २१४॥

पञ्च बाणान् गुरुरदात् तथापि तममापत ।
सिंहान्न स्थापयिष्यामि महामत्सरिणः खलान् ॥२१५॥

गोविन्दसिंहो निजगाद दौष्ट्यं
कर्तासि चेत् पञ्जरबन्ध एव ।
विशीर्णमांसो मरणं गमिष्य-
स्यवेहि मे बन्दकवाचमेताम् ॥२१६॥

गुरुस्तदाभापत कान्हसिंहं
विनोदसिंहं रणदुर्निवारम् ।
यातं युवामस्य सहायभूतौ
देशानयं जेष्यति शत्रुहन्ता ॥२१७॥

वन्दकः सिंहसैन्येन वाहीकानगमच्छली ।
म्लेच्छांस्तद्दुराक्षिणो हत्वा तानकार्षीदात्मसात् ॥२१८॥

पन्थाः प्रवर्तितः स्वीयो विवाहः कौतुकात् कृतः ।
पर्वतीये रणे बद्धः पञ्जरे निधनं गतः ॥२१९॥

दक्षिणस्यामविचलं दिशि चक्रे गुरोः पुरम् ।
अदीव्यदक्षैस्तत्रस्थः मम म्लेच्छेन केनचित् ॥२२०॥

प्रत्यहं वेदमवदद् वैरनिर्यातनं पितुः ।
न करोति सुतो यस्तु तस्यास्तु जीवनं मुखे ॥२२१॥

श्रुत्वा चिरेण यवनो जननीमपृच्छत्
तातः क्व मम मृतो वद सत्यमेव ।
गोविन्दसिंहशरताडित एव मृत्युं
तातो गतस्तव तवेति तदाभ्यधायि ॥२२२॥

अन्येद्युरक्षैर्दीव्यन् स श्रुत्वा त्रिस्तां गिरं पुनः ।
असिधेनुकया द्रुधो तीक्ष्णया त्रिस्तमभ्यहन् ॥२२३॥

असिपुत्रीं करात् तस्य हत्वा तमनयद् गुरुः ।
नृसिंहेनाभियुक्तस्य हिरण्यकशिपोर्दशाम् ॥२२४॥

गुरोर्व्रणः शल्यवैद्यैः स्यूतश्चाप्युपरोहितः ।
नातियाति जनः किन्तु विधेर्विलसितं क्वचित् ॥२२५॥

ददौ गोविन्दसिंहाय शिल्पी कश्चन कार्मुकं ।
तदाकर्षणतस्तस्य व्रणः पुनरभिद्यत ॥२२६॥

परलोकाय गन्तास्मि पूर्णोऽहं दश वर्ष्मसु ।
गोविन्दसिंह इत्यूचे परब्रह्मैकताङ्गतः ॥२२७॥

नन्दलालस्तदापृच्छत् कोऽस्माकमधुना गुरुः ।
कं नमेम च पश्येम कस्मै वार्तां वदेम च ॥२२८॥

ऊचे गुरुस्तु युष्माकं ग्रन्थ एव गुरुर्मतः ।
तं नमेत च पश्येत तस्मै वार्तां वदेत च ॥२२९॥

सप्तखारीमितं चारु चन्दनं च समानय।
आलिप्य भूमिं सलिलैः कुशैरास्तरणं कुरु ॥२३०॥

स्नातो गुरुस्तीर्थजलैः प्रसन्नैः
शस्त्राणि सर्वाणि ततो निवध्य।
शतं तथाष्टौ च्छुरिका दधानः
प्राणानमुञ्चत् कुशसंस्तरस्थ. ॥२३१॥

आरोप्य चन्दनमयीं चितां दग्धो विधानतः।
शिष्यान् विषण्णानागत्य यवनीपतिरुक्तवान् ॥२३२॥

को युष्माकं मृतो यस्मै सिंहाः पश्चात्तपन्त्यमी।
गोविन्दसिंहसंसिद्ध इति तैः प्रतिभाषितम् ॥२३३॥

पञ्चविंशत्यश्ववारैः सह जात्यधुनैव सः।
शस्त्रधारीह पारूढ इति तेनोदितं पुनः ॥२३४॥

अस्ति सञ्चयनं कर्तुं चिन्वन्तस्तस्य बन्धवः।
दाहस्थानेन शस्त्राणि न चास्थीन्युपलेभिरे ॥२३५॥

विजयते विधिशङ्करसेवितः
सकलमङ्गलमूलमनुक्षणम्।
कलयतां हृदि वाचि दृशोः सता
स्मितमुखाम्बुरुहः कमलापतिः ॥२३६॥

एषा कथा निगदिता जगदीश्वरस्य
भक्त्या तपोभिरपि शक्तिमताममीषाम्।
तां ये निशम्य सुधियो मुदमाप्नुवन्ति
तेषां हरिर्हरति सर्वशुभेतराणि ॥२३७॥

श्रीनानकस्य चरितं भरितं जगतीतले।
कार्त्स्न्येन कथयेत् तस्मात् सङ्क्षेपादिदमीरितम् ॥२३८॥

सर्वेषां श्रवणसुखावहा कथेयं
श्रोतव्या सुतसुकृतार्थदानदक्षा ।
ये भक्तिं विदधति नानकेन केन
ते श्रुत्वा सुखमखिलं सदा लभन्ताम् ॥२३९॥

अध्यात्मवादरसिकैरुपसेवनीया
नाना-कथा श्रवणतत्परमानसैश्च ।
जिज्ञासुभिः कलियुगे किल विष्णुभक्ता-
नैषा परैश्च गतमत्सरतामुपेतैः ॥२४०॥

मूलाज्ञानतमिस्रं तापत्रितयं निराकुर्वन् ।
सेव्यः सुजनचकोरैर्नानकचन्द्रोदयो जयति ॥२४१॥

कथिता कविदेवराजनाम्ना
विमलकथा सुधिया च नानकीया ।
तदनु तदनुजात्मजेन तुष्टया
परितः शोधितखण्डिता व्यधायि ॥२४२॥

इति श्रीशाण्डिल्यवंशावतंसत्रिपाठिरघुपतिशर्मतनूजदेवराजशर्मनिर्मिते
नानकचन्द्रोदयेऽङ्गदादिकथायामेकविंशः प्रस्तावः ।
समाप्तश्चायं ग्रन्थः ।
शुभं भूयात् लेखकपाठकयोः ।



# श्लोकानुक्रमणी

ई



उ

फ



ब

